## कवित्तच्छन्दसो गतिः

किन्तु सुमहान् खेदो 'यत्कवीश्वर'वंशधरा अपि नवयुगीयपरीक्षाप्रणाल्या यत्-किञ्चत्संस्कृतं स्पृष्ट्वा, अन्यथा साधारणतया आङ्गलशिक्षाप्रवाहे पतिताः हिन्दीविश्वविद्यालयादेर्विशारदादिपरीक्षोत्तरणेनात्मानं कृतार्थं मन्यमानाः कवित्तादिनिर्माणे साभिमानं प्रवर्तन्ते किन्तु छन्दोगतेः परिशीलनाभावात् षोडश-पञ्चदशभिरेकत्रिंशद्गणनया कवित्तं पूरयन्तस्ते सौष्ठवमस्य च्छन्दसः सर्वदार्थं लुम्पन्ति। 'प्रतिकालेजं' 'प्रतिस्कूलं' 'प्रतिकार्यालयं' प्रत्येकसभासमाज-गोष्ठीसमितिभिः सह कविसम्मेलनानि साम्प्रतमनिवार्याणि संजातानि। विशिष्टसभानां महाधिवेशनेषु वार्षिकोत्सवेषु तु कविसंमेलनानि उत्सवस्य शरीराणीव संवृत्तानि। तदेवं प्रतिविशिखम् ('गलो गली में') प्रतिपदमधिविश्यमानेषु कविसंमेलनेषु छन्दसां दुर्गतिदर्शनादनिच्छतापि नानाविधानुरोधानां बलात्प्रसह्य प्रमुखपदमधिरोप्यमाणेन मया कतिधा पृष्ठम् - 'महोदय! कवित्तस्यास्य गतिर्विकलेव प्रतीयते'। तदुत्तरे प्रोचुस्ते निःसंभ्रमम् -

'श्रीमन्! षोडश-पञ्चदशेति गणितानि मया एकत्रिंशदक्षराणि'।

हन्त, सोयम् 'आम्रान्पृष्टः कोविदारानाचष्टे'। छन्दसो गतिमसौ जिज्ञासितः किन्तु सोयमेकत्रिंशद्वर्णानाक्रन्दति! किन्तु वराकः सोयं षोडशपञ्चदशेत्येकत्रिंशद्वर्णानेव छन्दसोऽस्य लक्षणं जानाति, कोऽस्य दोषः ? निजगुरोः सकाशादपि छन्दोलयं कदाप्यपरिशीलितवतां कविसम्मेलनकवीनां कवित्तविषये स्थाने स्थाने सेयमेव दशा। पण्डित-प्रोफेसरपदवाच्यानामपि सेयमेव प्रगतिः। संमेलनेषु छन्दसोऽस्य दुर्गत्या भृशं परिग्लायता म.म.पं.श्रीगिरिधरशर्मचतुर्वेद-महाभागेन परिहासेऽपि हन्त मर्मस्पृक् समीरितम् - 'कवित्तनिर्माणं पठनं वा संप्रति राजनियमतो नूनं निरोधनीयं स्यात्'।

## संस्कृते कवित्तादीनामवतारणम्

व्रजभाषाच्छन्दसामेवं दुर्गतियुगे, -लोकप्रचलितहिन्दीभाषायामपि छन्दसाममीषां यदा सेयं परिस्थितिस्तदा विरलजननिषेवणीयायां गीर्वाणभाषायामस्यां छन्दांस्य-मून्यवतारयन्नहमुपतिष्ठामि सम्मुखे रसिकसमाजस्य। सर्वतः पूर्वं वर्षावर्णनात्मकमेकं 'कवित्त' वृत्तं दशमवर्षं यावत् पूर्वं प्रकाशितस्य 'संस्कृतरत्नाकरस्य' दशमवर्षीयप्रथमसंख्यायां प्राकाश्यत नूनम्। ततो 'जर्मनयुद्ध' (पूर्वतन) संग्रामोपप्लवशान्तौ जयपुरे महाराजाधिराजश्रीमाधवसिंहदेवस्याज्ञया राजहर्म्यमालायां गोविन्दमन्दिरे जायमानायां सम्राड्विजयसभायां बृटिशविजयवर्णनात्मकं कवित्तमेकमपठ्यत येनाऽप्रीयन्त सर्वे विद्वांसो, नवीनमिति कृत्वा च समभूवंश्चमत्कृताः सर्वे सामन्ता राज्याधिकारिणश्च। तदनन्तरं जयपुरराज्यस्य शिक्षाविभागाध्यक्ष (Director of Public Instruction) पदं यदा पं. श्रीश्यामसुन्दरशर्मा M.A. महाभागोऽध्यतिष्ठत्तदा तदुत्साहसाक्षिणि' शिक्षासप्ताहे' संस्कृतकालेजान्तःप्रतिष्ठापितायां 'पण्डितसभा' यामपठ्यन्त कानिचित्कवित्तानि यानि निर्मत्सरं गुणप्रणयी सोयं सर्वात्मना सुभृशमभ्यनन्दत्। अन्तस्तलं संतुष्यन्तोऽपि मार्मिका विद्वांसो निभृतनिरूढया स्पर्धया वा ईर्ष्यापिशाच्या वा नोदघाटयिष्यन् प्रशंसनाय मुखमात्मीयं कदाचित्, किन्तु मध्येसभं प्रधानाधिकारिण एतादृशीं गुणज्ञतामालक्ष्य स्वस्यापि गुणवेदितां निर्मत्सरतां चाभिनयन्तः प्रशशंसुर्नानाविधैः साधुवादैः।

किन्तु बहिः प्रश्लाघमानाः प्रचुरं प्रोत्साहयन्तोऽपि विद्वन्महाभागा निभृतं क्रूरतमं चालोचितवन्तोऽपि, किन्तु तत्, -सव्यङ्ग्यं साकूतं च। अनेनाप्यहमुपकृतोऽस्म्येव पण्डितमहाभागैः, न नाम खेदितः। प्रथमाधिवेशने यदा मङ्गलात्मकमाशीर्वादात्मकं च कवित्तमपठ्यत तदा बहिस्तत्प्रशंसद्भिस्तैः प्रोक्तम्

– 'सम्यगिदम्, किन्तु ऋतुवर्णनादिषु यथा तस्य चित्रमिवोपस्थाप्यते व्रजभाषाकविभिस्तथा नात्र सुसंभवम्।' चेतसि समासञ्जत्सेयं वार्ता। प्रकटे किञ्चिदनुक्त्वापि तान्, निभृतमेवंविधवर्णनायामकार्षं परिश्रमम्। वसन्तसमयभाविन्याः पण्डितसभाया द्वितीयाधिवेशने समयवर्णनप्रसङ्गेन परिश्रमस्यास्य किञ्चित्फलमश्रावयम्, यथा –

**कोरकिताः किंशुका विकासमुपयातं किल**

**कर्णिकार-कुरबक-काननं प्रकाशते**

**स्रुतसहकाररससीकरसुरभिसुखाः**

**सुमितसमीरभराः सुभगमुपासते१।**

**मञ्जुनाथ मानय मनोभूमहिमानमिमं**

**मारशरमुग्धतया मुनय उदासते२**

**वापी-तट-वाटिका-विहङ्गम-विटपि-वीथी**

**वारिजवनेषु वै वसन्तविभा भासते॥**

**भूरुहा वहन्ते मञ्जुमञ्जरीर्भजन्ते३ चारु-**

**वल्लरी, रमन्ते मधुपायिनोऽद्य मानसे।**

**झम्पामारभन्ते मञ्जुपम्पापुलिनान्तेचराः**

**सुभगसमीराः, संरमन्ते रसिका रसे।**

**काकलीः श्रयन्ते युवकोकिला विलासभृतो,**

**बाणाः संरभन्ते कुसुमेषोरपि१ नीरसे**

**प्रणतिरियं ते, वच्मि भूयः कान्तः! किं ते ?**

**ननु, विरहिदुरन्ते किं वसन्ते गन्तुमीहसे२ ?॥**

ततस्तृतीयाधिवेशने– "व्रजभाषाकवयो 'नायिकाभेद'–रस–भावाद्युपनिबन्धने यथा छन्दस्यस्मि-न्नतिशयं दधुर्न तथा भवेद्भाषायामस्याम्। सत्यं संस्कृतस्य व्याकरणनियमादयोपि भृशं कठिनाः, किं क्रियताम" इत्यादि साकूतमसूच्यत। तदुपदेशामृतेन –

**सायमवकाशमुपलभ्य गृहकार्यभरात्**

**कुसुमचयार्थमुपयाता भयभुग्नाऽहम्**

**परिमृदिता मे तरुलग्ना पश्य शाटिकाऽसौ**

**वृक्षवाटिकायां घनतमसि यदूनाऽहम्३।**

मञ्जुनाथ कुसुमनिलीनैरनुयाताऽलिभिः
सरभसमायातापि विटपविलूनाऽहम्
शङ्कतामलीकं नर्मशाली काममालीजनो
हन्त मधुपालीदत्तदंशा दृढदूनाऽहम्॥
याता निजजनकनिकेतमुपयाता, पति-
रुषसि विदेशान्प्रति याता शयितोऽधुना
श्वश्रू रियमन्धा, निशि शय्यायां निमग्ना भवे-
द्देवरोऽपि कार्यप्रतिबन्धादयितोऽधुना।
मञ्जुनाथ मेघमण्डलेन मेचकाऽऽभं नभो
भवनेऽहमेका न भोः सुस्था भयतोऽधुना
क्षम्यतां दिनान्तसमयागत चतुरपान्थ!
विवशा नितान्तमहमावासे यतोऽधुना४॥
लीना देहशक्तिरपि हीना सुखवासना मे
तनुरनधीना पश्य कियदिव नीयताम्
चक्षुपोरुपैति घनतिमिरमिवाऽद्य नाथ
श्रवसोरपैति शक्तिरलमवधीयताम्।
मञ्जुना त्वदङ्घ्रिकञ्जलम्बनेन मञ्जुनाथ
धृतिरुपयाति हृदि, करुणा विधीयताम्
एतस्मिन्नेमन्द-पुण्यसमयेऽरविन्दसम-
लोचन! मुकुन्द! नेत्रगोचरमुदीयताम्॥१

इत्यादिपद्यानां सृष्टिरभूत्। एवमेव अन्योक्ति-नीति-विनोदादीनां विषयेपि व्यङ्ग्यगर्भा मात्सर्यान्तरितकृपापूर्णा प्रेरणा प्राप्यत पण्डित-महाभागानाम्।

## कवितानिकुञ्जस्य जन्मकथा

एतेष्वेव दिनेषु संस्कृतमुपभाषारूपेण गृहीत्वा ग्रेजुएटपदाधिरूढैः कैश्चित् संस्कृत-भाषाप्रचारविषयमालोचयद्भिः सद्भिः संस्कृतपठनप्राप्तपाण्डित्यप्रमाणनाय साव-ष्टम्भमुदगीर्यत - 'संस्कृतभाषा संप्रति नैतादृशी पर्यवस्थिता, यस्यां प्रचारभाषायामिव शक्यते निर्मातुं साहित्यम्। युगानुकूलसाहित्यनिर्माणं विना च भाषाया जीवनमेव दुर्घटम्। नियमैर्नियन्त्रिता सेयं भाषा नेतस्ततः पदमपि कर्तुं स्वतन्त्रा। सा मृदुताऽस्याः सर्वथा चूर्णीभूता, या हि लोकसाहित्य-निर्माणायोपयुक्ता। न

चास्यां सर्वविधभावाभिव्यञ्जनाय सरलाः शब्दा एव। अत एव प्रचलनरहिता सेयं मृतेति व्यपदिश्यते' इत्यादि।

संस्कृतसेविनामन्येषां हृदि सोयमाक्षेपो मर्माऽऽघातमकरोन्न वेति नाहं जानामि। किन्तु यौवनोत्साहसमुत्तेजितः सोहं नैतत्सोढुमपारयं तदा। प्रत्यक्षं मे समभृद्वादः-'यदि सर्वविधभावाभि-व्यञ्जनाय नास्यां भाषायामुपयुक्ताः शब्दास्तर्हि विश्वप्रचलितायां भवदाराध्यायामाङ्गलभाषायां तु सन्ति? विधीयतां क्षणं द्वयोस्तुलना। कल्प्यतां तावद् यद् भीष्मग्रीष्मस्य प्रचण्डतमश्चण्डकरोऽस्माकं वर्णनीयस्तदा दुःसहनीयतमामिमां सूचयितुं सूर्यवाचकः कीदृशः शब्दः ? सायंकालिकः सुखदः सूर्यो यदा वर्ण्यस्तदा कीदृक् ? यद्ययं न स्यात्तर्हि लोककार्याणि रुध्येन्निति प्रभुत्वमस्य सूचयितुं कीदृक् ? अयं लोकानां सुकृत-दुष्कृतान्यनिमिषं निरीक्षत इति पापिनं कञ्चित्पापान्निवर्तयितुं भावाकूतबोधकः कीदृशः? एवंविधभावाभिव्यञ्जकाः सूर्यवाचकाः कति वा शब्दाः श्रीमदभिनन्दनीयायामाङ्गलभाषायां सन्ति ? 'सन्'शब्दं विहाय सर्वबोध्योऽन्यो मन्ये न भवेच्छब्दः? किन्तु संस्कृतसरस्वत्यां चण्डरश्मि-चण्डांशु-दिनमणि-चित्रभानु-लोकबन्धु-लोकसाक्षिप्रभृतयोऽनेके पूर्वोक्तभावाभिव्यञ्जकाः शब्दाः समवाप्येरन्।

यदीयमव्यवहरणीया संकुचिता च भाषा तर्हि सर्वतो व्यवहरणीयया आङ्गलभाषया सह संघटतामस्य तुलना। "आकाश में जब बादल घिर रहे थे तब मैं संस्कृतसाहित्यसम्मेलन के लिए घर से रवाना हुआ" इत्येकं वाक्यं विश्वतो व्याप्तायां सर्वव्यवहरणीयायां भवदुपास्याया-माङ्गलगिरायां कियद्भिः प्रकारैः शक्यते वक्तुम्? संकुचितायामस्यां संस्कृतसरस्वत्यां च कियद्भिरिति परीक्ष्यतां तावत्। एम्.ए. पदमण्डितो भवान् निखिलानां भवत्सुहृदां साहाय्येन सधैर्यं सोत्साहं च संपूरयतु तदिदम्। अहं च प्रत्यक्षमिह संमुखे स्थितः संपूरयामि कतिचिद्वाक्यानि। तदनुसारमूनचत्वारिंशतद्वाक्यानि-आकाश-मेघ-व्याप्तिक्रिया-गृह-प्रस्थानादीनां पर्यायैस्तत्कालमेव न्यबध्नाम्। इमानि किल कर्तृवाच्यक्रियानिबद्धानि। यद्येषु कर्मवाच्या क्रिया भवेत्तर्हि तावन्त्येवाऽन्यान्यपि वाक्यानि संभवेयुः।

वाक्यानीमानि पण्डितसभायां मया प्रदर्शितानि। मुद्रितानि च प्रसङ्गान्तरेण काश्याः 'सुप्रभात'पत्रेपि। एवमेव भाषाया अस्याः स्तरे स्तरे तादृशं मार्दवमपि विद्यतेऽद्यापि यत्कारणादियं भूमण्डलगतानां सर्वासामपि भाषाणां छन्दस्सु सुमधुरेण प्रकारेण शक्यते निबन्धुम्। नेदं जीवितलक्षणं प्राप्येत सर्वासु भाषासु। सभ्यपरिगृहीता सेयमिंग्लिशभाषैव गृह्यताम्। अस्यां हि, संस्कृतभाषायाः 'शिखरिणी'प्रभृतीनि छन्दांसि यदि कश्चिदुपनिबध्नीयात्तर्हि तानि किं भवेयुः सुश्राव्याणि ? भाषयाऽनया सुसंपृक्तानि च तानि प्रतीयेरन्? किन्तु गीर्वाणगिरायामस्यां सर्वासामपि भाषाणां सर्वाण्यपि छन्दांसि सर्वप्रकारैः समुपयुक्तानि सिध्यन्ति, चेत्समर्थेन संग्रथ्यन्ते। संस्कृतसरस्वत्यास्तदेतदेव सौष्ठवमभित्यं जयितुं कवितानिकुञ्जस्याऽस्याऽऽविर्भावः, यस्मिन् हि सभ्यकोटौ गणनीयानां सर्वासामपि भाषाणाम्, विशेषतश्च 'कवित्त'प्रभृतिषु व्रजभाषायाश्छन्दःसु संदर्शिता संस्कृतरचनापरीक्षा। साफल्यमत्र समधिगतं न वेति तु कवितामार्मिकैः संप्रति परीक्षणीयं स्यात्।

एकप्रकारेणाऽस्य परीक्षा संजातापि। यस्मिन्काले सेयं रचना प्रारब्धा, तदाऽऽसीत्, 'कविमण्डल'-नाम्नी व्रजभाषाकवीनां संस्था जयपुरजनतायामजस्रं जागरूका, यस्याः सोयं जन एव समभूत्परिचालकः। तस्यां हि भाषाकवीनां पुरतः पठितेषु कवित्त-छप्पय-प्रभृतिषु कतिपयेषु छन्दःसु "व्रजभाषाया एव सेयं संस्कृतपदबहुला तादृशी रचना यादृशी 'गोविन्द गोपद द्वन्द्वहर विज्ञानघन धरणीधरम्', 'जे राममन्त्र जपन्त सन्त अनन्त जनमनरञ्जनम्' [तुलसीदासकृतरामायणे अरण्यकाण्डः] इत्यादिका

गोस्वामितुलसीदासादेः'' इति तैरज्ञायत। मन्ये सेयं संस्कृतसरस्वत्याः सुतरां सफलता, किं वा विश्वतो घोषणीयो विजयः-यत् लघोर्गुरूकरणं-गुरोर्लघूकरणम्, द्वित्वविधानं-वर्णपरिवर्तनाद्यपभ्रंश-स्वातन्त्र्यरहितायामपि भाषायामस्यां छन्दांस्यमूनि स्वाभाविकानीव संवृत्तानि।

## द्वयोर्भाषयोः कवित्तानां तुलना

अस्तु, व्रजभाषायाः कवित्तछन्दसि अनुप्राससौष्ठवादेर्ये ये प्रकारास्ते ते अस्यामपि निरूढा न वेति विवेचनाय काचिद्वर्णिकाऽधस्तात्संदीयते -

१. येनोत्थानेन प्रथमद्वितीयादिषु चरणेषु क्रमशो वसन्तादेः सर्वाऽपि संपत् संप्रदर्श्यते, चतुर्थे च चरणे शब्दालंकारझंकारः संकर्षको यथा भवति तथा -

**ललितलताऽभिनवनायिकाविलासी वर-**
**वारिजविकासी वनवीथीविपदन्तोयम्**
**वञ्जुलविपिनमौनहन्ता पिकचिन्ताहरो**
**मञ्जुलमलयमन्दमारुतैरनन्तोयम्।**
**मञ्जुनाथ महितमीनकेतनमहामन्त्री**
**मानिनीमनःस्थमानतन्त्रीमिलदन्तोयम्**
**सन्तोषयदिन्दुकरदीपितदिगन्तो विद्ध-**
**विरहिदुरन्तो बत वर्द्धते वसन्तोयम्॥**

(सा.वै.पृ. १३)

२. 'वीथिनमें व्रजमें नवेलिनमें बेलिनमें' इत्यधिकरणबाहुल्यं यथा चतुर्थे चित्र्यते तथा-

**पर्वतघनेषु पुलिनेषु पार्श्व-पत्तनेषु**
**पौरोपवनेषु पुरः प्रावृट प्रतिभासते** इति.

यथा वा - **उपवन-विपिन-वाट-वल्लीवलय-वीथी-**
**विटपिवितानेषु हि वर्द्धते वसन्तोयम्।**

३. द्विरनुप्रासो यथा - **पीयन्ते दृशैव रसिकेन फुल्लवासन्तिकाः**
**काममभी वासन्तिका वासराः सुगीयन्ते।**

यथा वा - **दर्पितदनुजवधूवीक्षणेषु वर्षागमो**
**गोविन्दो ममाद्य मनोहर्षायोपपद्यताम्।**

४. त्रिः प्रासो यथा - **मनसि मनोभुवोऽपि पूर्णपरिक्षोभावहा**
**श्रीगोविन्दशोभा मनोलोभायोपकल्पताम्।**

५. प्रासचतुष्टयं यथा - कोऽन्यो मयि तन्यात्सदा स्तन्यावधिरक्षाकृपां

वत्सलताजन्या तव धन्या करुणां प्रभो!

६. चतुर्ष्वपि चरणेषु एकस्यैवानुप्रासस्य निर्वाहो यथा -

भूमिवलयं तं दुष्टदैत्यैर्भारवन्तं वीक्ष्य

लोकेऽवतरन्तं शक्तिमन्तं शीलयामहे

शकटं हरन्तं पावयन्तं पूतनां तामथ

दावाग्निं पिबन्तं बलवन्तं चिन्तयामहे।

कालियफणासु नृत्यवन्तं विहरन्तं वने

कंसमुद्धरन्तं केशवं तं कामयामहे

सर्वतो लसन्तं विलसन्तं व्रजगोपिकासु

पीताम्बरवन्तं भगवन्तं भावयामहे।

७. वृत्त्यनुप्रासेन चतुर्थचरणचित्रणं यथा -

वापीतटवाटिकाविहङ्गमविटपिवीथी-

वारिजवनेषु वै वसन्तविभा भासते॥

८. चतुश्चरणेषु प्रतिचरणं पृथक् पृथग् वृत्त्यनुप्रासो यथा -

चञ्चच्चारुचञ्चलाचकासितरुचिररुचि-

सलिलमुचामचारिसंचयो विभासते

केकाकलकोलाहलकुतुकिकलापिनोऽमी

कलितकदम्बकूलकाननान्युपासते।

मञ्जुनाथ मेदुरमहीरुहविमण्डितेयं

मोदमानमेदिनी प्रमोदमिह दासते

पुष्करपयःपूरपीनतमपुष्करिणी

प्रावृषि सपङ्कपथा पृथिवी प्रकाशते॥

(सा.वै.४१)

९. चतुर्ष्वपि चरणेषु आरम्भादन्तावधि एकाक्षरवृत्तेर्निर्वाहो यथा -

केतककदम्बकरमर्दकुन्दकर्णिकार-

कदलीकुटजकोविदाराः किल भासन्ते

**कुरबकक्रमुककरवीरकलकाञ्चनार-**
**किंशुककरञ्जकृतमाला मञ्जु राजन्ते।**
**कर्कन्धूकपित्थकुष्ठकुलककुरण्टकाग्रे**
**कर्चूरककरहाटककेसराः सुखायन्ते**
**कञ्जमञ्जुलानने! कियन्तः कूलकुञ्जे कुटाः**
**कानने किलाऽमी कृतकौतुकाः प्रकाशन्ते॥**

(सा.वै.१०)

१० वृत्त्यनुप्रासस्य मध्येऽपि पुनः पदान्तानुप्रासस्योपनिबन्धनं यथा –

**उन्मीलन्मृणालनवमाधविकाजाल-दल-**
**दमलतमालततिविद्धवियदन्तोयम्।**

इत्यादि किं किं वा कियत्परिगण्यताम्? व्रजभाषाकवयः कवित्तेस्मिन्-अनुप्रासविन्यासे वर्णनाविलासे च यान् याँश्चमत्कारानुपनिबिध्नन्तो बहु मन्यन्ते मनस्यात्मानं, तांस्तानिह सर्वानपि सर्वात्मना समानेतुमकार्षमध्यवसायमिति मर्मसु प्रविश्य निर्भरमालोचयन्तः स्वयमेव वेदिष्यन्तीति किं नाम निवेदनविस्तरेण?

व्रजभाषाकविगोष्ठ्यां छन्दसामान्येषामपेक्षया कवित्तस्यास्योपनिबन्धने कवेः कृतित्व-मतिनैपुण्यात्परीक्ष्यते स्म। न नाम साधारणः कविः कवित्तोपनिबन्धने धारयामास धार्ष्ट्यं तदा। व्रजभाषासाहित्ये रचनायामालोचनायां चोभयत्रापि सफलः कविष्ठाकुरः साकूतमालोचयांचकार पुरा-'**लोगन कवित्त कीबो खेल करि जान्यो है**'। षोडश-पञ्चदशेत्येकत्रिंशदक्षरयोजनमेव ये जनाः कवित्तं जानन्ति तेषां कथा तु पारेलोकम्, परं व्रजभाषायामन्यान्यच्छन्दसामपेक्षया कवित्तेऽस्मिन् पठनश्रवणयोर्यथा लालित्यं तथा रचनायामपि चातुर्यविशेषस्यापेक्षेति कविसमाजे चिरात्प्रसिद्धिः। परिनिष्ठित एवैतस्य गतिविशेषम्, पदान्तानुप्राससौष्ठवम्, उक्तिविच्छित्रिं च निर्वोढुं प्रगल्भते। अत एव संस्कृतरचनापटुभिर्भाषायाः अस्या अन्यान्यच्छन्दांसि यथेच्छमुपनिबद्धानि कामं भवेयुः परं कवित्तनिर्माणे विरलानामेव सफला प्रवृत्तिरीक्षिता।

## संस्कृतकवीनां कवित्तादिरचना

व्रजभाषापरिगृहीतानि छन्दांस्यमूनि लोकानां भूरि समाकर्षकाणीति परितः परीक्षणेन परिचीयते। 'साहित्यवैभव'नाम्नी रचना यतःप्रभृति संस्कृतसेविसमाजे प्रासिध्यत्, 'संस्कृतरत्नाकरे' चैवंविधानि छन्दांसि यत आरभ्य प्राकाश्यन्त, काशीप्रभृतिसंस्कृतकेन्द्रेषु सभासंमेलनादिषु यदा यदा चैवंविधा रचना सहृदयानां समक्षमुपानीयत तदा तदा भूरि समाकर्षणेन सेयमश्रूयत। 'संस्कृतम्'प्रभृतिपत्रेषु प्रकाश्यन्ते दोहा-कवित्त-गजलादीनि निरर्गलम्। 'रत्नाकरे' चापि बहूनां प्राप्यन्त एवंविधा रचनाः। अन्यान्यपि पत्राणि न शून्यानि भवन्ति रचनयैवंविधया। तत्र साफल्यमधिगतं न वेति तु नूनं कथान्तरम्, किन्तु छन्दसाममीषां समाकर्षणं न तैश्चेतसि निरोद्धमपार्यतेत्यपरोक्षम्। किं बहुना, ये संभाविता वृद्धाः संस्कृतपद्यानि विहाय संस्कृत-दोहामात्रमपि साफल्येन नाऽऽरचयन्कदाचित् तेऽपि पङ्क्तीनामासां

लेखकस्य सिंहाऽवलोकनकवित्तं सभायां सहृदयैरभिनन्द्यमानमाकर्ण्य, न केवलं कवित्तमेव अपि तु 'सिंहावलोकन' सहितं तत् मध्येसभं श्रावयितुं प्रगल्भन्ते। किमितोऽधिकश्छन्दसोऽस्य समाकर्षकताप्रभाव: समाजे परीक्षणीयो नूनम् ?

एवंविधानि छन्दांसि प्राचां संस्कृतकवीनां न नामैकान्ततोऽपरिचितानि नूनम्। चौपाईच्छन्दोनुहारिणी भगवच्छङ्कराचार्यस्य 'चर्पटपञ्जरिका' ('**अङ्गं गलितं पलितं मुण्डं, दशनविहीनं जातं तुण्डम्।** इत्यादिका') सुप्रसिद्धा समाजे। १९२१तमे विक्रमवत्सरे वंशीधरधूसरस्य प्रश्नोपरि शिवसहायपण्डितो वाल्मीकीयरामायणस्य शिरोमणिटीकां निर्ममौ। टीकाया अस्या उत्तरकाण्डस्यारम्भे, ग्रन्थस्यान्ते च चत्वारि 'त्रिभङ्गी'च्छन्दांस्युपलभ्यन्ते। 'वर्णिका'रूपेण तेष्वेकं यथा –

**'स्वस्ति श्रीदाता निखिलविधाता श्रितविख्याता सकलपति:**
**यस्य श्रीसहिता सीता दयिता त्रिभुवनमहिता निखिलनतिः।**
**सोऽयोध्यानाथो निगमसुगाथो गङ्गापाथोविदिततनु:**
**जयति श्रीरामो जलदश्यामो रमणललामो महाधनु:॥'**

तथा चान्ते 'बरवै'च्छन्दोऽपि दृश्यते –

**शिवसहायबुधनिर्मितिरेषा भाति।**
**तत्त्वं दुर्जनवादात्सततं याति॥**

अस्मत्पूर्वजानां वाणी–भारती–सरस्वतीत्युपनामकानां श्रीद्वारकानाथभट्टपादानां 'गालवगीत'-शीर्षकाणि छप्पयच्छन्दांसि गालवाश्रमवर्णने ग्रन्थेऽस्मिन्नेवाऽग्रे विलोक्येरन्। अस्मत्सजातीयाना-मात्रेयश्रीगदाधरभट्टानां (जयपुरराजकवीनश्वराणाम्) शिववर्णनपराणि छप्पयच्छन्दांसि पूर्वपर्यायस्य (अर्थात् त्रिंशच्चत्वारिंशद्वर्षेभ्य: पूर्वं प्रचरत:) संस्कृतरत्नाकरे पुरा प्रकाशितान्येव। एवमेव गुरुवरनाँग-ल्योपाह्व–पं.श्रीगोपीनाथदाधीचानामपि भाषा परिगृहीतानि छन्दांसि कानिचित् प्रसिद्धानि। कविवरश्रीकान-जीप्रश्नवराणामपि भाषानुहारीणि संस्कृतच्छन्दांसि कामं भवेयु:। **जयपुरविलास-सिद्धभेषजमणिमाला-कच्छवंश-महाकाव्याद्यनेकग्रन्थनिर्मातॄणां मेदपाठीयभट्टकविकुलालंकार श्रीश्रीकृष्णराम-वैद्यावतंसानां दोहाच्छन्दांसि –**

**शिवशेखरशशिचन्द्रिकासञ्चयचारुमहांसि।**
**ददतु मुदं मन्दाकिनीतरलतरङ्गपयांसि॥**
**कमलामलमनुरागि बहुकरुणारसपरिणामि।**
**हृदयस्थलमिव वीक्षितं हरेरहं प्रणमामि॥**

इत्यादीनि बहुत्र विन्यस्तानि कवयितुर्व्रजभाषाच्छन्द:संदर्भणसंमोदं भूरिश: सूचयन्ति। वस्तुतस्तु वैद्यावतंस–कविवरश्रीश्रीकृष्णरामभट्ट महाभागा न केवलं संस्कृतकवय एव, अपि तु ते व्रजभाषाकवयोऽप्यासन्। जयपुरविलासे जयपुरनरेन्द्रश्रीरामसिंहदेवस्य यशोवर्णनपराणि दत्तानि तेषां कतिचित्कवित्तानि। तैर्यदि संस्कृतेऽप्येकं द्वे वा कवित्तानि निरमीयन्त तर्हि न तेषां कृते नवीनमिदम्। अस्ति तेषामिदमेकं कवित्तघनाक्षरीच्छन्द: –

सूत! रथमेहि, देहि बाणगणमाशु मे हि
मित्र! धृतिमेहि धेहि संगरमहामहे
वर्म कुत्र, चर्म कुत्र, भयं वृथा मा स्म कृथाः,
छिन्धि भिन्धि धाव धाव सहे नास्य नाम हे!
इति स्फुटं भवद्द्विषां शैलगुहास्वापजुर्षा
विलापयुग् वचो वयं समुपलभामहे
वैरिकुलवृन्दकाल! चन्द्रसितकीर्तिजाल!
कण्ठलोलरत्नमाल! महीपाल! राम हे!

एतच्छिष्याणां भारतप्रसिद्धायुर्वेदमार्तण्डश्रीलक्ष्मीरामस्वामिमहाभागानामपि -

निजसहवासविभूषिताऽमलगुणणावलीषु।
नतिततियुतं निवेदनं श्रीहरिदत्तसुधीषु॥
जातोहं ज्वरपीडितो दैवाच्चाकस्मात्।
अवकाशो दिनपञ्चकं देयो मे तस्मात्॥
विनयदलं प्रहितं मया लक्ष्मीरामाख्येन।
नभसि सिते चैकादशीतिथौ युते भौमेन॥

इत्यादीनि दृश्यन्ते दोहावृत्तानि। अन्यान्यपि व्रजभाषानुहारीणि छन्दांसि जयपुर-नरेन्द्रश्रीमाधवेन्द्र-निदेशतो जातायां श्रीगोविन्दमन्दिरसभायामपठ्यन्त तैः पुरा -

वृन्दारकवृन्दाऽऽदृतचरणं वृन्दारण्ये विहरन्तम्।
मानवकुलदावानलदानवदुष्टकुलानि प्रहरन्तम्॥
अम्भोदाधिपजम्भारिभ्रमवारणकारणकुरुविन्दम्।
वन्दामो नन्दात्मजमेनममन्दानन्दं गोविन्दम्॥१॥
निजमतिकृतिजितदितिजादितिजं गणनातीतनृपतितितिविनुतम्।
यूरोपीयमिमं यन्तारं राज्यश्रीः स्वयमागन्ताऽरम्॥२॥

किन्तु संस्कृतभाषायां समये समये संजातमिदमाचरितं विदुषां विनोदमात्रमेवाऽवर्तिष्ट केवलम्। नानेन स्थायिसाहित्ये किञ्चिदधिगतं व्यपगतं वा। हन्त! अद्भुतप्रतिभाशालि-पण्डितश्रीचन्द्रधर-शर्मगुलेरी (B. A.) महाभागस्य समये मम कानिचिदेव घनाक्षरीच्छन्दांसि पण्डितेषु प्रासिध्यन्। तदुपरि महाभागेनानेन स्वसंपादित 'काशीनागरीप्रचारिणी पत्रिका'यां 'प्राचीनहिन्दी'नाम्नि गुणज्ञगणनीय-गवेषणानिबन्धे-' अमुकस्य (मम नाम) मम मित्रस्य तदिदम् (अर्थात् घनाक्षरीनिर्माणम्) विरलविनोद-मात्रम्' इत्यादि समुदैर्येव। हन्त यदि स महाभागः *साम्प्रतमवर्त्स्यत्तर्हि हृदयस्यान्तस्तलेन प्रासत्स्यत्-

यद्विरलविनोदः सोयं साम्प्रतिकसाहित्यविदां प्रबलः प्रमोदः समभवदिति। अस्तु, एतस्य श्रेयः प्राक्तन-जयपुरशिक्षाविभागाध्यक्ष (Director of Public Instruction) पं.श्रीश्यामसुन्दरशर्म एम.ए. महोदयाय, मम ज्येष्ठसहोदराय चास्ति याभ्यां सहार्दप्रमोदमादिश्यत यत्-'पादान्तानुप्रास ( तुकान्त ) घटिता सेयं रचनाऽवश्यावश्यं कठिना। यादृग्भावेन च भवता संपूर्यते सा तु कठिनतमैव। किन्तु ये बिषया व्रजभाषाकविभिः प्रातिस्विकरूपेणोपात्ताः, साम्प्रतिकसंस्कृतसाहित्ये च ये विषया युगानुकूलतयाऽवश्यं ग्रहीतुमर्हास्ते यद्यनया शैल्या विषयविभागपुरस्सरं संस्कृतेप्युपनिबध्यन्ते चेत्तर्हि संस्कृतसाहित्ये नवीनमिदं कृतं स्यात्। अन्यथा प्राक्तनच्छन्दोबन्धतुन्दिला प्रचुरं पर्याप्ता प्राचीनसामग्री अस्ति संस्कृतसाहित्ये'।

अवश्यमियं मन्त्रणा मूल्यवती, साहित्यजगत्यमरीकरणाय निःसंशयं शक्तिमती च। किन्तु पदे पदे प्रतिबन्धसंधायिनीं शैलीमिमामवलम्ब्य संस्कृते विस्तृतग्रन्थनिर्माणं न तावत्सहजम्। इतस्ततो नानाविधं साहित्यमधु सहाहृत्य हृदये चित्रयितुमुचिता नानाविधा विचार-मधुकराः पुरः समुद्वेलिता इवाऽवश्यं दृश्यन्ते, किन्तु लेखनीमुखेन तेषामुपनिबन्धनसमये कियत्संकटं समुपतिष्ठते कवयितुर्येन लेखनी जडेव संपद्यते इति हि त एव जानन्ति, यैरेवंविधे व्यतिकरे स्वायुषः कियांश्चन भागो भवेद् व्यतिगमितः। अस्तु प्रकटे किञ्चदनुक्त्वा निभृतमकार्षं तादृशं प्रयत्नं पञ्चदश वर्षाणि, यत्परिणामः '**कवितानिकुञ्जः**' सोयम्। यस्य द्वितीयो भागः '**साहित्यवैभवम्**' प्रथममुपगतश्चक्षुषोर्गोचरं साहित्यरसिकानाम्। प्रथमोभागश्चेदं '**जयपुरवैभवम्**' यद्धि जयपुरनगरपालकरसरसीरुहसमुपगमप्रतीक्षया साम्प्रतमुपैति संमुखं काव्यकला-कोविदानाम्। निकुञ्जस्यास्य चरमो भागश्च गोविन्दवन्दनमन्दार-माला'( **गोविन्दवैभवम्** ) या हि द्वयोरनयोर्वैभवयोः स्वस्वविषयसंदोहैरेव नितान्ततुन्दिलतया तयोर्मध्ये संमातुमप्रभवन्ती पृथगेव वक्षःस्थलमलंकुर्यात्काव्यकलामार्मिकाणां भगवद्भक्तानाम्।

## ग्रन्थस्य स्वरूपम्

निकुञ्जस्यास्य द्वयोरप्यनयोर्भागयोर्व्रजभाषापरिगृहीताः सर्वेपि प्रकाराश्चमत्काराश्च संस्कृतसाहित्य-संनिवेशौचित्यं संपाद्य रुचिरेण क्रमेण संगृहीता इति पश्येयुः काव्यकलामार्मिकाः। तदनुसारमेव पूर्वं नगरी-नगरस्थानवर्णनम्, ततो राज्ञो राजसभायाः, तत उत्सवानां नागरिकाणां च, ततो राज्ञोऽभिनन्दनस्य, आशीर्वादादेश्चोपनिबन्धनम्। अन्ते च व्रजभाषाकविताया अपि काचि'द्वर्णिका' प्रत्ता। यतो हि यावत्किल जयपुरराजकवीनां कृतयो नांऽशतोपि परिशील्यन्ते, न तावज्जयपुरस्य वैभवमिदमवगम्यते सामग्र्येण। अत एव नगरवर्णनादिपूर्वपीठिकारूपे प्रथमभागेस्मिन् सर्वमिदमाबध्यद्वितीये भागे नवीनेष्वमीषु च्छन्दस्सु विच्छित्तिमुपगच्छन् समयापेक्षितः साहित्यस्य वर्णनीयः स स विषयः समुपनिबद्ध इति परिज्ञातमेव भवेत्साहित्यवैभवमवलोकितवतां कृतिनाम्।

## व्रजभाषाया अन्यान्यानि छन्दांसि

घनाक्षरीकवित्तमिव भाषाया अन्यान्यपि छन्दांसि स्वस्वानुरूपे विषये इतरभाषा-च्छन्दसामपेक्षयाऽ-द्भुताद्भुतं प्रभावमभिवहन्तीति मर्मविदां प्रत्यक्षम्। ओजो-ऽनुकूलसंघटनाबन्धुरं छप्पयच्छन्दो वीरादिरसेषु, ओजस्विनः प्रमेयस्य निगुम्फने वा, प्राकृतं प्रमेयमात्मनः प्रभावेण द्विगुणीकरोतीति मार्मिकाणामनुभवः। अत एव प्राक्तनैः संस्कृतकविभिरपि तदिदं छन्दः समुपादीयत-अन्यान्यच्छन्दो विहाय सर्वतः पूर्वमेव। नीतिनिर्वचने 'कुण्डलिया'च्छन्दसः प्रभावः प्रौढैः प्रतिपन्नो यत्कृते गिरिधरो दीनदयालुगिरी वा व्रजभाषायामद्यापि संस्मर्यते रसिकैः। विरहवर्णने 'बरवै'छन्दोप्यमन्दोद्भासिनीं सुषमामावहति। यतश्छन्दसोऽस्य जन्मैव तन्मूलकमिति व्रजभाषासंप्रदाये संप्रधारितम्।

यावत्स्मरामि तावत्संमेलनपत्रिकायां कतिपयवर्षेभ्य: पूर्वमालिखितमासीत्केन-चित्कोविदेन,-यत् नवाबखानखानासमयेऽस्य छन्दस: प्रचलनमभूदिति। ऐतिह्यमिदमेवम्-आसीत्कवीनां कल्पद्रुमस्य, स्वयं चापि कवयितुर्नवाबखानखाना इति प्रसिद्धिमुपगतस्य सविधे कश्चित् क्षत्रियराजपुत्र: सेवक:। स हि स्वामिनोऽनुमतिमादाय निजदेशमुपगत: कृतवान् कयाचिच्चतुरया क्षत्रियकुमार्या परिणयम्। कांश्चिन्मासान् तत्सहवासेन सानन्दमतिवाह्य पुनरसौ स्वामिन: सविधमुपगतो निजं नियोगमशून्यं चकार। इतस्तत्प्रणयिनी प्रियवियोगमसहमाना कथंकथमयापयद्विरहविरसान् कतिचिद्दिवसान्।

अथ वियोगवह्निना विह्वला सा प्रियतमसविधे पत्रप्रेषणमुचितमभ्यूह्य स्वयमागुम्फितमेकं छन्द: पत्रे विलिख्य प्रेषितवती प्रियतमस्योपकण्ठे। किन्तु दैवसंयोगात्तदिदं पत्रमकस्मान्नवाबखानखानामहोद-यस्य दृशोर्गोचरमगच्छत्। आसीत्पत्रे सेयं कविता लिखिता-

**प्रेम प्रीति को बिरवा चलेहु लगाय।**
**सींचन की सुधि लीजो मुरझि न जाय॥**

कवितायामस्यां विरहानुप्राणिता याऽन्तर्वेदना निहिता तया प्रभावित: परमसहृदयो नवाबखानखाना-महोदयो राजपुत्रगतं सर्वं वृत्तान्तमवगत्य तत्कालमेव तस्मै गृहगमनानुमतिं विततार। नवाबमहोदयस्य हृदये कृतपदमिदं छन्द: कविताक्षरानुसारेण 'बरवा'नाम्ना प्रासिध्यत्। कविताप्रणयी नवाबमहोदय: स्वयमस्मिन् छन्दसि भूयसी: सूक्ती: समुपनिबद्धवान्। समादृतवांश्च तद्दिनादारभ्यैव तदिदं छन्द: कविसमाज:, यस्मिन्हि रचनापाटवं प्रदर्शयन्तो गोस्वामि-तुलसीदासादयो भूयसीं सफलतामधिजग्मु:।

नाहमस्येतिहासस्य तथ्यतां गवेषयितुमिच्छामि, न चाप्येतदत्र प्रपञ्चयितुं वाञ्छामि यत्तत: पूर्वमिदं छन्द: केनचित् व्यवहृतं न वेति। तदिदं गवेषकैरेवान्वेषणीयं नूनम्। किन्तु विरहवर्णनाय वर्णानां यादृशी मुधरता, स्वरलहर्याश्च यादृशी विह्वलताऽपेक्षिता साऽनेन भूयसी निर्व्यूढा भवतीति मन्तव्यमेव भवेत्। विहारिणो 'दोहा'छन्दस्तु शितविशिख इव हृदयलक्ष्यीकरणाय प्रथितमेव सहृदयसमाजे। सत्यं त्विदमस्ति यत् - निजनिर्वर्तितेऽक्षरगुम्फे कवि: स्वप्रतिभया यं भावं रसं वाऽभिव्यनक्ति तं विचारपूर्वकमुपात्तस्य बन्धुरच्छन्दसो लयो (संगीतगति:) भूयस्तरां प्रगुणीकरोति। यतो ह्यर्थविचार: परस्ताद्भवति परं कर्णमुपगतं छन्दोमाधुर्यं पूर्वमेव श्रोतुर्मानसमात्मवशे करोति। वशीभूते च मनसि सर्वमेव स्वतोऽभिरुचितं भवति। उक्तं हि सुन्दरच्छन्दसा निबद्धस्य काव्यस्य लक्षणं विचक्षणै: -

**अपर्यालोचितेऽप्यर्थे बन्धसौन्दर्यसम्पदा।**
**गीतवद्धृदयाह्लादं तद्विदां विदधाति यत्॥ तत्काव्यम्.** इत्यादि।

व्रजभाषाच्छन्दसां सर्वमिदं प्रागल्भ्यं संस्कृतसाहित्यमप्यनुसंक्राम्येदित्येवासीन्मत्प्रेरकाणामाकूतम्। उचितमपि चेदम्। सर्वमपि निबन्धनीयमर्थमनवीकुर्वद्भि:[१] संस्कृतस्य महाकविभि: किं वा वर्णनीय-मधुनाऽवशेषितं यत्र नवीनो निबन्धा निजस्य निगुम्फनैपुण्यं निदर्शयेत्। ततो नित्यं क्षुण्णेभ्यो नवीनैश्छन्दो-भिर्नवीनामेव काञ्चिद् भूमिकामादाय सामयिकं चेत्कमप्यर्थं[२] निबध्नीयात्कविस्तर्ह्येव युगेऽस्मिन् संस्कृतसाहित्ये नवीनं किञ्चित् कृतं स्यात्। परस्परमादानप्रदानाभ्यां तत्तद्भाषासाहित्यानां प्रवर्द्धते भूयसी संपदिति प्रत्यक्षं प्रेक्षावताम्। किञ्च-राष्ट्रभाषानुगामिजनतायां संस्कृतगिर: प्रचाराय तदिदमनुगुण-मेव, यतस्तद्भाषा (राष्ट्रभाषा) छन्दांसि संस्कृतेऽप्यवलोकयन्तो जनास्तामिमां भाषामञ्जसाऽनुप्रविशेयु:।

किञ्च, नवकवितानिगुम्फपरिगृहीतायाः संस्कृतसरस्वत्यास्तदिदम-तुलमाहात्म्याय, यदस्याः प्रचारस्य युगयुगान्तरेषु व्यपगतेष्वपि, नवयुगेप्यस्मिन्नमुष्यास्तत्तादृशं मार्दवमद्यापि विद्यते येन सर्वेष्वपि च्छन्दस्सु सेयं शक्यते निरायासमेव निर्गुम्फितुम्। एवं सर्वदापि निर्जरशरीरा सेयममरभारतीति गौरवं किमिति वा नाऽऽसादयेत् ?

किञ्च, - सामाजिकमानवानां मनो नित्यं नूतनानुरागि। अनादितः प्रचलितां संस्कृतसाहित्यस्य तामेव वर्णनापद्धतिमनुशीलयतां मनो भाषान्तरपरिगृहीतां नवीनतां प्रति निसर्गादेव लालसं भवेत्। अत एव निकुञ्जेऽस्मिन् वर्णिता ऋतुवर्णनादिशैली, उर्दूभाषादेर्नवीनाश्छन्दःप्रकाराश्च साहित्यरसिकानाम-भिरुचिमेवोत्पादयेयुरति नाऽस्वाभाविकम्। अपि च युगे युगे लोकानां रुचयो विचाराश्च निसर्गतो भिन्ना भवन्ति। अत एव हि प्रतियुगं लोकरुच्यनुगामिनी नवीनता साहित्ये स्वत एवाऽनुप्रविशति। निकुञ्जेऽस्मिन् प्रविशद्भिर्दृश्येत नवरसवीथ्यां वीरादेर्विभिन्ना वर्णनपद्धतिः, विहारिणः सूक्तिसमुद्गमनम्, नवयुगवीथेः सामयिकपदार्थवर्णना, समालोचना चेत्यादिकमखिलमिदं सामयिकयुगस्य काङ्क्षा। तदेवं युगानुसारमावश्यकताः स्वयमनुभवन्ती, ताः पूरयन्ती च सेयममरसरस्वती 'जीवन्ती, जाग्रती' अपि जनैः कैश्चिच्चेन्न प्रतीयते तर्हि तेषां जनानां चेतनाशक्तिं प्रत्येव कुतो नास्माकं संदेहः स्यात् यत् पदार्थपरीक्षापत्रे मानवे या प्रबोधशक्तिर्भवति सा तेषु परीक्षकम्मन्येष्वस्ति न वेति।

मार्मिकाणां मन्त्रणानुसारं सर्वासामेव सुप्रचलित-सम्यभाषाणां छन्दांसि निकुञ्जेस्मिन् समगृह्यन्त। तत्तेषां छन्दसां तत्तद्भाषासाहित्ये यद्यद् वैशिष्ट्यम्, यस्मिन् वर्णनीये विषये यादृङ् माधुर्यं च प्रभावविशेषश्चानुभूयते तदिदं सर्वं निकुञ्जेऽप्यस्मिन्ननुवर्तितुं प्रयतितम्। परीक्षणमिदमस्य प्रेक्षावताम-पेक्षितम्, नात्र मे वचसामवसरः।

## उर्दूभाषा तच्छन्दांसि च

## हिन्दी ( खड़ी बोली )

'व्रजभाषैव माहम्मदानां राज्योपजृम्भणकाले क्रियाकारकादिषु किञ्चित्कि-ञ्चित्परिवर्तनेन शनैः 'खडी बोली'रूपमवाप्य वर्तमानहिन्दीरूपे परिणता, यस्याः साम्प्रतिके स्वरूपे परिष्कारस्यारम्भो भारतेन्दोर्हरिश्चन्द्रस्य समये संवृत्तः' इति बहूनां मतम्।

वर्तमाना हिन्दी, व्रजभाषा चेत्युभे अपि एकस्यैव वृक्षस्य द्वे शाखे ये पृथक् पृथक् वातावरणे पुष्पिते फलिते च। इमे एकस्या एव मातुर्द्वे दुहितरौ ययोर्द्वयोरपि वंशः पृथक्पृथक् प्राचलत्। वर्तमाना हिन्दी यां 'खडी बोली' इति बहवो व्यपदिशन्ति, सा तावदेव प्राचीना यावदियं व्रजभाषा, न पुनर्व्रजभाषातः संजनिता हिन्दी न वा ततोऽर्वाचीना। व्रजभाषायाः प्रथमविकासो व्रजे भूत्वा क्रमशः स सर्वं भारतं व्याप्नोत्। भारतीयानामाराध्यस्य भगवतः श्रीकृष्णस्य जन्मभूमेः सेयं भाषेति सा धार्मिकभावानुप्राणिता भूत्वा शनैः कवितायाः साहित्यस्य च भाषा समभवत्, यस्यां सूरदास-सदृशाः सूर्याः संप्राकाशन्त। कवितामाधुर्यवशाच्च सेयं वज्रमण्डलात्सुदूरदेशेष्वपि बहुकालं यावत्साहित्यभाषारूपेण सगौरवं समवास्थित।

इतो हिन्द्या नासीत्कश्चिद्धार्मिकोऽवलम्बः। सा दिल्ल्याः (प्राक्तनस्येन्द्रप्रस्थस्य) परिसरे तत्पार्श्वमण्डले च विकासं प्राप्य तावन्मात्रपरिसर एव सीमिता समभवत्। किं त्वस्याः प्राचीनतायां न शक्यते संदेग्धुम्। हिन्द्यां सर्वतः प्रथमा कविता 'अमीर खुसरो' इत्यस्य समुपलब्धा। यो हि १३१२

तमे वि. संवत्सरे जातः. १३८२ तमे वत्सरे च लोकान्तरमारोहत्। एतस्य कविताभाषा हिन्दी (खडी बोली), या ह्यवश्यं तस्मिन् समये तत्प्रान्तवर्तिनां व्यवहारभाषा भवेदिति स्पष्टम्। विषयोपि तस्यास्तादृश एव यो हि व्यावहारिकभाषायामेव शोभते। यथा -

**तरवर से एक तिरिया उतरी, उसने बहुत रिझाया।**
**बाप का उसके नाम जो पूछा आधा नाम बताया॥**
**बीसों का सिर काट लिया। ना मारा ना खून किया॥** इत्यादि।

अत्र हि 'उसने बहुत रिझाया' 'आधा नाम बताया' इत्यादीनि वर्तमानहिन्द्याः शुद्धवाक्यानीति को वा न जानीयात्?

अमीरादनन्तरं कबीरः समभूद्, यः अमीरखुसरोव्यवहृतायामेव भाषायां भूयसीः कविता न्यगुम्फत्। यथा -

**हमन हैं इश्क़मस्ताना हमन को होशियारी क्या।**
**रहैं आज़ाद या जगमें हमन दुनियां से यारी क्या॥**
**न पल बिछुडै पिया हमसे न हम बिछुडैं पियारे से!**
**उन्हीं से नेह लागी है हमन को बेक़रारी क्या॥**

## उर्दूभाषा

प्रमाणैरेभिः स्फुटमवबुध्यते यद् हिन्द्याः (खडी बोली) परिष्कृतं प्राचीनं रूपं १३ संवतसरेऽप्युपलभ्यते। माहम्मदपरिगृहीतायास्तस्या एव हिन्द्या नाम 'उर्दू' इति स्थापितमभूत्! न तु काचिदुर्दूभाषा पृथक् न वा कस्याश्चिद्भाषायाः सा समुत्पन्ना। 'आबे हयात' लेखकेन प्रो.आजादमहोदयेन अविचार्यैवेदमालिखितं यत् 'अस्माकमुर्दूभाषा व्रजभाषातः समुत्पन्ना'। अमीर-कबीराभ्यां या हिन्दी व्यवहृता तदपेक्षया उर्दूभाषायां मौलिकमन्तरमपि शक्यते केनचित्साधयितुम् ? पुनः कथमुच्यते व्रजभाषातः सेयमुर्दू उत्पन्नेति। एतस्या नाम वास्तवे 'मुसलमानी हिन्दी' इति शक्यं व्यपदेष्टुम्। आरव्य-पारस्य (अरबी-फारसी) भाषयोः संज्ञाशब्दैरव्ययैश्च सङ्कलिता हिन्दी 'उर्दू' इति संज्ञायते यवनैः। न तस्यां हिन्दीतः पृथक् क्रियाशब्दाः 'सिर काट लिया' 'खून किया' 'काटता है' इत्यादयः। न वा 'चलना' 'बैठना' 'उठना' इत्यादयो धातुजाः शब्दाः पृथक्। केवलमारब्य-पारस्यभाषाशब्दान् स्थाने स्थाने सन्निवेश्य, कथनशैलीनां (मुहाविरे) परिवर्तनेन सेयमुर्दूभाषा पृथक् परिकल्पिता माहम्मदसम्प्रदायभक्तैः। यदि पारस्यभाषाशब्दानां परिग्रहणमात्रेण पृथग् भाषा संपद्येत तर्हि -

"मैं फ्राइडे को बॉम्बे से स्टार्ट होकर सटर्डे को कैम्बे (खंभात) पहुँचा। क्लॉथ मार्केट बिलकुल डल है" इत्यादिर्ग्रेजुएटमहानुभावानां भाषापि पृथक् काचिद्भाषा व्यपदिश्यताम्। किन्तु बुद्धिपूर्वकं विचारे प्रथमा मुसलमानी हिन्दी, द्वितीया ग्रेजुएटी (अँग्रेजी) हिन्दी।

क्रियाः कारकाणि लिङ्गानि वचनानि यावन्न पृथग् भिद्येरन् तावदुर्दूभाषा सेयं हिन्दीभाषातः कथं वा पृथक् शक्यते कर्तुम् ? एतस्या व्याकरणमेकम्, वाक्यविन्यासश्चैकः, ततः केन वा प्रमाणेन सेयमुर्दू हिन्दीतः पृथक् ? उर्दू-हिन्द्योः केवलमेतदेवान्तरं यदाद्या पारस्यलिप्यां लिख्यते, आरब्य-पारसीकशब्दानां

चास्यां बाहुल्यं भवति। द्वितीया देवनागरलिप्यां लिख्यते, संस्कृतशब्दाश्चैतस्यां बहुला भवन्ति। गुर्जरभाषाया अप्येवंविधे द्वे रूपे। एका पारसीकानां (पारसी) गुर्जरभाषा, अपरा गुर्जरभूनिवासिनां भाषा। पारसीकानां गुर्जरभाषा आरब्य-पारस्यभाषाशब्दैः संदृब्धा। गुर्जरभूवास्तव्यानां च भाषायां संस्कृतस्य तत्समास्तद्भवाश्चाधिका भवन्ति। किन्तु द्वे अपि रूपे 'गुजराती' भाषानाम्ना व्यवह्रियेते। अयमेव न्यायः उर्दू-हिन्दीभाषयोरपि पक्षे समुचितः।

'उर्दूभाषा सेयं शाहजहाँसमये सेनासन्निवेशस्य *हट्टे निरमीयत' इत्यपि लोकानामनुमानं मिथ्या। माहम्मदानामिहाऽऽगमनात् शासनाद्वा पूर्वमेव म्लेच्छभाषाशब्दाः समभूवन्संमिश्रिता आर्याणां भाषासु। महाभाष्यकारो व्याकृतिशुद्धिरहितान् शब्दान् म्लेच्छशब्दानाह। क्व तदा माहम्मदानां राज्यम् ? आर्याणामेकदा स समयोऽभूद्यत्तेषां राज्यं भारतात्पश्चिमोत्तरप्रान्ते ईरानआरब्यरूमतुर्किस्तानमंगोलियापर्यन्तं प्रसृतमासीत्। आसीदार्याणामुद्गमस्थानमिदं भारतमेव। परं ततस्ते चतसृष्वपि दिक्षु प्रसृत्य पर्यन्ते राज्यं चक्रुः, सभ्यतां च प्रसारयामासुः। पुराणेषु भारताद् बहिःस्थैरपि देशैरार्याणां व्यवहारस्य विजयस्य च स्थाने स्थाने प्राप्यते समुल्लेखः। चीनांशुकानां वर्णनमार्यसाहित्ये स्थाने स्थाने। पाण्डवानां लाक्षागृहप्रवेशस्य यत्र कथा, तत्रेदमपि दृश्यते यद् विदुरेण लाक्षागृहनिर्माणस्य संबन्धे काचिद् गुप्तसूचना तेभ्यो 'म्लेच्छभाषया' दत्ताऽऽसीत्।

महाभारतात्परतः पश्चिमराष्ट्रवासिनां विदेशिनां बहून्याक्रमणानि भारते समभवन्। बह्व्यश्च जातयोऽत्र राज्यं चक्रुः। ताभिः सह तासां भाषापि भारते समागच्छदेव। अत एव भूयस्तरां संभवो यत्तस्मिन् समये पश्चिमदेशभाषाशब्दाः संपृक्ता भवेयुर्भाषया। महाकवेः कालिदासस्य समये प्रतापशालिनां राज्ञामन्तःपुरे 'यवन्यः' प्राहरिककार्यं शस्त्रसंरक्षणकार्यं चाऽकार्षुः। यदा स्वदेशीयवद् यवनानामियान् विश्वासः शनैः शनैः संप्रवृत्तस्तदा यवनभाषाशब्दाः अस्मत्तः सुतरां दूरे च अपरिचिताश्चासन्निति कथं वा विश्वसनीयं स्यात्? अत एव माहम्मदानां शासनात्पूर्वमेव भारतेऽस्मिन् प्रचलितभाषायां वैदेशिकसंसर्गजनिता आरब्यपारस्यभाषाशब्दाः प्राविशन्निति सुसंभवमेव। किञ्च; - अतिप्राचीनस्य चन्दबरदायिनः कवितायामपि आरब्य-पारस्यभाषयोः शब्दा बाहुल्येनोपलभ्यन्ते। अत एव 'शाहजहाँ'समये उर्दूभाषा निष्पन्नेति कथनं सर्वथाऽनुपपन्नम्।

यवनभाषाशब्दबहुला हिन्दीभाषा यवनानामागमनात्पूर्वत एव निष्पन्नासीत्, व्यह्रियते स्म च सा लोकैः। यदा माहम्मदानां राज्यस्थितिरिह सुदृढाऽभवत्तदा अत्रत्यैर्लोकैः सह व्यवहारार्थं कस्याश्चिद् भाषायाः समभूत्तेषामावश्यकता। ते च सर्वानेव व्यवहारान् हिन्दुभ्यो विपरीतांश्चक्रुरेव। अत एव हिन्दूनां भाषातो भिन्ना भाषा तेषामासीत्समपेक्षिता। ततश्च पारस्यादिशब्दमयीं तामेव हिन्दीभाषामात्मीयां कृत्वा 'उर्दू'नाम्ना तां पृथक्चक्रुः। तुर्कभाषायां सेनासन्निवेशस्य या विपणिः सा उर्दू नाम्ना व्यवह्रियत पुरा। तस्य या भाषा साऽपि शनैरुर्दूनाम्ना व्यपदिष्टाऽभूत्। सत्यमिदं मन्यामहे, यवनसेनासन्निवेशस्य विपणिस्तु मुहम्मदगोरिणः, तद्दासस्य कुतुबुद्दीनस्य च समयादेवाऽत्र भारते सन्निविष्टा। तत्समयेऽपि सेनासन्निविष्टैर्जनैः काचिद् भाषाऽवश्यं व्यवहृता भवेत्। न नाम मौनेन, इङ्गितेन वा कार्यं शक्यं सुसाधयितुम्। ततः कथमुच्यते यदत्यन्ताऽर्वाचीनस्य शाहजहाँसम्राजः समये 'उर्दू' प्रारब्धेति ?

अस्तु; नात्र इतिहासलेखनेन प्रयोजनम्। पारस्यादिभाषाशब्दबहुला सेयं हिन्दी 'उर्दू'संज्ञामधिगत्य कंचित्कालं यावत् उत्तरभारते भूयसीं लोकप्रियतामुपययौ। न केवलं माहम्मदैरेव, अपि तु पञ्चनद-काश्मीर-देहली-लखनऊ-प्रभृतिसंस्थानीयैर्हिन्दुभिरपि सेयमसेव्यत सानुरागम्। 'काश्मीरी 'ब्राह्मणाः,

विशेषत: 'कायस्था'स्तु मातृतोऽप्यधिकां मातृभाषामिमां शिरसा संमानयन्त: प्राणपणेन तथा संरज्यन्त्यस्यां यथा भारतीयराष्ट्रभाषां हिन्दीमपि नामग्राहमवहेलयन्त्यमी। किन्त्वन्नलोलुपतया आर्यभावं विक्रीय यवनभावपरिग्रह: स्पष्ट: सोयमेषाम्। आसन्पुरा कायस्था न केवलं ब्रजभाषाभक्ता:, अपि तु संस्कृतानुरक्ता अपि। किं बहुना, ते संस्कृतभाषाया: सफला ग्रन्थकर्तारोऽपि तादृशा अभूवन् ये व्याकरणादेरपूर्वान् ग्रन्थान्निर्माय तत्पठनेन संस्कृतस्य ब्राह्मणपण्डितानपि कवीन् निष्पादयितुमावहन्त्यभिमानम्। निजनिर्मिते 'क्रियाकलापे' प्रोक्तं विजया (विद्या) नन्दकायस्थेन -

**'अस्मादुपजीव्य जनो धातुव्युत्पत्तिविविधविस्तारम्।**
**शतशाखमतिविलासस्त्वरितकविर्भवति न भ्रान्ति:॥**
**पूर्वं पूर्वकविप्रणीतविविधग्रन्थेषु दृष्टास्ततो**
**निर्णीता हृदये निरूप्य निपुणं ये धातुपारायणम्।**
**धातूनां तनुधीरपि व्यरचयँस्तेषामिमं संग्रहं**
**विद्यानन्दकविर्विशुद्धहृदय: कायस्थवंशोद्भव:॥'**

## उर्दूभाषा संस्कृतं च

किन्तु यवनभाव एव गौरवं मन्यमानैरेभि: साम्प्रतं पर्यगृह्यत सेयमुर्दूभाषा। अलिख्यन्त तैर्बहव: कविताग्रन्था अपि भाषायामस्याम्। मोगलानां शासनकाले राजकीयव्यवहारा:; प्रजासु आदेशघोषणादय-श्चास्यामेव भाषायां प्रावर्तन्त। अत एव सेयं भाषा भारतस्य दूरदूरप्रान्तेषु परिचिताऽभूत्। ओजस्वी बन्ध:, शैली (मुहाविरे)नामविकृतं निर्वाह:, शब्दानां रोचको गुम्फ:, क्रिया-कारकादीनां नियते स्थाने निवेश: [न तु संस्कृत-हिन्दीवदन्वयेन वाक्यार्थबोध:] इत्येव उर्दू-कविताया: सौष्ठवसाधनम्। उर्दूकवय: एकैकं शब्दं विचित्य विचित्य तथा निगुम्फन्ति छन्दोबन्धे, ये हि (शब्दा:) श्रुतमात्रा एव विशिखवद् हृदये प्रविशन्ति, येन हृदयतन्त्री असाधारणरूपेण झणत्कृता भवति। मानस: प्रमोद: प्रभवत्युद्वेलित इव। तत: स्वत एव मुखाद् धन्य-धन्येत्यादय: साधुवादा: प्रसरन्ति। सारं तु— उर्दू कवितायां शब्दानामेव विलक्षणो विलास:। संगीतलयानुबन्धिनि छन्दोबन्धे निविष्टा: शब्दा झगिति तथा भावं प्रस्फोरयन्ति, यथा सहृदयस्याऽन्त:करणमविलम्बितमेवाऽनुप्राणितं भवति।

संस्कृतादिप्राक्कवीनां कवितायां तु शब्दानां प्राधान्यस्य का कथा अर्थोऽपि (वाच्यार्थ:) वराको गुणीभूतो भवति। तेषां हि ध्वने: (व्यङ्ग्यस्यार्थस्य) प्राधान्यमभवत्। अत एव हि तत्काव्यमाकर्ण्य श्रोता अन्तरन्त: प्रमोदामृतमास्वादयति, प्रमदेन च मस्तकमस्य स्वत एवाऽऽघूर्णते। एतत्कारणादेव ललितकलासु कविता सर्वतोऽप्युत्कृष्टा। यतो ह्यस्या-मन्याऽन्यकलावद् भौतिकसाधनानां त्वपेक्षा नास्त्येव, किन्तु कविताशरीरभूत: शब्दोऽप्यत्र गौणतां गच्छति। मधुरतरं प्रस्फुरन्त: शब्दास्त्वमी व्यङ्ग्यस्यार्थस्याऽभिव्यञ्जने तथा सहायका भवन्ति यथा ध्वन्यर्थं संमुखमुपस्थापयन्तस्ते प्रमोदमाविर्भावयन्ति भावुकानां हृदि। इत उर्दूकवितायां प्रस्फुरन्त: शब्दा एव श्रोतुर्हृदयं गृह्णन्ति। अनन्तरं ते वर्णनीयभावं प्रति प्रापयन्ति श्रोतारम्। अस्तु; प्रसक्तानुप्रसक्तेन मुधा भूयान्विस्तर: संपद्यते।

उर्दूकवीनां कवित्वकलाविस्तारेऽपि उर्दूभाषायां छन्द:शास्त्रं संक्षिप्तमपि नास्ति। पारस्यभाषाया एव छन्दांसि व्यवह्रियन्त एतैरपि। हिन्दीत: सेयं पृथग् भाषा नास्तीत्यत्र तदिदमपि प्रमाणम्। यदीयं

पृथग् भाषाऽभविष्यत्तर्हि साहित्यस्य सर्वाण्येवाङ्गान्यभविष्य-न्नस्यामपि। किन्तु आरब्ध-पारस्य-भाषाशब्दान् हिन्द्यां सन्निवेश्य यदा सेयं भाषा पृथगक्रियत तदा छन्दोविषये शून्यतामालक्ष्य पारस्यभाषाया एव छन्दःशास्त्रमुपजीवितमेतैरपि। एतद्विषये विशेषदर्शनाय साहित्यवैभवस्य 'छन्दोवीथ्याः' 'उर्दू-भाषाप्रचलितानि छन्दांसि' इति शीर्षकभागः (पृ. ३७८) परिशीलनीयः पाठकमहाभागैः।

मोगलसाम्राज्यस्य पतनोत्तरं शाहआलममारभ्य (वि.सं. १७८०) बहादुरशाहज़फरस्य समयपर्यन्तमियमुर्दूकविता भारते समनुबभूव भूरि विलासवैभवम्। 'ग़ज़ल'शब्दस्यार्थः प्रेमिणः समागमः, प्रणयनिवेदनं चेति। अत एव प्रणयनिबद्धा सेयं गज़लनाम्नी छन्दःशैली तदारभ्यैव लोकानां भृशमभूद् हृदयग्राहिणी। पञ्चाप-युक्तप्रान्त-राजस्थानादिषु तु उर्दू सम्पर्कात्सेयमासीदेव सर्वजनप्रिया, किन्तु गुर्जरादिदेशेष्वपि तद्भाषाकवयो गजलमयीं कवितां प्रेम्णा निबबन्धुः। अभिननन्दुश्च तामेतां सशिरःकम्पं करतलध्वनिभिः प्रेक्षागृहेषु (नाटकभवनेषु) सहृदयरसिकाः। धार्मिकसंस्थानां भजनोपदेशकाः प्रजानामस्यामेव गीत्यामनुरागमालक्ष्य लोकानुरञ्जनाय जगुः प्रकाश्यसभासु प्रतापनारायणमिश्रादिनिबद्धा एता एव गीतीः। किमधिकम्, गजलगीतिष्वेव लोकानामैकान्तिकीमासक्तिमुपलभ्य गीतगोविन्दस्य 'प्रिये चारुशीले.' इत्याद्या *अष्टपदीर्गजलप्रकारेण गायन्तो गायका अपि समालक्ष्यन्त। ततश्च समयप्रगतेरनुसारं गजलेषु गतामभिरुचिं लोकानां संस्कृतभाषायामपि समाहर्तुम्, सहैव गीर्वाणभाषाया-स्तद्गुम्फनयोग्यां कोमलतामपि प्रदर्शयितुम् 'उर्दूभाषाचत्वरः' इत्यादि शीर्षकैः समगुम्फ्यन्त एतच्छन्दोलयनिबद्धा अपि गीतयोऽत्रेति सूचितमेव पुरस्तात्।

## विहारिविलासः

बिहारिसतसईकारस्य विहारिणः सूक्तिर्न केवलं हिन्दीसाहित्ये एव, अपि तु भारतीयेष्वन्यान्य-साहित्येष्वपि प्रकामं प्रसिद्धिं लोकप्रियतां चाऽवापेति को वा न वेद ? ये संस्कृतपण्डिताः 'भाखा (षा)' इत्युक्त्वा देशभाषां, 'तद्भाखा(षा)' पण्डितांश्च शाखामृगानिव निराकुर्वन्तः समालोचकैः प्रख्यापितास्तेऽपि विहारिणः सूक्तिमभ्यनन्दिषुरन्तःकरणेन; उपजिजीवुश्च समये समये तामेताम्। किं बहुना, यः किल पण्डितराजो जगन्नाथः सर्वोत्कृष्टो विमर्शकः सर्वविधकाव्यरचनायामनुपमश्च परिगण्यते, यश्च स्वीये साहित्यनिबन्धे उदाहरणविधयापि परकीयपद्यानां स्पर्शं सावहेलं तिरस्करोति सगर्वं प्रतिजानीते च –

**'निर्माय नूतनमुदाहरणानुरूपं**
**काव्यं मयात्र निहितं, न परस्य किञ्चित्।**
**किं सेव्यते सुमनसां मनसापि गन्धः**
**कस्तूरिकाजननशक्तिभृता मृगेण ?॥'**

तस्यापि काव्ये विहारिणः सूक्तिरविकलं संवदते—

**'नीलाञ्चलेन संवृतमाननमाभाति हरिणनयनायाः।**
**प्रतिबिम्बित इव यमुनागभीरनीरान्तेणाङ्कः॥'** इति पण्डितराजः;

**'छिप्यो छबीलो मुख लसै नीले आँचल चीर।**
**मनो कलानिधि झलमलै कालिन्दी के नीर॥'** इति च बिहारी।

[समकालिकयोरनयो: केन क उपजीवित इति न सहसा शक्यं निर्णेतुम्। यतो हि–

**'आमूलाद्रत्नसानोर्मलयवलयितादा च कूलात्पयोधे-**
**र्यावन्तः सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु।**
**मृद्वीकामध्यनिर्यन्मसृणमधुझरीमाधुरीभाग्यभाजां**
**वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः॥'**

इत्याद्यभिमानवाही, प्राचामर्वाचां च सर्वेषामपि कवीनां सदर्पमालोचयिता, निर्माय नूतनेतिपद्ये परकीयकाव्यानां गन्धमात्रमपि परिहरन् पण्डितराजसदृशः स्वसमय एव वर्तमानस्य कवेः काव्यमाहरेदिति न चेतसि प्रविशति। इतो मोगलसाम्राज्यधुरन्धरादाम्बेर–पतेर्जयसिंहमहाराजाधिराजात्प्राप्तविपुलसंमानः सर्वत्र देशे ख्यातिमुपगतश्च विहारिमहाकविस्तस्मिन्नेव समये जातां रचनां तस्मिन्नेव समयेऽनुवदेदित्यपि विचारसापेक्षम्। अत एव तदिदं गवेषकमहाभागैरन्वेषणीयं नूनम्।]

त्रिंशतोप्यधिका वत्सरा व्यतीताः। वङ्गभाषायाः सुप्रतिष्ठिते 'प्रवासि' मासिकपत्रे विहारिणः सूक्तीः समुद्धृत्य प्रादायि तत्परिचयो वङ्गीयसाहित्यसेविभ्यः। तत्र हि विहारिसप्तशत्याः संस्कृतभाषाया-मप्यनुवादः समजनीत्युल्लिख्य संस्कृतभाषानिबद्धमेकं दोहापद्यमप्युद्धृतमभूत्। नव्यकाव्यभिमानिनो नवयुवकस्य मे समुदकण्ठत चेतः – 'कीदृशी सेयं संस्कृतोपनिबद्धा विहारिसूक्तिः स्यादिति'। व्यतिगतेषु कतिषुचिद्वत्सरेषु निजश्वशुरालयमोडछाराजधानीं 'टीकमगढ़'महमगां प्रसङ्गेन। तत्र विहारिणो वार्ताप्रसङ्गे समुत्थिते यदृच्छया व्याहरम् – 'श्रूयते संस्कृतेप्यस्याः सप्तशत्या अनुवादो जात इति'। एतदुत्तरे ओरछाराजगुरवो वेदमूर्तिभट्टाचार्य पं.श्रीरघुनाथदाऊजूमहाभागाः (मम श्वशुराः) समभाषन्त– – 'आम्, सोऽनुवादोऽस्मत्संबन्धिना अजयगढ (बाँदा)राजगुरुणा 'लल्ला' उपनामकपरमानन्दपण्डितेना-ऽस्मद्बाल्यकाल एव व्यधायि। शक्यते द्रष्टुं सा सप्तशती। अस्ति नः सविधे सा'।

अहं कलानिधिमिव करे प्रापम्। नासीन्मे हर्षस्य परिसीमा। सोत्साहमहं प्रार्थये— 'अपि शक्नोमि द्रष्टुं संप्रत्येव ?'

'बन्धनेषु कुत्रचित्सा निहिता। श्वस्तामहमन्वेषयिष्यामि'

उद्वेलन्तमुत्साहं कथंचित्संनिरुध्य व्यत्यगमयं तां रजनीम्। स्नानभोजनादेः कालमतिवाह्य यथाकथञ्चित्, श्वशुराज्जिह्रेतीति व्याकरणोदाहरणेष्वपि चिरादनुवृत्तां लज्जामतिलङ्घ्य मन्दमन्दैरक्षरैया-चमिमां भट्टाचार्यमहाभागान्। ते हि स्नेहेन मां निरीक्ष्य मन्दमन्दमस्मयन्त पूर्वम्, ततो वार्धक्यसुलभमालस्यं निरस्य पुस्तकान्वेषणाय प्राचलन्। नानाबन्धनेषु तामेतामन्विष्य परस्तात्समार्पयन्मे हस्ते सप्तशतीमिमाम्। मुदितमानसः सोहमुपगत्य निजनिवासप्रकोष्ठमारभे तस्मादेव समयान्निरीक्षणमेतस्याः।

संस्कृतदोहाच्छन्दस्सु 'शृङ्गारसप्तशती'नाम्ना सोयमनुवादो भारतसुप्रसिद्धस्य हिन्दी–साहित्यकर्ण-धारस्य भारतेन्दोर्हरिश्चन्द्रस्य समये परमानन्दमहाभागेनाक्रियत यस्योपरि प्रादीयत प्रचुरः पुरस्कारो भारतेन्दुना। सेयं सप्तशती वाराणस्यां शिलामुद्रायन्त्रालये मुद्रिता चापि। परमानन्दमहाभागेन टीकाऽप्यस्या निरमायि यस्याः सहायतया क्लिष्टोयमक्षरगुम्फो भवेद् बुद्धिगतः। आसीन्मे ग्रीष्मावकाशः। भट्टाचार्यादी-नामत्याग्रहेण, तेषामुपरि प्रदर्शयन्निवोपकारं, न्यवात्सं प्राकृतशोभामयेस्मिन्ननुपमे प्रान्ते। स्नानभोजनाद्यावश्य-ककार्याण्यतिरिच्य, सर्वेणापि समयेन समापयं प्रायशः समग्रामेव सप्तशतीमिमाम्। व्यक्तिगतः स

समयः। परमानन्द-महाभागोऽपि स्वर्गस्थः, किन्तु साहित्यलोचनाप्रसङ्गेन सप्तशतीविषये विगुणान्यपि कानिचिदक्षराणि विवशतया वक्तव्यान्येव नूनम्। सप्तशती सेयं यत्किञ्चित्संस्कृतप्रविष्टानामथ हिन्दी-व्रजभाषापटिष्ठानामवश्यं सन्तोषाय, यतः किल सप्तशतं दोहापद्यानि संस्कृते तेन रचितानि। किन्तु संस्कृतमार्मिका मन्ये नाभिरोचयेरंस्तामिमां रचनां तत्त्वतो विचारे सति। तथ्यं त्विदमस्ति यत् परमानन्दोऽसौ व्रजभाषासाहित्येऽवश्यं मार्मिकः समर्थः कविश्चापि। किन्तु संस्कृतस्य साधारणो विद्वान्। विहारिसदृशसंक्षिप्तवादिनो दोहानां दोहापद्येष्वेव संस्कृतेऽनुवादश्च नूनं सुतरां कठिनः। जोधपुरराजधान्यामपि सुब्रह्मण्यशास्त्रिणा विहारिसूक्तेः संस्कृतेऽनुवादोऽंशतो व्यधायि पुरा, परं तेन संस्कृतच्छन्द एव गृहीतं न दोहाच्छन्दः। अत्र हि पादान्तानुप्रासो (तुकान्त) भूयस्तरां संकटवाही।

अस्तु, रसमयेषु येषु येषु पद्येषु परमानन्दमहोदयेन भूरिशो वैगुण्यं व्यधायि, कौतुकोद्दीप्तमतिस्तेषा-मालोचनामहं नर्मपरिहासविधया व्यधां तस्मिन्नेव समये। जयपुरात्प्रचरतः संस्कृतरत्नाकरस्याऽऽसंसंपादको म.म. पं. श्रीगिरिधरशर्मचतुर्वेदमहोदयस्य सहकृत्वा। अत एव पत्रेऽस्मिन् सेयमालोचना प्रकाशतामित्य-दीयत सुहृद्भिः संमतिः। साहित्यमार्मिकस्य स्वर्गीय पं. श्रीपद्मसिंहमहोदयस्य प्राकाश्यत सतसईसमा-लोचना 'सतसई संहार' नाम्ना तेष्वेव दिनेषु सरस्वतीमासिकपत्रे। प्रचुरपरिहासापि मर्मस्पर्शिनी सेयमालोचना समभूल्लोकानां परं हृदयग्राहिणी। अत एव संस्कृतेऽपि सेयं सप्तशतीचर्चा भवेत्प्रमोदाय साहित्यरसिकानामित्यासीच्चेतसि किञ्चित्कौतूहलमपि। तत एव साहित्यिकविनोदरूपेण सेयं सप्तशतीसमीक्षा व्यलेखि विस्तृत्य ['वर्णिका' रूपेणैकतमपद्यस्यालोचना प्रदीयेताऽग्रे विनोदाय जातु साहित्यरसिकानाम्] किन्तु विनोदविहितापि सेयमालोचना परमानन्दसम्बन्धिनामस्मत्सजातीयानां क्षोभायाऽभूत्। ओरछाराजकवि पं. पीताम्बरमहोदयेन बहूनां साहित्यसेविनां समक्ष एव साधिक्षेपमुक्तम्-- "आलोचनाकरणं सरलम्, किन्तु विहारिणः सूक्तिं संस्कृते समवतार्य यदि कश्चिद्दर्शयेत्तर्हि तमहं जानीयाम्"।

'खड्गव्रणं पूर्यते परं वार्ताव्रणं न पूर्यते' इति हि सत्यं नूनम्। अन्यो यद्येवमाक्षेप्स्यत्तर्हि जातु सह्यमप्यभविष्यत्, परं मार्मिकेण वैदेशिकराजकविना, ततोपि सजातीयेन कृतः सोयमाक्षेपो बलवदाहन्ति स्म मे हृदयम्। तत्क्षण एव तामिमामालोचनामहं बन्धनबद्धामकरवम्। नेमां प्राकाशयं रत्नाकरेऽपि। तत्क्षण एव निश्चयमकार्षं यद्विहारिणः सूक्तिमेषोऽहं संस्कृतेऽवतारयेयम्। सर्वतः पूर्वं येषां परमानन्द-पद्यानामालोचनामहमकार्षं तान्येव न्यबध्नां संस्कृते दोहाच्छन्दसि। किन्तु सुमहान् खेदो यदोरछाराजकवये पीताम्बरपण्डिताय तेषां प्रदर्शनस्य नाऽभूदवसरः। व्यतियाति ग्रीष्मावकाशे प्रत्यागमं निजनगरम्। किन्त्वाक्षेपव्रणं मे नापूर्यत तत्। विहारिणः सूक्तिमहमाबध्नां संस्कृतसरस्वत्याम्। राजकवि पं. पीताम्बर इवान्येऽपि साहित्यरसिकाः समालोचयन्तामिमां सूक्तिमिति बुद्ध्या मित्राणां संमतिमनुसृत्य 'सप्तशती 'तः कतिचिन्मे पद्यानि 'विहारिविलास' नाम्ना प्राकाशयं 'साहित्यवैभवे'।

कतिचिद्वर्षाणि व्यतीतानि विहारिसूक्तेरनुवादरूपाणि मम संस्कृतदोहापद्यानि पण्डितपरमानन्दकृतेः समालोचनासहितानि प्राकाश्यन्त लखनऊतः प्रचरन्त्यां सुप्रसिद्धहिन्दी-मासिकपत्रिकायां 'माधुर्याम्' अपि। यत्र परमानन्दपक्षावलम्बनपूर्वकं मत्कृतेः प्रति समालोचना प्रविधीयते स्म पं. किशोरीदास-वाजपेयिमहाभागेन। सेयमालोचना साहित्यरसिकैस्तत एव समीक्षणीया, नात्र तत्सूचनस्यावसरः। विषयेऽस्मिन्नन्यन्निवेदनीयं तु साहित्यवैभवस्य विहारिविलासे (पृ. १०१) विलोक्यम्। पं. परमानन्दकृतविहार्यनुवादस्य समीक्षायाः पद्यमेकं तु रसिकानामाग्रहेण समुद्ध्रियते तावदिहैव।

## परमानन्दकृतसप्तशत्याः समीक्षा

नायिकाया दृक्चातुरीवर्णनपरं शृङ्गाररससर्वस्वमस्त्येकं विहारिण: पद्यम् -

**'सटपटाति सी ससिमुखी मुख घूँघटपट ढाँकि।**
**पावकझर सी झमकि कें गई औचकाँ झाँकि॥'**

सहचरं प्रत्याह नायक: — 'सटपटातिसी' मामवलोक्य लज्जमानेव मुखं वसनाञ्चलेनाऽवगुह्य (वास्तवे सा तादृग् लज्जमाना नास्ति परमन्ये तस्या अनुरागं मा विद्युरिति मुखावगुण्ठनं रचयन्ती लज्जाऽऽकृतं दर्शयतीत्याशय:)। पावकस्य अग्नेर्ज्वालेव (अत्युज्ज्वलसुवर्णवर्णेति भाव:) सा सरभसं गता। केवलं सा गतैवाऽभविष्यत्तर्हि मम हृदयमेवमार्द्रव्रणं नाभविष्यत्। किन्तु गच्छन्ती सा एकं शरमप्यक्षिपत्। कोऽसौ शर: ? 'गई औचकाँ झाँकि' चकितमधुरं विलोकयन्ती सा गताऽभूत्। द्रुतं प्रयान्त्यास्तस्या-स्तदेतद्विलोकनं न मे हृदयादपयाति। किन्तु विशिख इवाधुनापि हृदये निखातमित्यर्थ:। अत्राग्रे: शिखेत्युत्प्रेक्षा तस्या: सरभसगमनमनुकूलयितुं प्रायोजि। किञ्च सुवर्ण-चम्पकवर्णायास्तस्यास्त-नुलताया अपि सादृश्यमनेनोत्प्रेक्षितं भवति। अस्मिन्पद्ये 'सटपटातिसी' 'गई औचकाँ झाँकि' इत्येतत्खलु जीवितभूतम्। सलज्जमिव समाकुञ्चितदेहलतं यत्सा मुखमवगुण्ठ्य चकितमधुरं परावृत्त्य पश्यन्ती गताभूत्, तत्र मुखावगुण्ठनसमकालं कृतो लज्जा-विनय-मधुर: कोऽप्यनिर्वचनीयो विभ्रम:, सकुतुकचकितं तत् परावृत्त्य विलोकितं च साम्प्रतमपि मे हृदयमधिवसतीति वर्णयति नायक:। इत्थं रससदनस्यास्य पद्यस्योपरि कथमिव निष्ठुरकृपाणमुत्थापयामास रौद्रमूर्तिरनुवादक इत्यवलोक्यताम्-

**'द्रुतं चन्द्रवदना च सा वसनावृतवदनैव।**
**प्रदर्शयित्वा निजतनुं दहनलतेव गतैव॥'**

सा चन्द्रवदना वसनावृतवदनैव अञ्चलाच्छादितमुखैव निजतनुं प्रदर्शयित्वा (संस्कृतज्ञा: 'प्रदर्श्य' इति बुध्यन्ताम्) [मामिति शेष:, इति टीकाक्षराणि] दहनलतेव द्रुतं गतैव। वसनावृतवदनैव सा समग्रां निजतनुं दर्शयित्वा— अर्थात् केवलं मुखमेव वसनाच्छादितमासीत्, मुखेतर: सर्वोऽपि नीचैर्भाग: प्रदर्शितस्तया नायकाय! अहह अनुभूयतामर्थलालित्यम्। 'वसनावृतवदनैव निजतनुं दर्शयित्वा' निजतनुप्रदर्शनसमये वदनाऽऽवरणमनुचितमासीत् इति 'वसनावृतदनैव' इत्येवकारस्य स्वारस्यं दर्शितवान् महाभाग:। वयमपि पश्याम: समुचितमेवेदमिति। यदा तया सर्वा निजतनुर्दर्शिता तदा केवलं वदनेनैव वराकेण किमपराद्धमिति सत्योयमनुवादकस्याऽऽक्रोश:! एकमाश्चर्यं दृश्यताम् — नायिकया सर्वा निजतनुदर्शिता, परं मुखं वसनाऽऽवृतमेवास्ति, न किञ्चिदपि दर्शितम्। तथापि नायको ज्ञातवान्— 'चन्द्रवदना च सा'। नैव, नैव, ढाकानगरनिर्मितमलमल्लकृतावरणं मुखमासीत्, अत एव नासीद्वस्त्रकृतं पिधानं मुखस्येति समाधानं चेत्? तर्हि महाराज! मुखादधोभागस्यैव निरावरणं दर्शनस्य काऽऽसीदावश्यकता, यद्वसनं पृथक् कृत्वा निजतनुप्रदर्शनम् ? किमु मुखादधोभागे एतावदप्यावरणं मास्तु इत्यासीच्चन्द्रवदनाया इच्छा? अथवा मुखभागे एकं ढाकानगर-निर्मितमलमल्लवस्त्रं संयोजितमासीत् कन्धरादिनीचैर्भागे तु स्थूलपटं स्यूतमासीत् यदपसारणे तनुप्रदर्शनम्।'परं नीचैर्भागे स्थूलपट:, मुखभागे च जालवस्त्रमिति' यवनीनामिव 'आवरकं' ('बुरका') तदेतद्भवेत्। अस्तु, परं मूलकारो विहारी नास्मिन् जाले पतति। कथयति स: - 'गई औचकाँ झाँकि'। चकितमधुरावलोकनसमये शशिमनोहरं मुखमभूत्तस्य नयनगोचरम्।

ननु शशिमुखीत्वं नायकस्य पूर्वदृष्टमासीत् अत एव न तदर्थमेतावत्परिकल्पन-मावश्यकम्। तर्हि पृच्छामः – शशिमुखीत्वं तु नायकस्य पूर्वदृष्टमासीत्। मुखेतरोऽन्यो भागः साम्प्रतं 'प्रदर्शयित्वा निजतनुम्' इति नायिकया स्वयं दर्शित एव। पुनः किमवशिष्टमासीद् यदर्थं नायको भवांश्च टीकायामधुनापि स्मरामीति भावं दर्शयति।

ननु नयनप्रकरणगतमिदं पद्यमिति तादृशं चकितविलोकितं नायकः पुनः पुनः स्मरतीति किमत्रासमंजसम्? उच्यते, भवदनुवादे नायिकाया विलोकनभङ्ग्या नामापि नास्ति। किमन्यत्स्यात्, विहारिणः पद्येऽस्मिन् 'सटपटाति सी' 'गई औचकाँ झाँकि' इति खलु जीवितभूतमिति पूर्वमसाधयाम। परमनेन जीवितेन विनाकृतमवलोक्यते तावदनूदितं पद्यम्। नास्त्यनयोरप्यर्थोऽस्मिन्। 'सटपटाति सी' इत्येतदर्थे मन्ये द्रुतमिति प्रयुक्तमनुवादकेन। परं कस्मिन् हिन्दीभाषाकोषे लज्जामर्थयतः पदस्यास्य द्रुतमित्यर्थः प्राप्तोनुवादकेन? एतत्तु विचारणीयमासीदनुवादकमहाभागेन– यदि 'सटपटाति सी' इत्यस्य द्रुतमित्येवार्थोऽभविष्यत्तर्हि रभसार्थद्योतकं 'झमकि कें' इति पदं न पुनः प्रायोक्ष्यत साभिप्रायपदप्रयोग-पटुना विहारिणा।

इदानीं 'प्रदर्शयित्वा निजतनुं' विचार्यतां महाभागैः। एकवारं विहारिणो भाषापद्यमनुवाच्य पुनरिदं संस्कृतपद्यं पठ्यतां ततोऽवधार्यतां कस्यायमनुवादः? पश्यामः– 'सटपटाति सी' इत्यस्यार्थः कृतः **'द्रुतम्'**। ससिमुखी–**चन्द्रवदना,** मुख घूँघट पट ढाँकि **वस्त्रावृतवदनैव,** पावकझर सी **दहनलतेव,** गई **गता**। इदानीमवशिष्टे 'झमकि कें' 'गई औचकाँ झाँकि' इति। अनयोर्मध्ये 'प्रदर्शयित्वा निजतनुं' कस्यानुवादः ? रभसार्थं द्योतयतः 'झमकि कें' इति पदस्य 'प्रदर्शयित्वा निजतनुम्' इत्यनुवादं कुर्यादित्यनुवादकेऽपि न संभाव्यम्। तर्हि 'गई औचकाँ झाँकि' इत्यस्यैव 'प्रदर्शयित्वा निजतनुम्' इत्यानुवादः। इदानीं विचार्यतां कीदृशोयमनुवादः? 'चकितचकितं विलोक्य गता' इति यस्यार्थः तस्य 'प्रदर्शयित्वा गते'ति स्पष्टोयं ग्राम्योर्थः। ननु भावानुवादः सोयम्, नाक्षरानुवादेन प्रयोजनमिति चेत्, 'प्रदर्शयित्वा निजतनुम्' इति पदयुगलं 'औचकां झाँकि' इत्यस्य कं भावं स्पृशति इति श्रीमद्भिरेवोच्यताम्? निजतनुं दर्शयित्वा गतेति स्पष्टोयं ग्राम्योर्थः। अञ्चलावगुण्ठितमुखदर्शने यथा रसिकानामुत्कण्ठा न तथा स्पष्टमुद्घाटितमुखदर्शने। परमितोऽनुवादकमहाभागस्तु सर्वां तनुमेव निरावरणं दर्शयति। न जानीमो विहारिसूक्तेः कं भावं स्फुटयत्यनेन सोयम्। वयं तु जानीमो नासौ भावानुवादः। एष हि विहारिसूक्तामृतमाधुर्यस्य अभावानुवादः।

किञ्च विहारिणः सप्तशत्यां प्रकरणबन्धमनुसंधाय सन्ति पद्यानि। अनुवादकस्तु प्रकरणबन्धानुसारं सर्वाणि दोहापद्यानि योजयित्वैकस्मिन् स्थाने लिलेख। ततस्तदिदं पद्यं महामनोहरे नायिकानयनचातुरी-वर्णनपरे प्रकरणे संयोजितमस्ति स्वयमनुवादकेनैव। इदानीं दृश्यताम्— **द्रुतं चन्द्रवदना.** इति पद्ये क्वचिदपि दृश्यते नायिकया अवलोकनचातुरीवर्णनम्? इदं पद्यं वाचयन् किमु सहृदयः प्रत्येतुं शक्नुयाद् यदेतस्मिन्पद्ये विहारिणा अवलोकमाधुर्य-मुपवर्णितमिति। अनेन हि 'निजतनुप्रदर्शनपूर्वकं नायिका त्वरितं गता' इत्येवार्थं प्रतीयात्सहृदयः। अहो यस्यार्थस्य कृते कवेरियान् संरम्भः, यं च चकोरनयनाया-श्चकितमधुरं विलोकनरूपमर्थं प्रकाशयन् कविमूर्द्धविहारी विहारी सहृदयानां मनो हर्तुमैच्छत्, निःसंशयतमं सफलोऽप्यभवदत्र। किन्तु तमेवार्थमनुवादशिलया निर्दयतममेवं चूर्णयामास महाकर्मा श्रीमाननुवादकम-हाभागः। हन्त कीदृशोऽयं भावानुवादः?

'प्रदर्शयित्वा' इति व्याकरणसौष्ठवसमीक्षणं तु दूरत: परिहरेम। अद्यावधि सोढा एव एतावत्पर्यन्तं पर:शता व्याकरणाशुद्धयश्छन्दोभङ्गाश्च। अत्र हि प्राक्प्रसिद्धमाभाणकमेव हृदये कुर्म:— 'अस्माकमालोचकानामर्थे तात्पर्यं न शब्दे' इत्यादि।

# साहित्यवैभवस्य वीथीक्रम:

## मुखपत्रम्

सर्वत: पूर्वमस्य मुखपत्रम् (टाइटिल पेज) सूक्ष्मेक्षिकया विमर्शकैरालोच्यं स्यात्। आलोचक-पण्डितानां कर्कशैराकूतैरिदमखिलं छन्दोमयमक्रियत। छन्दोऽपि व्रजभाषापरिगृहीतम्, यत्र पादान्तानुप्रास: (तुकान्त) प्रयोजनीयो भवेत्। 'व्यञ्जद्वृत्तपुञ्जे' इत्युपरित आरभ्य-'जयपुरात्तेन॥ १॥' इति पर्यन्तं कवित्तम्। एतदग्रेपि तच्छन्दोमयमिति स्वयमेव मार्मिकैरवगम्येत।

## वीथीनामारम्भ:

अस्य ग्रन्थस्येव नवयुगसाहित्यस्यापि सोयं प्रात:काल इति प्रारम्भसूचकात्प्रात:-कालदेव ग्रन्थारम्भ:। कवीनां प्राकृतशोभैव निसर्गप्रियेति विपिनविभावर्णनेन ग्रन्थारम्भमङ्गलम्। तत: प्रकृतिशोभा-सर्वस्वभूता: षड्तव:, ऋतुभिर्विजृम्भिताश्च नवरसा:। ततो रसपरिपाकेऽपि न नीतिरतिवर्तनीयेति सूचनार्थं नीतिवीथी, यत्र नवीन: प्राचीन: सर्वविधोऽपि दृष्टिकोणोऽनुसृत:। कवीनां नीतिरपि न विनोदरहितेति तत्सहकृता विनोदवीथी, यत्र समीक्षाविनोदप्रसङ्गेन लोकमर्मवर्णनम्। ततो विनोदसाधनं छन्द:संदर्भो, गीतयश्च।

नवनिर्मिते साहित्ये युगपरिस्थितिपरिदर्शनं कवे: सामयिकस्थितिसूचकमिति नवयुगवीथी, यत्र नवयुगसर्वस्वस्य भौतिकविज्ञानस्य ('साइन्स') वैभवभूता। विद्युद्व्योमयान-रेल-यन्त्र-सीनेमादयो वर्णिता:। ग्रन्थनिर्माणसमये न संलपच्चित्रपटानां (टॉकीज्) प्रारम्भ इति मूकाभिनयसाम्यं परिदर्शितं कविनेत्यालोक्येत पाठकै:। ततो वर्तमानशासकानां सर्वविधं नीतिपरिपाटीपाटवम्, यस्य हि प्रत्यक्षं प्रमाणमिदमेव यद्राजनियमकार्कश्यात्कवयोऽपि संयतयैव भाषया तथ्यमिदमावर्णयन्तीति वर्णनेनानेन सूचितम्। ततो वर्तमानकालिकशिक्षा-समाज-नेतृ-सुधारकादीनां वर्णनम्। उपसंहृतिवीथ्यामीर्ष्यालूनां पण्डितानां परिस्थितिचित्रणमपि विनोदबुद्ध्या किञ्चित्परिशीलनीयम्। वंशवीथ्यां च कवेर्वंशस्य जयपुरमहाराजानां च किञ्चित्सूचनम्। साहित्यवैभवस्य भूमिकायामप्येतद्विषये किञ्चदावर्णितमिति तत्समालोकनीयं सहृदयै:।

## जयपुरवैभवम्

मञ्जुकवितानिकुञ्जाख्येऽस्मिन् संदर्भे छन्द:प्रबन्धे यथा नूतनता, तथा ग्रन्थस्वरूपेऽपि पूर्वसंस्कृतकविभ्यो नवीनतावलम्बिता। पूर्वे व्रजभाषाकवय: साहित्यग्रन्थप्रणयनेऽपि पूर्वं स्वाश्रयभूतानां राज्ञां तन्नगरादेश्च वर्णनं विधाय ततो वर्णयितुमुपक्रान्तं साहित्यादि-विषयमुपाददते स्म। तत एव भागद्वयात्मकेऽस्मिन्निकुञ्जे-प्रथमभागेस्मिन् जयपुरवैभवे राजविभूतेर्नगरादेश्च वर्णनमवलोक्येत। द्वितीये साहित्यवैभवे च नवीनपद्धत्या कृतस्य युगानुसारिसाहित्यस्य दिग्दर्शनमुपलभ्येतेति निवेदितवानस्मि पूर्वम्।

जयपुरवैभवेऽस्मिन् पूर्वं चतुष्पदीचत्वरो यत्र व्रजभाषाप्रसिद्ध' चौपाई 'च्छन्दस्सु प्रारम्भे प्रशंसनीयानां संस्कृत-प्राकृत-व्रजभाषामहाकवीनामनुकीर्तनम्। यत्र प्रसङ्गेन प्राचीनसाहित्यस्या-लोचनम्, तत्तत्कवीनां साहित्ये किंकृतो विशेष इति च नवीनानां परिचयाय संक्षेपतः सूचितम्। चौपाईच्छन्दसि तत्रभवान् गोस्वामी तुलसीदासः परिगण्यते सर्वमूर्धन्यः, ततः तस्यैवाऽऽदर्शेन छन्दःशैलीमिमां संस्कृते प्रवर्तयता प्रारम्भे सुजनदुर्जनादीनामनुकीर्तनं प्राचां ग्रन्थकृतां पद्धत्या विनिवद्धम्।

काव्यकलायामायुर्वेदे चोभयत्रापि कविराजैर्जयपुरराजवैद्यश्रीकृष्णरामभट्टमहाभागैः' पञ्चाशद्वर्षेभ्यः पूर्वं संस्कृते विनिबद्धं जयपुरविलासकाव्यं मन्ये न विस्मरन्ति संस्कृतानुरागिणः, यद्धि विनोदमयं काव्यमन्विष्यतामपि न साम्प्रतं सुलभं साहित्ये! तत्कृतामावश्यकतां संस्कृते संपूरयता तदादर्शेन नगरस्य स्थानोद्यानादेश्च वर्णनमाबद्धं विनोदपद्धत्या। अन्वेषणशीलानामुपयोगाय जयपुरेतिहासस्य संक्षिप्तसूचनापि सह प्रदत्तास्ति। यस्याः प्रामाणिकः संग्रहो जयपुरेतिहासस्य विशेषज्ञेन हन्त साम्प्रतं स्वर्गवासिना विद्याभूषणपुरोहितश्रीहरिनारायणशर्मबी.ए. महाभागेन प्रसादीकृतः। जयपुरविलासे तत्सामयिकानां मुख्यमुख्यराज्याधिकारिणां पण्डितादीनां च विनोदमयं वर्णनमवश्यमासीत्परं मेलकादीनां नासीदुपनिबन्धनम्। तदर्थं 'जयपुरमेलककुतुक' मिति नाम्ना पृथक्काव्यं निर्मितं यद्धि नाद्यापि प्रकाशितम्। किन्तु ग्रन्थेस्मिन्- स्वर्गगतानां प्रसिद्धविदुषां यथोपलब्धं जीवनवृत्तम्, जयपुरे प्रसिद्धानां मेलकानामुत्सवानां (त्यौहार) चापि वर्णनमिहैव संकलितमिति पश्येयुः साहित्यविनोदिनः पाठकमहाभागाः।

जयपुरविलासे- कवेः समये वर्तमानस्यापि ग्रन्थनिर्माणकाले स्वर्गगतस्य श्रीरामसिंहमहाराजस्य वर्णनमाकलय्य, ततस्तस्मिन्काले वर्तमानस्य माधवसिंहदेवस्य विवाहादेर्वर्णनं यथा समुपनिबद्धं तथा वैभवेऽप्यस्मिन् श्रीमाधवसिंहदेवस्य धर्मौदार्यादीनां वर्णनं विधाय वर्तमानमहाराजाधिराजस्य राजसिंहासनारोह-विवाहमहोत्सवादेर्वर्णन-मालोक्येत काव्यरसिकैः। 'विलासे' यथा स्थाने-स्थाने व्रजभाषायाः संस्कृतस्य च सुरोचकं संपृक्तमुपगुम्फनमालोक्यते तथा 'वैभवे 'प्यस्मिन् न केवलं व्रजभाषाया एव, अपि तु कुत्रचिद् भाषाद्वयस्य, कुत्रचिच्चतसृणाम्, क्वचिच्च अष्टभाषाणामपि सहसंपृक्तं काव्यं विलासिनां विनोदायोपगुम्फितमुपलभ्येत पाठकमहाभागैः। वैभवसामग्र्याः समलंकृतचित्रणाय प्राचां नरेशानां नानालंकृतिपूर्णं विविधवर्णनं विस्तृत्य संकलितं किल प्रागृभिः सत्कविभिः। साम्प्रतिकास्तु केचन 'भटैती' (बन्दिवन्मिथ्यास्तुतिः) इत्युक्त्वा तद्विगर्हयन्ति किन्तु सोयं साहित्यसरणेरपरिचयो नूनम्। अस्तु एतद्विषये 'व्रजकवितावीथेः' आरम्भे संभावितमग्रे (पृ. ४०१) समालोक्येत समालोचकैः। 'विलासे' व्रजभाषाकवित्त्वमपि यथा सामयिकानां विनोदायोपात्तं तथात्रापि व्रजभाषाकवितावीथिरुपात्ता यत्र हि जयपुरराजकवीनां कविताविनोदो भवेत्सुलभः काव्यकलामार्मिकाणाम्।

## चित्रकाव्यानि

खड्ग-छत्र-चामरादिचित्रकाव्यानि भवन्ति भूयसां विनोदकानि। व्रजभाषाकवयः प्रददतेऽस्मै शिल्पायाऽनल्पं गौरवम्। सन्ति व्रजभाषासाहित्ये एतद्विषयकाणि कतिचित्पुस्तकान्येव पृथक्। किन्तु संस्कृतसाहित्येऽपि नैतत्कृता न्यूनता विलोक्येत। अस्ति प्राचीनालङ्कारिकैरादृता सेयमपि चित्रकला। अलङ्कारयुगे[१] खड्गबन्धादिकाव्यानि पर्यगण्यन्त चित्रतया विशेषतः शोभाधायकानि। अत एव हि भोजादिभिः (सरस्वतीकण्ठाभरणादिषु) तदेतत्प्रकरणं विस्तृत्य विन्यस्य स्म। किन्तु ध्वनेः प्रचारानन्तरं रसभावुकानां साहित्यप्रणयिनामुत्तरोत्तरं बन्धकाव्येषु प्रणयः प्रक्षीयते

स्म। मम्मटादिभिस्तदिदमधमं काव्यं पर्यगण्यत तर्हि सर्वचरमभाविना विमर्शकशिरोमणिना पण्डितराजेन ( रसगङ्गाधरे ) काव्यगणनायामेव नेदमुपादीयते[२] स्म।

एवं सत्यपि वैचित्र्यं चमकारो वात्र नास्तीति न शक्यते विवेकाद्वक्तुम्। रुचिविशेषशालिनां भवत्यनेनापि चमत्कारश्चेतसि। अस्य प्रणयनमप्येकं शिल्पम्। परीक्ष्यते मार्मिकैरेतन्निर्माणेऽपि कौशलं कवेः। यत्किञ्चिदपि वाऽस्तु, नानाबन्धकाव्यनिर्माणे सफलस्य कवेः शक्तिविशेषोऽवश्यं स्वीकर्तव्यो भवेत्। ततश्च पूर्णपरिश्रमेण निर्मितानि शक्तिविशेषसाध्यानि बन्धकाव्यानि कुतो वा लोकानामभिरुचिं नाऽपहरेयुः ? अत एव हि महाकविभिरुपादीयन्त परमपरिश्रमसापेक्षाणि काव्यान्यमूनि निजनिबन्धेषु, विशेषतश्चाराजस्तुतिप्रस्तावे। एतद्विषयकपरीक्षाप्रदानाय अभिनन्दनवीथ्यां चित्रचत्वरः समुपस्थापितः। यत्राऽऽरोहणाय प्रारम्भे शिबिका, तर्हि पर्यन्ते आशीःप्रदानमङ्गलाय श्रीफलावाप्तिरवलोक्येत।

## ग्रन्थेऽस्मिन्वर्णितं जयपुरराज्यं तन्महाराजाश्च

ननु राज्यमिदं चाटुविधया किमिति संस्तूयत इति चेत्, तर्हि तद्विषयकं निवेदनं किञ्चिदप्यप्रकाशयतो मम हृदयगोपनापराधः सोयं स्यात्। अत एव किञ्चिदिदमावेद्यते-

भारतवर्षस्य क्षत्रियजातिर्देशरक्षायाः कृते प्रारम्भादेव कवचस्थानीयेति सर्वजनविदितम्। वैदिककालमारभ्याऽद्यावधि जातिविभागानुसारं क्षत्रियकर्तव्येषु प्रजानां पालनमेव सर्वतः प्रधानम्। 'क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः' इति हि त्राणकारणादेव 'क्षत्त्र' शब्दस्य रूढिः। विश्वप्रसिद्धस्यैतिहासिकस्य महामहोपाध्यायपं. गौरीशङ्करओझा-महाभागस्य क्षत्रियजातेर्विषये प्राकाशि पुरा महत्त्वपूर्णो निबन्धो यो हि संस्कृतरत्नाकरेऽपि दृष्टः स्यात्पाठकैः। तस्मिन्नपि, महाभारतमारभ्याद्यपर्यन्तस्येतिहासैः सम्यक्तया समर्थितं यत् क्षत्रियजातिश्चिराद्देशरक्षाकार्येषु सर्वतः प्रमुखं स्थानमधिकरोतीति।

क्षत्रियजातेस्तस्या राजसंस्थानेषु उदयपुरम्, जयपुरम्, जोधपुरमित्यादीनि प्रमुखतया परिगणनीयानि नूनम्। अत्रत्यैर्महाराजैः प्राचीनमर्यादानुसारं निजप्रजाः परिपालयद्भिर्या कीर्तिपताका स्वदेशस्य प्रस्फोरिता तस्याः साक्षीणि साम्प्रतिकेतिहासस्य पत्राण्येव नूनम्। धर्मस्य त्राणाय स्वस्य स्वदेशस्य च गौरवरक्षायै, प्रजानां सङ्कटनिबर्हणाय च निजप्राणानपि तृणीकुर्वद्भिस्तैर्यत्किल कर्तव्यमात्मनः परिपालितं को वा देशहितैषी तमिममितिहासं विस्मरेन्नाम। प्रातःस्मरणीयस्य हिन्दसूर्यस्य महाराणाप्रतापस्य प्रतापः कथं वा निह्नुतो भवेत् ? निजमर्यादापालनाय जीवनपर्यन्तं विधर्मिभिः सह सांमुख्यं वहन् कोऽन्यो नरपालो भवेद् भूमौ ? एतस्यैव कृते मेदपाटीयपार्थिवानां गौरवमस्माकं नाल्पीयसे महत्त्वाय।

## नीतिः

किन्तु नीतेरालोचनं यदि साहित्यक्षेत्रे नाऽपराधः परिगण्यते तर्ह्येतद्विषये किञ्चिदिह निवेदनीयं स्यात्। किं धर्मशास्त्रं किं वा लोकवृत्तम् उभयोरपि दृष्ट्या शासकस्य तदिदमेव प्रधानं कर्तव्यं सिध्यति यत्स निजदेशं संकटात्संरक्षेत्, सर्वविधां चोन्नतिं प्रापयेत्। मान-मर्यादारक्षणाय भीषणयुद्धे प्राणानामपि बलिप्रदानमवश्यं गौरवसामग्री, किन्तु युद्धसंरम्भेणानेन देशस्य देशवासिनां च सर्वदार्थं कियती हानिः संपद्यते, तदुन्नतेर्मार्गाश्च कथं निरुध्यन्ते इति हि मन्ये न विवेकिभ्यो निवेदनीयं स्यात्। अत एव हि कर्तव्यपरायणाः शासका विग्रहं यावद्बुद्धिबलोदयं परिहरन्ति। राजनीतिर्यदि महत्त्वस्य वस्तु परिगण्यते तर्हि तस्यामयमेव विचारो महत्त्वाऽऽधायकोऽस्ति यदात्मानं हानितः सर्वथा संरक्षन् पराजयेत परान्पृथिवी-

पालः। नीतेर्निष्कर्षः प्रोक्तोयमेव नीतिज्ञैः — '**आत्मोदयः परग्लानिर्द्वयं नीतिरितीयती**'। यया हि स्वस्य स्वदेशस्य च चिराय चूर्णीभावः संपद्यते तां नीतिं मन्ये बुद्धिमन्तस्तु न कदाचित्प्रशंसेयुः।

विजयस्य पूर्णाशायां सत्यामपि विग्रहरूपमुपायमधमं न चेत्तर्हि उत्तमं तु न केचित्परिगणयन्ति। पुनर्यत्र देशस्य कालस्य च परिस्थितिः सर्वथा विपरीता स्यात्तत्र्या तु कथैव का? नीतेर्नैपुण्यमिदमेवास्ति यद् युद्धप्रसंङ्गं विनैव निजसाध्यं साध्येत। यदि युद्धमेव राजनीतेः परा काष्ठा तर्हि विग्रहः सर्वेषामुपायानामन्ते कथं परिगण्यते? युद्धादेव राजनीतेः श्रीगणेशः किमिति न संमान्येत? इतिहासस्यालोचकाश्च किमिति सकरमर्दनमनुशोचन्ति यन्महाभारतस्य चेन्महासमरो नाऽभविष्यत्तर्हि भारतस्य सर्वनाशो नाभविष्यदिति।

'**वाराङ्गनेव नृपनीतिरनेकरूपा**' इत्युदीरयतामिदमेव तात्पर्यं यत्परिस्थितेरनुसारं यादृशमप्यवसरं पश्येत्तादृशेनैव प्रकारेण निजदेशं हानितः सर्वथा संरक्षेत्। खड्गेन निजस्य निजानुगतानां च रक्तप्रवाह एव चेत्क्षत्रियाणां परमो धर्मस्तर्हि राज्ञां कृते 'राजनीतिः' इति दुर्बलं शब्दं किमिति शृण्मः? प्रवर्ततां रक्तप्रवाह एव प्रारंभात्। यज्ञीयपशोरिवात्मनो बलिदानं राजबुद्धिशून्यस्य मुशलक्षत्रियस्यैव कृते प्रशंसार्हं स्यान्न राजसिंहासनाधिष्ठितस्य। महाभारतं किल आर्याणां नीतेश्चरमो ग्रन्थः, तत्रापि राजनीतिस्तु तत्र पदे पदे न केवलमुपदिष्टैव प्रत्युत कार्यतो व्यवहृता चापि। भगवता श्रीकृष्णेन पाण्डवानां पक्षमवलम्बमानेन यत्र यादृशोऽवसरो दृष्टस्तत्र समरं विहाय तथैव परिशीलितम्। द्रोणाचार्यस्य, भीष्मपितामहस्य कर्णस्य च विजयः किं समरमात्रेणैवाभवत्? 'नरो वा कुञ्जरो वा' इति मिथ्याप्रायं प्रजल्प्य आजन्मनः सत्यवादी अजातशत्रुरादर्शक्षत्रियो युधिष्ठिरोपि राजकर्तव्यं पालयति। परमधार्मिकाणामपि राजनीतेरनुसारं यत्र मुशलस्येव मस्तकस्फोट एव न राजकर्तव्यं किन्तु नीतेरनुसरणं पथ्यं भवति, तत्र चक्षुषी निमील्य केवलं स्वस्य स्वानुगतानां च समरे बलिप्रदानं राज्ञां कृते न शोभायै, न प्रंशसायै। अपि च बलिप्रदानमिदमेकमात्रस्य नरस्य कृते साध्यम्, येषां शिरसि परोलक्षाणां प्रजानां जीवनं विनिहितं ते यदि सर्वेषां बलिप्रदानेनैव क्षत्रियकर्तव्यं राजधर्मं वा परिपूरयन्ति तर्हि कृतमीदृशेन राजसिंहासनारोहेण।

महाभारतसदृशे धर्मयुद्धेऽपि यत्र नीतिरनुसार्या भवति क्षत्रियभूपालानां, तत्र वैदेशिकानां, विधर्मिणां, हिन्दुधर्मं कूटनीत्या च खड्गेन च प्रत्यक्षं खण्डयतां समक्षे नीतेर्नैपुण्यमस्वीकुर्वतां बुद्धिदारिद्र्यमेवेति बहूनां मतिः। अथवा किंकर्तव्यविमूढतया समर एव तेषामवलम्बनीयोऽ-भवेदिति बोद्धव्यं स्यात्। अन्यथा स्पष्टं विपरीतां परिस्थितिं दृष्ट्वापि युद्धे लोकक्षपणं कीदृशो राजधर्मः? अत एव हि छत्रपतिशिवाजीप्रभृतयो धर्मिकवीरा अपि नीतिनैपुणेन यवनान्निरासुर्न केवलं मुशलबुद्धेरिव युद्धेन। सूचयत्यस्मान्नीतिः— शठे शाठ्यं समाचरेदिति। नव्यविचारशालिनः साम्प्रतिका राजानं देशस्य प्रतिभुवं हिताहितयोरुत्तरदायिनं च यदा मन्यन्ते तदा आत्मसंमानस्य कृते अन्यस्य वा हेतोर्देशशक्तेः सर्वदार्थं क्षपणं को वा प्रशंसेत्?

युद्धवीरता क्षत्रियाणां भूषणम्। यदि सा न भवेत्तर्हि 'वीररसस्य' कः स्यादालम्बनम्? संमुखयुद्धे देहं विसृजन्तः सूर्यमण्डलं भित्त्वा साक्षात्स्वर्गमारोहन्ति। देवाङ्गनास्तेषां वरणाय पारिजातमालां करे धारयन्त्यः प्रतीक्षन्ते। सत्यमिदम्। यः क्षत्रियः केवलं सैनिक एव सृष्टः सृष्टिकृता तस्येदमेव कर्तव्यम्, अस्मिन्नेव च तस्य पराक्रमः प्रशंसा च। किन्तु ये क्षत्रिया राजान एव न, अपितु महाराजाः प्रख्यायन्ते लक्षलक्षप्राणिनां जीवनभारो येषां स्कन्धयोरधितिष्ठति, लक्षाणां कोटीनामनुगतानां निर्वाहो यैरङ्गीकृतः, अथवा एवमुच्यतां यत् लक्षलक्षमनुष्याणां पालन-पोषणार्थं ये भगवता भूमौ प्रेषितास्तैः क्षत्रियैः

पूर्वापरं भूयस्तरां विचारणीयं भवति। ते हि संमुखयुद्धे स्वर्गं प्राप्य स्वस्य स्वार्थमवश्यं साधयेयुः किन्तु यासां प्रजानां कल्याणं तेषामायत्तमासीत्तासां कियानुपकारस्तैः साधितः ? यो योगी संसाराद्विरक्तो विजने तपस्यन् मोक्षमधिगच्छति, अवश्यमयं जनैरभिनन्दनीयः। किन्तु तेन केवलमात्मोद्धारः कृतः, अशेषजगतस्तेन किं मङ्गलमाचरितम् ? किन्तु ये योगिनो योगसिद्ध्या स्वस्येव लोकानामपि कल्याणमाचरन्ति किं ते निन्दनीयाः ?

## आम्बेरराजानां नीतिः

देशस्य परिस्थितिं युद्धस्यानुकूलां न विलोकयन्तस्तावदाम्बेरनरपाला निजनीतिनैपुण्येन मोगलसाम्राज्यमेकान्ततो वशीभूतं चक्रुः। उपरितस्ते मोगलसाम्राजामधीनाः प्रासिध्यन् किन्तु तत्सामयिक-मितिहासं मर्मतो विमृशन्तः स्पष्टं जानीयुर्यत् किं सैन्यशक्तिः, किं वा प्रबन्धशक्तिः सर्वापि मोगलानां राजशक्तिराम्बेर-जोधपुरनरेन्द्राणां मुष्टिगतेवासीत्। जयपुरराजस्य योयमितिहासो जनेषु प्रसिध्यति, यश्च विद्यालयेष्वाङ्गलैः पाठ्यते सेयं भारतीयजनता, स तावदितिहासः 'टॉड'लिखितमितिवृत्तमाधारीकरोति। टॉडलिखित-राजस्थानस्येतिहासस्तु उदयपुरराज्यस्य दृष्टिकोणमादायैव निर्मितो यतो ह्ययं टॉडस्तत्सा-मयिकराणामहोदयस्यासीन्मित्रम्। अत एव जयपुरस्येतिहासो बहुत्र विरूपीकृतो वैदेशिकैः। एवं सत्यपि पुराणपुरातत्त्ववेदिनो जानन्ति यन्मोगलसाम्राज्ये आम्बेरनरेशा-नामासीत्सर्वतः प्राधान्यम्। सम्राजोऽकबरस्य समये मोगलसाम्राज्यस्य प्रतापः स्थिररूपेण व्याप्रोद्धारते। किन्तु ततः पूर्वमेवाम्बेरनरेन्द्रस्य भगवन्तदासस्य तत्प्रभुत्वमासीद्यत्स्वेच्छया यं कञ्चन मोगलसम्राजं स स्थापयामास, उत्थापयामास वा। मत्पूर्वजैरशेषशास्त्रज्ञैः कविकलानिधिश्रीकृष्णभट्टमहाभागैः 'ईश्वराभ्युदयमहाकाव्य' (ईश्वर-विलास)नामा यः किलैतिहासिको ग्रन्थो लिखितः तस्मिन् महाराजभगवन्तदासस्य विषये प्रोक्तम् -

**'तस्य श्रीभगवन्तदास उदितः पुत्रः पवित्रक्रियः**
**शूरः क्षत्रियवंशविस्तरशिरोऽलंकारहीराङ्कुरः।**
**इन्द्रप्रस्थपुराधिराजपुरुषप्रोत्थापनस्थापन-**
**स्वच्छन्दप्रसरत्प्रतापमहिमा योऽभूत्प्रभूतः स्वयम्॥१९॥'**

## महाराजमानसिंहः

तत्पुत्रो महाराजो मानसिंहस्तु, सर्वेष्वपीतिहासग्रन्थेषु ख्यातमहिमा। इन्द्रप्रस्थस्य सर्वापि सैन्यशक्तिरासीत्तदधीना। संकटपूर्णान्यनेकयुद्धानि विजित्य येन विश्वतोपि निजप्रभावः स्थापयामासं। बहुभिः प्रातःस्मरणीयैरपि हिन्दुपतिपृथ्वीपालैः स्वदेश एव, प्रत्युत स्वराज्यसीमन्येव निजवीरता प्रकटिता भवेत् किन्तु मानमहाराजेन न केवलं भारतस्यैव दूरदूरप्रान्तेषु, अपि तु भारताद्बहिरपि (काबुलप्रभृतिषु) सैन्यसंनाहं कृत्वा प्रबलप्रतापाः पठाना अपि हठात्पराजिताः। मानसिंहस्य युद्धवीरवर्णने प्रोच्यते साहित्यवैभवे (कवित्तचतुर्थचरणे)-

**'किञ्च हठावेशात्परिखण्डितविबुधमठान्**
**संग्रामे पठानशठान् दैन्यं शिक्षयांचक्रे॥'**

हिन्दीमहाकविः कुलपतिमिश्रो लिलेख– 'नृप मान जित्ति सडसठ समर।' महाकविः केशवदास-स्तुष्टाव– 'एक राजा मानसिंह कछवाहो केशोदास, जिँहि वरवारिधिके उदर[१] विदारे हैं'। डिङ्गलकाव्येषु विख्यातम्-'सँमदर खाँडो पखालियो काबुल पाडी हद्द'। बहुभिरितिहासलेखकैः सप्तषष्टिमहासमराणां विधानं तेषु विजयप्राप्तिश्च माननरेन्द्रस्य नामग्राहं परिगणिता। किन्तु जयपुरराज्येतिहासस्य सर्वस्वीकृतो विशेषज्ञो विद्याभूषणपुरोहित-श्रीहरिनारायणमहोदयो जयपुरस्य 'जयध्वनि 'पत्रे 'महाराजा मानसिंहजी प्रथम की गुणावली 'शीर्षकं यं खल्वैतिहासिकं निबन्धमाङ्गलयाबनेतिहासग्रन्थानां प्रमाणैः प्रकाशयामास तस्मिन् सप्ताधिकसप्ततियुद्धेषु मानसिंहस्य विजयः प्रमाणीकृतः। लिखितं तैः– ''अयं राजा सर्वेष्वपि समरेषु सर्वदा विजयं लेभे, नानेन कदाचिदपि पराजयोऽनुभूतः। अस्य स्वर्गारोहणेन एको महाप्रतापी शूरवीरः रणविद्याकुशलः, सदा समरविजयी नीतिपरायणो धर्मधुरन्धरो गुणपरीक्षकः परमदानी कुशाग्रबुद्धिः विद्याप्रेमी अनेकगुणनिधानं क्षत्रियः शासकोऽस्तं जगाम।''[२]

## 'मिर्जाराजा' जयसिंहः

एतदनन्तरं मिर्जाराजा जयसिंहस्तादृशः प्रतापी बभूव यस्य हस्ते सर्वापि मोगलसाम्राज्य-शक्तिरासीदिति प्रायः सर्वैरैवैतिहासिकैरालिखितम्। यथायं महावीरस्तथा परकाष्ठाया राजनैतिकोऽप्यासीत्। निजस्यानुगत्यं प्रतिज्ञातवन्तमौरङ्गजेबमयमेव दिल्लीसम्राजं चक्रे। एतस्य विषये प्रोक्तमीश्वराभ्युदये –

**'बद्ध्वा दाराशिकोहं रणभुवि सहसा दोर्बलेनानिनाय**
**द्रागेव द्रावयित्वा भृशमनभिमतं यो विजिग्ये शुजाख्यम्।**
**कर्तुं चाकर्तुमीशः प्रसभमितरथा कर्तुमप्येष राजा**
**चक्रे नौरङ्गजेबं निजबलविभवेनैव दिल्लीशमेकम्॥'**

किन्तु साम्राज्यमधिगत्य सोयं निजप्रतिज्ञातो विमुखो बभूव। तथापि नीति-शक्तिशाली सोयं सर्वमपि तस्य स्वातन्त्र्यं स्थाने स्थाने कीलयामास। महाराजजयसिंहस्य संमुखे नासीदौरङ्गजेबस्य दर्पो यत्सोयं स्वस्याऽभिमतं जयसिंहमहाराजस्यानभिमतं च किञ्चिदाचरेत्। अत एव नरपालदस्मा-द्बिभ्यत्, प्रतिकर्तुं चाऽस्याऽप्रभवन्नयं विवशतया विषप्रयोगमन्ते चकार नरपालकृते। महाराजजयसिंहस्य तनयं रामसिंहं सोयं कूटप्रयोगेण जिघांसन्निःशस्त्रमेव बुभुक्षितसिंहेन योधयामास। परं निःशस्त्र एव महावीरोऽसौ बाहुदण्डाघातेन तं सिंहं जघान। ततस्तु लोकातिशायिन्या यस्य शक्त्या द्विगुणं भीतः पूर्णं शङ्कमानश्च तं नानाकूटोपायैर्जिघांसति स्म। औरङ्गजेबस्य कृतघ्नतया पूर्वमेवासीदयम् (महाराजः) असन्तुष्टः, इदानीं तनयेन साकमेवं व्यवहारान्नितरामेवाऽयमक्रुध्यत्। यथा कश्चिन्निजवशगामिने घोषणां ददाति तथायं शक्तिशाली औरङ्गजेबाय निर्भयः पत्रं प्रेषयामास-'यदि रामसिंहस्य किञ्चिदप्यनिष्टं भवेत्तर्हि स्पष्टं जानीहि यन्मोगलसाम्राज्यमन्य एव करिष्यति' इति। 'वंशावली'।

राजनीतिदृष्टिकोणेन जयपुरेतिहासमपश्यन्तो ये महाभागा जयपुरविषये यत् किञ्चिन्निन्दनीयं जल्पन्ति ते मनाग् विचारयन्तु यत्पादाक्रान्तः कश्चिदेवं स्वस्वामिनमद्यावधि लेखितुं प्राभवत्, प्रभवति वा ? यदि जयपुरनरेन्द्रा मोगलानां हस्तपुत्तलिका एवासन् तर्हि स्त्रीणामिव, विवशानामिव वा विषप्रयोगस्य काऽऽसीदावश्यकता ? किमिति सोऽर्द्धचन्द्रं प्रदाय न निःसारितः ?

धर्मधुरां धारयत्यस्मिन्नरपाले औरङ्गजेबस्य नाऽभवदयं दर्पो यदस्य वर्तमानतायां देवमन्दिराणि विध्वंसयेत्। महाराजजयसिंहस्य लोकान्तरगमनवृत्तमौरङ्गजेबेन यस्मिन्दिने समधिगतं तस्मिन्नेव दिने स एकोत्तरशतं देवमन्दिराणि खण्डयितुमाज्ञापयत्। योधपुरनरेन्द्रस्य महाराजजसवन्तसिंहस्य समीपे महाराजजयसिंहस्य स्वर्गारोहणवृत्तं नाद्यावधि प्राप्तमासीत्, किन्तु देवालयविध्वंसनस्य वृत्तमश्रावि तेन। श्रुत्वैव स तस्मिन्नेव समये बुबुधे यन्महाराजो जयसिंहो नाऽद्यास्मिन्संसारे। यद्ययं भूमावभविष्यत्तर्हि औरङ्गजेबस्य नेदं साहसं कदाचिदप्यभविष्यत्। खिन्नः स दोहापद्यमिदं जगाद –

'घण्ट न बाजैं देहरा संक न मानै साह।
हेकरसाँ फिर आवज्यो माहूरा जयसाह॥'

ऐतिहासिकः कविरेकः कवित्तच्छन्दस्येकस्मिन् मोगलसम्राजामुपरि तत्समयभा-विनामाम्बेरनरेन्द्राणां प्रभावं रुचिरं चित्रयामास–

'अकबर पायो भगवन्त के तनै सों मान
बहुर्‌यो जगतसिंह महामरदाने सों
पायो जहाँगीर भावसिंह जयसिंह जू सों
शाहजहाँ पायो जयसिंह जगजाने सों।
अब अवरंगजेब पायो रामसिंह जू सों
औरैं दिन दिन पैहैं कूरम के माने सों
केते राज राव मान पावैं पातसाहन सों
पातसाह पावैं मान मान के घराने सों॥'

एतस्यैव समये बिहारीसतसई निर्ममे। अस्यैव समये पण्डितराजो जगन्नाथो निर्ममौ रसगङ्गाधरादी-न्नानाग्रन्थान्। कुलपतिमिश्रोऽस्यैव समये समभूद्येन महाभारतस्य द्रोणपर्वानुवादः संग्रामसारः रसहस्य-मुक्तितरङ्गिण्यादयोऽनेके ग्रन्थाः प्रणीताः।

## सवाईजयसिंहः

एतदनन्तरं महाराजाधिराजः सवाईजयसिंहदेवो (द्वितीयः, जयपुरप्रतिष्ठापकः)पि सुप्रसिद्धो राजनीतिज्ञः, स्वयं विद्वान् विदुषां संमानयिता चाभूत्, यस्य जयपुरे काश्यामुज्जयिन्यां मथुरायामिन्द्रप्रस्थे च निर्मापिता ज्यौतिषयन्त्रशाला वैदुष्यस्य पताका इव परितः प्रस्फुरन्ति। विश्वविदितः पुरातत्त्ववेदिता म.पं. गौरीशङ्करओझामहाभागो महाराजजयसिंहस्य संक्षिप्तं जीवनचरितं यत्प्रकाश्यामास (पिलानी-कालेजपत्रिकायाम्) तस्मिन्महाराजमिमं परमराजनीतिज्ञमद्वितीयं च विद्यानुरागिणमलिखत्। अयमेवाश्वमेधेनेष्ट्वा दिग्दिगन्तेभ्यो महाविदुषः सादरमामन्त्रयामास पूजयामास निवासयामास च निजनगरे। पौण्डरीकरत्नाकर-सम्राड्जगन्नाथसदृशा अद्वितीयविद्वांसो बभूवुरेतस्यैवाश्रये, येषां जयसिंह-कल्पद्रुम-सिद्धान्तकौस्तुभ-सम्राट्सिद्धान्तादयो धर्मशास्त्रज्यौतिषनिबन्धाः परिगण्यन्ते साम्प्रतं सर्वमान्याः।

अस्तु, इतिहासलेखनेन नात्र प्रयोजनम्। निवेदनस्येदमेव मे तात्पर्यं यत्कैश्चन राजन्यैर्नीतिचातुर्येण परान्दमयितुमप्रभवद्भिर्मुशलप्रायजनसुलभं युद्धं विधाय क्षत्रियताऽवश्यं प्रकटिता या ह्यवश्यं प्रशंसनीया। किन्तु केवलं नाम्नः कृते निजा जन्मभूमिः, सकला निजाश्रिताः प्रजाश्च चिराय तथा क्षपिता यथा नाद्यापि ताः प्राभवन्नुन्नमितुम्। ईश्वरसृष्टौ ज्ञानाऽऽकरस्य मानवस्य कृते परमावश्यकानां विद्यानां कलानां चोन्नतेस्तु कथैव का ? इतो राजधर्मं विमृशद्भिरन्यैस्तु राज्ञां कृते परम्परातो विहितेन राजनीतिचातुर्येण बर्बरप्रायानमून्मोगलान्मुष्टौ कृत्वा वात्याचक्रादिव रभसकृताद् बर्बरकुचक्रात्सर्वोपि देशोऽयं नाशाद्रक्षितः। बर्बराश्च ते शनैस्तादृशीं दशां प्रापिता यथा सर्वतोऽपि नियन्त्रिताः स्त्रिय इवाबलास्ते विषप्रदानरूपं गूढपापं कर्तुं विवशा अभूवन्। ततोऽपि निष्कृतिमलभमाना राज्याद्विच्युतास्ते अन्ते राजपुत्राणामेव राज्ये शरणमवापुर्येन देशाऽऽक्रमणकृतः सर्वोपि प्रतिशोधस्तैर्गृहीतः।

बहूनां दृष्टौ स्वस्याऽपवादं सोढ्वाऽपि जयपुरनरपालैर्नीतिचातुर्यात्संरक्षितो देशः। प्रजाश्च ताः सर्वदार्थं तथानुरक्ता बभूवुर्यथा निजस्य राज्ञः कृते प्राणानपि समर्पयामासुरिति पश्येयुर्जना जयपुरेतिहासे। साम्राज्यसंपदा च तैर्देशस्यास्य तथोन्नतिर्विहिता यथा जयपुरराज्यमिदं चिराद् भूमण्डले विद्यानां कलानां च केन्द्रमामन्यते। जयसिंहमहाराजस्य कलाकुशलतायाश्चिरसूचक-चिह्नभूतमिदं जयपुरनगरं निजसौन्दर्याय भारते सर्वतः सुप्रथितम्। तादृशकौशलेनेदं निर्मितं यस्य कारणाद् भौतिकविज्ञानस्याऽसाधारणोन्नति-युगेऽप्यस्मिन् तदिदं नगरमादर्शभूतमिव परितः परिगण्यते। अत एव वर्णनकुशलैः संस्कृतकविभिरिद-मारम्भादेव वर्णनीयमभूत्। पूर्वमस्मत्पूर्वजैः श्रीकृष्णभट्टकविकलानिधिभिः ईश्वराभ्युदयमहाकाव्ये (ईश्वरविलासे)सर्वतः प्रथममिदमावर्णितम्। ततो 'जयपुरविलासे' राजवैद्यकविवरश्रीकृष्णरामभट्ट-महाभागैस्तदिदमुप-गीतम्। ततस्तदनुजैः कविमल्लश्रीहरिवल्लभभट्टमहोदयैः 'जयपुरपञ्चरङ्ग'काव्ये वर्णनीयमभूत्। एवं व्रजभाषा-उर्दू-भाषाप्रभृतिवाङ्मयेऽपि समये समये तदिदमभूत्सोत्साहमुपवर्णितम्।

## राज्ञां समये साहित्यरचना

एतस्य मूलकारणं राज्यस्यास्य शासकानां पूर्वमहाराजानामसाधारणी गुणग्राहितैव नूनम्। जयपुर (आम्बेर)राजस्य शासकैः परःसहस्रमुद्राणां ग्रामादिसम्पत्तीः समर्प्य ते ते विद्वांसः कलाकाराश्च निजराज्ये संवासिता यैर्निजाश्रयभूतानां राज्ञामाज्ञामनुसृत्य संस्कृतसाहित्ये हिन्दीसाहित्ये च मूर्द्धन्यभूतास्ते ते ग्रन्थाः प्रणीता यैर्न केवलं राजपुत्रप्रान्तस्यैव, अपि तु भारतमात्रस्य साम्प्रतमप्युन्नतं शिरः। संस्कृतवाङ्मयस्य जयसिंहकल्पद्रुमादयो ग्रन्थाः पूर्वं सूचिता एव। हिन्दीसाहित्येऽपि महाकवेर्बिहारिणः पद्माकरस्य च कृतयः कस्य वा न विदिताः ? जयपुरराजस्य साहित्यं हि न साम्प्रतमपि साहित्यसेविनां समक्षमुपगतम्। बहूनां राजाश्रितानां प्राक्तनकवीनां कृतयो न परिचिताः साम्प्रतमपि साहित्यिकजगतः। एतेष्वेव मत्पूर्वजाः श्रीकृष्णभट्टकविकलानिधिभारती (द्वारकानाथभट्टपाद)जगदीश-मण्डनादयो महाविद्वांसः सन्ति येषां कृतयो नाद्यापि नयनगोचरमुपयाताः साहित्यरसिकानाम्।

अस्मत्पूर्वजा दक्षिणापथात्काशीम्, काशीतः प्रयागम्, प्रयागाद्बान्धवदेशादिषु निजतपो-माहात्म्य-वैदुष्यादिना राज-प्रजाभिः पूज्यमानाः समवापुर्बुन्दीराजधानीम्। तत्र तेषामखिल-भारतव्यापिनं वैदुष्य-तपःप्रभावमसामान्यमालोकयद्भिराम्बेरनरपालैर्याचनलाघवं[१] स्वीकृत्यापि बुन्दीतो निजराजधानीमाम्बेरं समानीय सादरमावासिताः। तद्वंशे श्रीकृष्णभट्टकविकला-निधिमारभ्य-मण्डनपर्यन्तं तादृशा विद्वांसो बभूवुर्यैः संस्कृते व्रजभाषायां च तात्कालिकजयपुर-महाराजानामाज्ञया सुप्रसिद्धाः साहित्यनिबन्धाः

परमपरिश्रमेण विनिर्ममिरे। संस्कृते—**ईश्वरविलास-महाकाव्यम्, वृत्तमुक्तावली,**[२] **पद्यमुक्तावली, वेदान्तपञ्चविंशति-सुन्दरीस्तवराजप्रभृतयो** मद्दृष्टा विशिष्टा ग्रन्थाः।

व्रजभाषायाम्— **अलङ्कारकलानिधि-शृङ्गाररसमाधुरी-विदग्धमाधवमाधुरी-रामचन्द्रोदय-दुर्गाभक्तितरङ्गिणी-मधुकरकलानिधि-रामचन्द्रिका-शब्दचन्द्रिकाः,** महाराजप्रताप-सिंहदेवस्य काले निर्मितः संगीतस्य महानाकरग्रन्थः,[३] **काव्यविनोद-वाणीविनोद-किशोरसुखसागर-जगतरसरञ्जन-जगतभक्तिविलास-प्रतापसुतजसचन्द्रिका-जयसाहसुजसप्रकास-राठोडचरित्र-रामजसचन्द्रिका-रावलचरित्र-भारतचरित्र-बापूचरित्र-रसरत्नावली-रससमुद्र-नवरसरत्नाकर-कृष्णसुजसप्रकाश-कृष्णव्रजविहार-सुलोचनाचरित्र-मंङ्गलप्रकाशप्रभृतयः।** एते महान्तो ग्रन्थाः, येषु बहवो मद्दृष्टाः सन्ति च वर्तमानाः।

अनुपलभ्यमानाः, लघवो ग्रन्थास्तु-**सांभरजुद्ध-जाजऊजुद्ध-बहादुर-विजय-जयसिंहगुण-सरिता-रामरासा-वृत्तचन्द्रिका- नखसिखवर्णन-पृथ्वीसिंहमहाराजस्य विवाहोत्सवः ( व्यावला ), वाणीवैराग्य-गालवगीतम्- ( संस्कृते ) भक्ति अरगजा- पदमकरन्द-पदमङ्कज-जवानचरित्र-षड्ऋतुवर्णन भगवद्भक्तिविलास-शिवनाथगुण-सरिता- रामनीति-रामचरित्र-सालिमविजय-विनोद-हनुमानपच्चीसी-वल्लभाचार्य की पृथ्वीपरिक्रमाप्रभृतयः** पृथक्।

एवं संस्कृतग्रन्थानामनुवादास्तु-**तैत्तिरीयाद्युपनिषदां व्रजभाषानुवादः, ब्रह्म-वैवर्त्तस्यानुवादः ( व्रजभाषाच्छन्दःसु ), भागवतदशमस्कन्धस्यानुवादः, महाभारतस्य वन-शान्तिपर्वणोरनुवादः, वल्लभाचार्यकृतषोडश-ग्रन्थानामनुवादः, माघकृतकाव्यस्यानुवादः, भर्तृहरिशतकत्रयस्या-नुवादः, अमरुशतकस्यानुवादः,** एतत्प्रभृतयस्तु नात्र सूचिता येषु बहवो मत्समीपे सन्त्यपि। सर्वोप्ययं विषयो मत्पूर्वजानां वंशवृक्षश्च साहित्यवैभवस्य 'वंशवीथ्याम्' द्रष्टुं शक्यः।

## ग्रन्थविषये आवश्यकं निवेदनम्

नूत्नप्रकारकः सोयं कवितानिकुञ्जस्त्रिंशद्वर्षेभ्यः पूर्वमारभ्य केनचित् केनचिदंशेन साम्प्रतंपर्य्यन्त-मप्यभिपूरित इतयावेदितवानस्मि पुरस्तात्। जयपुरवर्णनात्मकः पूर्वनिर्मितः सोयं प्रथमभागः साम्प्रतं प्रकाश्यते। परस्तान्निर्मितो द्वितीयभागस्तु (साहित्यवैभवम्) इतः पूर्वमेव नयनगोचरमुपनीतः साहित्यर-सिकानामित्यपि विदितमेव। कारणमत्रा-सीज्जयपुरवैभवस्य समर्पणमर्यादा नूनम्। जयपुरवसुन्धरापुरन्दरं च विहाय नान्योऽस्याधिकारी भवितुमर्हति। अवसरोपसर्पणीयाः पुनः पृथिवीपाला इत्याचक्षते विपश्चितः। ततश्च समुचितावसरप्रतीक्षयैव व्यतिगतः सोयमेतावान्काल इत्यवबोद्धव्यं स्यात्। इतो ग्रन्थनिर्माणमार-भ्याऽद्यपर्यन्तं व्यतिगते समये ग्रन्थस्यास्य वर्णनीयो विषयो बहुतरं परिवर्तनमुपगतो नूनम्।

समयान्तरालेऽस्मिन् जयपुरनगरे तत्पर्यन्ते च नवीननवीनाः सन्निवेशाः, विशालभवनानि, सुदृश्या-श्चत्वराः ('चौराहे'), प्रशस्ता राजपथाः, विशदा विपणयश्च निर्मित्ता नूनम्। पुरातनेषु च स्थानेषु भूयस्तरां व्यधीयत परिवर्तनम्। आपाततः परिदर्शने जयपुरपरिसरस्यास्य स्वरूपमेव विपर्यस्तम्। रामनिवासोद्यानमेव निध्यायताम्—प्राचीनं प्राचीरमस्य विपर्यस्तम्। द्वारसन्निवेशो विपरिवृत्तः। स्थानान्यस्य लुप्तानि, वैरूप्यं च गतानि। विटपिनो विलूनाः, निकुञ्जा निमीलनमुपयाताः। यत्रारण्याः पशवो निवसन्ति स्म तत्स्थाने आङ्ग्लशिक्षिताश्छात्राः सायं क्रीडन्तो दृश्यन्ते। यत्र रोगिणां क्षतविपाटनं शवच्छेदा वा (मेयो हॉस्पिटिल) भवति स्म तत्स्थाने न्यायं याचमाना जनाः संदृश्यन्ते, विवादश्च तेषामुपशाम्यते।

परश्शतान्नागरिकान्निजच्छायायामावासयतां महाविटपिनां स्थाने तृणानि (दूर्वाः) राजन्ते। एकमेव 'सिनेमाभवनम्' बहूक्रियते स्म पुरा, संप्रति प्रतिगोपुरसमीपमन्यत्र च निर्मीयन्ते तान्यनेकानि। किमधिकविस्तरेण, जयपुरमधुना रूपान्तरमिवोपगतमाभासते।

यथा हि— ग्रन्थनिर्म्माणकाले यत्कौंसिलभवनम् (राजमन्त्रि-न्यायालयः), एतद्धि अग्रे 'चीफकोर्ट' भवनमभवत् (पृ. ४२)। साम्प्रतं च तत् सार्वजनिकसभाभवनम् (सवाई मानसिंह टाउन हाल)। 'त्रिपोलिया'-गोपुरस्य संमुखवीथ्याम् (चौड़ा रास्ता) पुरा पर्यन्ते सिंहपञ्जराः समभूवन् (पृ. ५१) साम्प्रतं नवीनं गोपुरम्। साङ्गनेरचतुष्पट्याः कोणे पूर्वं महाराजा कालेजोभूत् (पृ. ४४) तत्स्थाने साम्प्रतमाकराणां कार्यालयः (माइनिङ्ग डिपार्टमैण्ट) इत्यादि। अत एव ग्रन्थे वर्ण्यमानानि जयपुरस्य स्थानानि प्राचीनान्यपि नवीनानां दृष्टौ नूनमाभासेरन्नवीनानीव। बहूनि तु स्थानानि निर्मितान्यपि साम्प्रतमेव। कथमिह तेषां वर्णनमुपलभ्येत नूनम्?

वर्णितानां राज्याधिकारिणां बहूनामधिकारपरिवृत्तिर्जाता। बहवः समयान्तरालेऽस्मिन् दिवमारूढाः। सुधीचत्वरे-ग्रन्थकर्तुः समये लोकपूजितानां ततो दिवमुपयातानां बहूनां संक्षिप्तं जीवनवृत्तमिहैवोपात्तम्। येषां च जीवनपरिचयः स्थानान्तरे प्रकाशमुपगतस्तस्य सूचना तेषां वर्णने समवलोक्येत, नात्र तस्योद्धारो विस्तरभयात्। बहूनां मित्रकोटिभुक्तानां जीवनकाले विनोदाय तेषामुपनिबद्धो नर्मपरिहासो हन्त दिवमुपयातेषु तेषु साम्प्रतं संप्रकाश्यत इति सत्यं मनःखेद इव, किन्तु दुर्निवारो दैवसंयोग इति केन किं क्रियताम्?

बहूनां वर्णने तत्पूर्वजानामपि परिचयसूचनामावश्यकीं मत्वा प्रस्तुतमस्ति संक्षिप्तं गुणवर्णनं तेषाम्, येन हि तत्समयमालोकितवतां लोकानां हृदि तत्पूर्वजकालिकमितिवृत्तं जागरूकं सद् विनोदाय तेषां संभवेत्। विनोदेन सह कञ्चिदितिहासमप्यावहतामेवंविधकाव्यानां पूर्वसमयस्मारणेन मार्मिकाणां मनसि मानसिकप्रमोदसंजननमेव फलमिति को वा न जानीयात्? तदिदं यथा श्रीरावल-अटलमहोदयादीनां वर्णने यथा वा वैद्यवरभट्टनरहरिवर्णने।

स्थानोद्यानादीनां वर्णने बहुत्र ग्रन्थनिर्माणकालिकीं परिस्थितिं संस्मार्य विनोदोद्भावनस्य यत्नः। यथा— 'साङ्गानेरी चौपड़' वर्णने (पृ. ४५) '**मञ्जुनाथ नृत्यन्तीव सायं वाद्यतालवशात्**'। अत्र हि— 'नवाबमहोदयस्य मन्त्रित्वे यदा चतुष्पटीनामेवं परिष्कारो जातस्तदा कंचित्कालं यावत् स्थलेऽस्मिन् सायंकाले 'बैण्ड' वाद्यं राजनियोगतो जायते स्म' इति पूर्वकालिकी परिस्थितिः सूचिता। एवं राजसभा ('दरबार') वर्णनेऽपि पूर्वपरिस्थितिः स्मारिता तदभिज्ञानाम्। यथा— 'सरबता'स्थाने रक्षाबन्धनस्य राजसभा। यथा वा— विजयदशमीमहोत्सवे सरबतास्थाने सभां कृत्वा ततो बहिः ('दीवानखाना') अश्वादीनां पूजा। एवं 'फतह टीबा'स्थाने शलकमेलकम्। अत एव मेलकसमाप्त्युत्तरं नगरे आगमनम्, शोभायात्रा 'सवारी' (पृ. १९८) गणगौरीमहोत्सवस्य राज्यसभा पूर्वं वारिदहर्म्ये भवति स्म। तत्समये चन्द्रमहलाद् गमनागमनसमये राज्ञो यात्रा (पृ. १७५)। राजकीयसंस्कृतपाठशालावर्णने तु 'जयपुरविलासस्य' प्रतिरूपणम्। तत्र पाठशालायाः 'शतरञ्ज'रूपकम् अत्रोपवनरूपकम्। औचित्यकृतं तारतम्यं परीक्षणीयं मार्मिकैः। एवं फतहटीबास्थाने प्रत्यहं जायमानस्तोपध्वनिः (पृ. २८८)।

एवं मेलकानामपि पुरातनो विनोदवृत्तान्तः सूचितः। यथा— आश्विननवरात्रेषु जायमाने 'षष्ठीमेलके' प्रातर्नरसिंहस्य दर्शनम्, ततो मध्याह्ने देलरामाऽऽरामे 'गूँजी'भोजनमित्यादिः पुरातनलोकानां मेलकदर्शन-

क्रमः, (पृ. १९३)। सन्ध्या ('साँझी' आश्विनकृष्णैकादशीतोऽमा-पर्यन्तं जायमान उत्सवः) दिवसेषु नगरस्य स्थाने स्थाने क्वचित् कदलीपल्लवानाम् (केल की साँझी), क्वचिद् द्वासप्ततियन्त्राणाम् (बहत्तर कल की साँझी), क्वचिच्च विशालसिंहस्य (देवदास का नाहर) सन्ध्या (साँझी) भवति स्मेति शिल्पविनोदमयः पूर्वकालः स्मार्यते (पृ. १९२)। एवं सूर्यसप्तमीमेलकस्य पूर्वसमारोहः, यत्र राज्ञः स्वयमभिगमनेन सर्वतोऽधिका राजसज्जा भवति स्म। अत एव तत्रैव यावन्मेलकानां 'वर्णिका' प्रकाशनेच्छया पञ्चरङ्गध्वजवाहिनं हस्तिनमारभ्य, यावन्मात्रस्य राजोपकरणस्य क्रमेण वर्णना। एवमेव भरलानवमीमेलकस्य पूर्वकाले जायमानो जनेषु भूयानुत्साहः (पृ. १७८)।

एवं किल जयपुरस्य, तत्स्थानानाम्, तदुत्सवादीनां च पूर्वपरिस्थितिं ग्रन्थेस्मि-श्चित्रितामक्षरैः प्रत्यक्षामालोकयेयुः सहृदयाः [या हि संप्रति भूयस्तरां परिवृत्ता]। अस्तु, भूमिकाविस्तारस्य क्षमामभ्यर्थ्य विरमामि संप्रति। यैस्तु महाभागैर्भूमिकायामस्यां परिचयादिसूचनाय निजलेखनीपरिचालनस्याऽनुग्रहो व्यधायि. वहामि तेषामुपकारभारं विनम्रेण मौलिना। भारतविश्रुतैः म.म.पं. श्रीगिरिधरशर्ममहाभागैर्ग-वेषणापूर्णं यत्किल प्रास्ताविकं प्रसादीकृतं तदिह हृदयेनाभिनन्दन् संस्मरेयमेवोपकारस्मरणे। परं तत्कृताऽऽलोचनाविषये तु-

## यत्किञ्चिन्निवेदयितुमिच्छा

अहो! आप्रबोधकालमालम्बितगीर्वाणभारतीसेवाव्रतैः सर्वतोपि साहित्य-मार्मिकैर्महामहोपाध्याय-महाभागैः कतिचिदक्षरयोजकस्याऽस्य मन्दमतेर्विषये योऽयं प्राकाशि निजगुणज्ञतानुयातः प्रकामं पक्षपातस्तदिदं तेषां निजमौदार्यमेव, न मे मूढस्य कृतित्वं किञ्चित्। चतुर्वेदमहाभागा न केवलं प्रकामं पण्डिता एव, अपि तु साहित्यविभव-योगिकवयोऽपि नूनम्। न च ते कवयः केवलं संस्कृतभाषाया एव, अपि तु हिन्दी (व्रज)भाषयाऽपि मनोरमं कवयितारः। न च ते स्वयमभ्यस्तकविताऽभियोगा एव, अपि तु पूर्वजपरम्परातो जयपुरराजहर्म्यमालायां ग्रामाधीश्वरेषु कवीश्वरेषु प्रक्रान्तनामानस्ते महात्मानः। व्रजभाषाच्छन्दस्सु संस्कृतगिरा गुम्फितां नूतनकवितां यथा ते मार्मिकतया परीक्षितारो, न तावदन्यः स्यात्सहसैव समर्थ इति मर्मतो विद्युर्विद्यावन्तः। तैः कृते प्रोत्साहने मादृशेन स्वल्पविभवेन कृतज्ञताप्रकाशनं विहाय किं वाऽन्यद् हृदये प्रतिपत्तव्यं स्यान्नूनम्? तैः 'अन्विष्य' प्रदर्शिता दोषा भवेयुः सत्यपरिपोषा एवेति किं तत्रोत्तराऽऽलम्बनसाहसेन नूनम्? किन्तु तद्विषये यः कश्चन संशयः स किल 'वक्तव्यमनुक्त-मनुतापं जनयती'त्याभाणकानुसारमभिप्रेरयति मां वाचामिमां शीलयितुम्।

एवंविधमहाभागानां सविधे यत्किञ्चिन्निवेदनस्य सौभाग्यमपि भाग्यलभ्यं नूनम्। अन्यथा तु संस्कृतसाहित्यस्य सर्वतोपि विरलतामयेऽस्मिन् समये 'अलङ्कारिक'प्रसङ्गेऽपि विवशतया 'उर्दू'कवेः *सूक्तिरियमनुशीलनीया भवति। किञ्च-उत्तरावलम्बनधाष्टर्ये मूलभूतं तथ्यान्तरमपीदमेकमावेदयामि, निवेदयामि च यदत्र नाभिमानमभिमानयेयुः कोविदोत्तंसाः। मन्दमतिरपि जनोऽयं बाल्यात्प्रभृति तादृशानां महाभागानां वातावरणे पलितः पोषितः प्रवृद्धश्च शैलवदविचलव्युत्पत्तयो ये स्वसमये शब्दशास्त्रवैभवेन परितः प्रस्फुरन्तमपि नान्यं कञ्चिद् वैयाकरण इत्यपि सेहिरे नूनम्। संस्कृतभाषायां तादृशस्तेषामधिकारो यत्तस्य संकथापि वर्तमानपण्डितपथात्सुदूरीभूता। एतादृशानां समाजे समापितसमग्रायुषं मां संस्कृतस्य संकथा तत्रापि च शैथिल्यचर्चा दूरतोपि समुत्कर्णयतीव।.विशेषतो व्याकरणविवादेनैव व्यतिगमितविपुल-वर्षपूगस्य मे व्याकरणशैथिल्यचर्चापि सत्यं सत्यमास्खलतीव हृदये। अन्यैः शास्त्रवैचक्षण्यमासादितम्,

परैः परप्रबोधपण्डित्यमुपार्जितम्, विरलैर्वक्तृतावैलक्षण्यमवाप्तम्। किं तु मादृशेन पलितङ्करणीं जरसमासाद्य तादृशविचक्षणानां सांनिध्ये किमुपार्जितम् ? यत्किञ्चित्संस्कृतभाषा ! तत्रापि चेत् स्खलितानि इयत्समर्घाणि भवेयुस्तर्हि को वाऽन्यः संस्कृतभाषामिमामध्येतुमुत्सहेत काठिन्यभयभुग्नः ?

किञ्च परीक्षायुगेऽस्मिन् परीक्षोत्तरणेनैव व्याकरणाचार्य-न्यायशास्त्रीत्यादिगौरव-ग्रन्थिमधिकमभिमन्यन्ते बहवः। न तावता व्याकरणमिदमधिक्रियेत वराकैस्तैः। समर्थयन्ते महामहोपाध्यायमहाभागा अपि तदिदम्। अतएव व्याकरणाभिमानमूर्च्छितहृदां चैतन्यचूर्णरूपा चर्चा सेयं स्थानाऽभावेऽपि विस्तृत्य विवेचितेति क्षम्यासुर्निसर्गदयालवो दयालवोपसन्दानेनेत्यलं बहुना।

पूर्वं व्याकरणेतरो बिषयः सूचीकटाहन्यायेन समुपादीयते, ततो व्याकरणविषयो विस्तरेण -

'भवति वाक्प्ररोहो रसपुष्टे' इत्यत्र यतिदोषः प्रथमं निर्दिष्टः— ''इह हि प्रशब्दोपरि विश्रामः कर्तव्यो भवति, स चासमञ्जस इवाभाति। पदस्य एकमक्षरं विच्छिद्य यतिप्रसङ्गे दोषमन्वाचक्षते छन्दोविदोपि'' इति। किन्तु नायं पदविच्छेदः कथमपि। प्र इति हि पृथगेव पदम्। सर्वालङ्कारिकाणां मूर्द्धन्यस्तत्रभवान् वामनः प्रातिस्विकरूपेण स्पष्टमिदं निर्णीतवान् यत् धातोर्भागभेदे नाम्नः (प्रातिपदिकस्य) वा भागभेदे सोयं भवतीति— ''तद्धातुनामभागभेदे स्वरसन्ध्यकृते प्रायेण'' (२ अधि. २ अध्या.)। धातुभागभेदे यथा— 'एतासां राजति सुमनसां दामकण्ठावलम्बि'। नामभागभेदे यथा— 'कुरङ्गाक्षीणां गण्डतलफलके स्वेदविसरः'।

'सुखितसंयोगिचित्त.'इति कवित्तच्छन्दसि 'अस्वरसो भवति' इत्याज्ञप्यते श्रीमद्भिः। किमति ? षोडशपञ्चदशेति एकत्रिंशदक्षरगुम्फ एव कवित्तलक्षणं श्रीमताम्! न तत्र कञ्चन नियमविशेषं मन्यन्ते श्रीमन्तः, एवं सति कः प्रसङ्गः 'अस्वरसस्य'? अस्तु, मन्मते तु कवित्तवृत्तस्य नियमविशेषोऽस्ति। एतद्विषये 'घनाक्षरी' इति शीर्षको हिन्दीनिबन्धः ('माधुरी' हिन्दीपत्रिका), एतद्भूमिकायाः स्थानान्तरं च द्रष्टव्यं स्यात्। अत्र तु 'सत संगति मुदमङ्गलमूला। सोइ फलसिधि सब साधनफूला॥ इतिवत् छन्दसा सह व्रजभाषाया गुम्फनशैल्यपि मयाऽनुकृतेत्येव ममोत्तरम्। स्वीकारेऽस्वीकारे वा प्रमाणमार्यमिश्राः।

'नाहरगढ'दुर्गस्याऽत्युच्चतां ख्यापयितुं ''रविरुचयोऽप्युदासते'' इति निबद्धम्। अर्थात् उच्चतातिशयात्सूर्यरश्मयोऽपि क्लेशेन गच्छन्तीति तुङ्गतातिशयतात्पर्येण प्रयुक्तमिदं केन वा कारणेन न प्रयोज्यमिति न विज्ञातं मया। सर्वसाहित्यविद्भिः पदप्रणामेन संमान्यः कालिदासोऽपि हिमालयस्यात्युच्चतां सूचयितुमाह— 'अन्येषु स्थानेषु अधोमुखैर्मयूखैः कमलानि स्फुटयन्नपि रविर्यत्र हिमालये स्वस्य निम्नस्थतया ऊर्ध्वमुखैर्मयूखैः कमलानि बोधयती'ति। ततः कथमिदं काव्यालोचनायामनुचितमाज्ञप्तं श्रीमच्चरणैः ? 'अस्मिन् काले न प्रयोज्या इयमत्युक्तिरित्यपि' विचित्रं वचः। 'नाथूरामशङ्करस्य' उर्दूकवीनां चोक्तयो वर्तमानकाल एव तथावतीर्णा यथा— 'यदि मम विरहोद्गारो ('आह')निःसरेत्तर्हि व्योममण्डलमिदमखिलं कज्जलीभवेत्' इत्यदि। अस्तु, कवीनां रङ्गस्थले अत्युक्तिनिरोध एव अत्युक्तिरित्यलमनधिकारचर्चया, इत्येवात्र संप्रति विनयान्निवेदयामीति बुद्धिमद्भिरखिलं बोद्धव्यम्।

'जयपुरस्थानवर्णनेऽनेकत्र प्रकमभङ्ग' [अर्थात् जयपुरस्थानानां वर्णनं क्रमेणैव कर्तव्यमासीत्, तन्न कृतम्]। सत्यमिदम्। किन्तु स्थानवर्णने कवेर्ग्रन्थसौष्ठवं, ग्रन्थे तन्निवेशसुविधैव च दृष्टावानेतुमुचितेति नात्र हस्तक्षेपः कृतधियां कार्यमित्येव प्रच्छन्नं मे निवेदनम्। ''होलिकावर्णनं...........। वयं तु न मन्महे तन्निवेशमुचितम्'' इति। इदं तु श्रीमद्भिर्नोट्टङ्कितमभविष्यत्तदैव सम्यगभविष्यत्। सकलवय-

स्कानामेव कृते काव्यं निबध्नन् कविर्विवश एवंविधस्थलेषु। किञ्च यावन्मात्रसहृदयानां विनोदाय निर्मिते प्राक्तनप्रमोदोत्सववर्णनकाव्ये 'जनतायाः प्रतिनिधिः'कविः क्षमामेवार्हतीति मम निवेदनम्, अग्रे प्रमाणं प्रमातृशिरोमणयः श्रीमन्त एवेत्यलं बहुना।

''नरौराबन्धः' न हरिद्वारसविधे, अत एवैतिहासिकी सेयं त्रुटिः' इत्यपि 'बालस्य' [मम] दृष्टिदोषनिवृत्तये ललाटे कृष्णबिन्दुरिव' कृपाबुद्ध्यैवेति मन्ये। हरिद्वारे (ऋषिकुले) ऽध्यापनकार्यं कुर्वद्भिः श्रीमद्भिर्गङ्गाबन्धापनयनकार्ये दरभङ्गानरेशस्य कर्तृत्वं दृष्टमित्यनुक्त्यैव स्वीकरोमि. किन्तु स्वर्गत-श्रीमाधवेन्द्रमहाराजस्य 'विलायतयात्रा 'वृत्तं मुन्शीशिवनारायणसक्सेना महोदयेन महाराजाधिराज-स्येच्छयैवोपनिबद्धम्। तत्र 'गङ्गाबन्ध'समुद्धारे 'नरौराबन्धस्य' तथा प्रसङ्ग एव समुल्लेखः। गङ्गाया जलं तस्मिन् बन्धे प्रतिबध्यते, अत एव तत्प्रतिबन्धे कियदंशेनाऽपनीते हरिद्वारे जलप्रवाहः संजात इति हि सूचितं मयका।' हरिद्वारस्य तत्कियद्दूरे समीपे वेति' परिगणनस्य न तत्र प्रसङ्गोऽपि समापतति। अस्तु, तथापि जितं श्रीमद्भिः।

हिन्दीपदं संस्कृतीकृत्य निवेश्यते चेच्छ्रीमन्तो न केवलमनुमोदन्त एव, परं 'साध्वनुमोदन्ते'। यथा हिन्दी 'कटहरा' पदं 'कट्टहर' इति जातम्। श्रीमद्भिः सेयं शैली कार्यरूपे परिणामितापि- 'मोटर' (मरुत्तर), 'कॉलेज' (कालेज),। किन्तु 'महल' पदं संस्करणमन्तरेणैव मया प्रयुक्तम्। यथा 'वारिदमहलम्' (बादलमहल)। 'इदमर्द्धं तित्तिरस्य अर्द्धं कुक्कुट्याः' इति तावदाज्ञप्तं पूज्यचरणैः। किन्तु 'महान् उत्सवान् लाति' इति 'महल'पदं संस्कृतीकृत्यैव बुद्धिपूर्वं मया 'वारिदमहलम्' इति जयपुरराज्यप्रसिद्धः संज्ञाशब्दः सोयं सर्वबोध्यतया प्रायोजि। अतो विनम्रवाचा निवेदनीयं भवति 'अर्द्धकुक्कुटार्द्धतित्तिरदर्शनं न ममाक्षरेषु।' भवदाज्ञानुसारं संस्कृतीकृत्यैव तदिदं मया प्रयुक्तं, 'महान् उत्सवान् लातीति' महलम्, किन्तु नायं ममापराधो यदेनं दीनबन्धुर्न पश्यति। 'बद्रीनाथ' 'जैपुर' शब्दादिसंबन्धे ममैतदेव संक्षिप्य विनीतनिवेदनं यद् व्यवहारप्रवाहपरिगताः संज्ञाशब्दा लोके यथावगतास्तथैव चेत्प्रयुज्यन्ते, बोधसौकर्यं भवतीत्येव कवितादिषु निगुम्फनसुविधां लभमानस्य मे मतिः। नेदमस्मिन् समये मादृशैरेव कल्प्यते। साहित्यमार्गस्य सर्वतः प्रथमे दिग्दर्शका वामनाद्या अपि स्पष्टाक्षरैराज्ञापयन्ति— 'अतिप्रयुक्तं देशभाषापदं' (लोकप्रसिद्ध्या सर्वैः प्रयुक्तं देशभाषापदम् प्रयोज्यं कविभिरिति तदर्थः)।

परम्परया श्रीमतामपीदं परिज्ञातमित्यपि स्मारयामि धार्ष्ट्येन। संस्कृतशिक्षा-परिष्कारकसमितिः (कमीशन) या जयपुरशिक्षाविभागेन नियमिताभूत्, तस्याः कार्यविवरणम् (रिपोर्ट) संस्कृतपरिनिष्ठितैरेव निर्मितम्। तत्र व्यवहारप्रसिद्धमिदं नाम 'Badrinath' इति रूपेणैव परिगृहीतं यत्र श्रीमद्भिः स्वसंमति-सूचकानि हस्ताक्षराण्यपि कृतानि।

## व्याकरणविषयः

'पूर्वतन'शब्दो मया प्रयुक्तः। ''वैयाकरणास्तु अव्ययेभ्य एव ट्युट्युलौ तुटं चान्वाचक्षते'' इत्याज्ञप्तं श्रीमद्भिः। किन्तु पुरा इत्याद्यर्थकेभ्यः 'पूर्वम्' इत्याद्यव्ययतया प्रयुज्यमानेभ्यः पूर्वादिशब्देभ्योऽपि ट्युट्युलावन्वाचक्षते वैयाकरणा इत्यहं जाने, दृष्टं च बहुत्र व्यावहारिकसंस्कृत-लेखप्रवाहे। वैयाकरण-नामधारिणोऽव्ययप्रकरणं ये केवलं कौमुद्यां रटितवन्तः, अव्ययेभ्यष्ट्युट्युलौ भवत इति तद्धितस्य कथामात्रमाकर्णितवन्तो ये न तत्रत्यां वैयाकरणव्यवस्थां परिचिन्वन्ति त एव कदाचिदेवं ब्रूयुः। परं

प्रयोगप्रवाहं प्रकामं परिचिन्वन्तस्तु प्रगाढं प्रयुञ्जत एव वैयाकरणोत्तंसाः। अस्तु, अन्येषां विषये भवेत्कदाचिद्वैयाकरणतायाः संशयोऽपि, परं परमपूज्यैर्जयपुरे पुरा व्याकरणस्य प्रधानप्रतिष्ठापकैः, न केवलं मयैव अपितु महामहोपाध्याय-महाभागैरपि येभ्यो व्याकरणमधिगतं तैः सुगृहीतनामधेयैर्गुरु-वरश्रीलक्ष्मीनाथशास्त्रि-द्राविड़महाभागैः 'भारतेतिवृत्तसार'नामकं यत्पाठ्यपुस्तकं पाठशालायाः कृते निर्मितं तत्र पृ. १३ (अ. १) 'पूर्वतनाः क्रमकाराः' इति सोयं शब्दः प्रयुक्त इत्यहं जाने।

''१०५ पृष्ठे 'सामुद्रिक उपप्लवो' दृश्यते। समुद्रे भवः सामुद्र एवेति वैयाकरणाः'' इत्यालोचितं श्रीमद्भिः। अपि प्रसिद्धव्याकरणादन्यदिदं व्याकरणम् ? कौमुद्यां तु 'तस्येदम्' इत्यत्र 'शेषे' इत्यनुवृत्त्यां-- अपत्यादि-चतुरर्थ्यन्तार्थेभ्यः अन्येषु शेषभूतसर्वविशेषेषु अणादयः प्रत्यया भवन्ति (न केवलमणेव) इति प्रसिद्धं तत्त्वबोधिन्यादिषु सर्वत्र। अत एव शब्दार्थ-चिन्तामण्यादिप्राचीनकोषेषु 'सामुद्रिक'शब्दस्यार्थः 'समुद्रसम्बन्धी'ति स्पष्टमनुशिष्टः।

'जयपुरराज्यमियाय' इति लिट् वैयाकरणानां मते न भवेदित्यपि चित्रम्। 'अत्र परोक्षत्वादिबन्ध-स्त्याज्य इति ममाभिमतं बहुधा श्रुतम्' इति प्रामाणिकशिरोमणयः श्रीचतुर्वेदमहाभागा एव यदा स्वयं संगिरन्ते तर्हि किं मया प्रतिवदितव्यम्? किन्तु-एवंविधपरिवर्तने कृते पाणिनीयव्याकरणमेव परिवर्तनीय-मिति मे तात्पर्यं कल्पनीयं स्यात्। परं यावज्जीवमभ्यस्ते पाणिनीयव्याकरणे यावती मे भक्तिस्तावती व्याकरणध्वजधारकेष्वपि न भवेदिति मे मर्मवेदिनो जानीयुः। अस्तु, परम्पराश्रुतेनैव न विवदितव्यं किन्तु गूढमर्मणोऽस्य पाणिनीयव्याकरणस्य तात्पर्यं निष्पक्षभावेन विवेक्तव्यमित्येव मेभिप्रायः। यथाऽत्रैव--'शतसहस्रवर्षपुरातनेष्वर्थेष्वेव परोक्षता भवति। बलिर्बलवान् बभूवेत्यादि,' इति हि *'सचिक्कण'पण्डिता ये स्वयं व्याकरणमबुद्ध्वैव केवलं परम्पराश्रुतेनैव संस्कृते पण्डितायन्ते तेषु प्रसिद्धम्। भगवत्पतञ्जलि-निर्मितं महाभाष्यं तु मन्ये व्याकरणस्यैव ग्रन्थः! तत्र हि लिड्विधायकसूत्रे 'इतरे, अन्ये' इत्यादिगौणम-तान्युद्धृत्य चरमसिद्धान्तः सोयमेवाज्ञप्तो यत् ''व्यापाराविष्टसाधनानां पारोक्ष्यमेवात्र विविक्षितम्, तेन क्रियानाविष्टसाधनमात्रप्रत्यक्षेऽपि लिड् भवत्येव''। एतस्य 'अयं पपाच, त्वं पेचिथ' इत्युदाहरणानि दत्तानि। 'अयं' 'त्वम्'। इत्यादि- निर्देशो न शतसहस्रवर्षान्तरिते स्वारसिकः, अत एव साधनानां क्रियाऽनाविष्टत्वं पारोक्ष्यम्। ततश्च अयं पपाच इत्यत्र पाककर्ता तेन न दृष्ट इति न, अथवा पचनक्रिया तस्य समये नाऽभवदित्यपि न। किन्तु तन्दुलेषु समुत्पद्यमानो विक्लित्त्यनुकूलो व्यापारस्तेन न दृष्टः।

एवमेव— राज्यप्राप्त्युत्सवोऽपि कविना अन्यैश्च सहस्रसहस्रजनैर्दृष्टो वर्णितश्चापि। किन्तु राज्योपगमनकालिको मानमहीपतिर्नासीत्कवनसमये संमुखस्थतया विवक्षितः अत एव 'राज्यमियाय' इति प्रयुक्तम्। न केवलमिदं व्याकरणेनैव सूचितं, साहित्ये व्यवहारप्रवाहोपि तथैवोपलभ्यते। कवीनामादिमः श्रीवाल्मीकिरादिकाव्ये रामायणे 'लिटं' प्रयुयोज तथैव। अशोकवनिकास्थिता सीता हनूमन्तं वक्ति— **'स राजा सत्यवाग् देव्या वरदानमनुस्मरन्। 'मुमोह' वचनं श्रुत्वा कैकय्याः क्रूरमप्रियम्॥'** (सुन्दर. ३४/२२)। अत्र दशरथः सीतया न दृष्टः किम्, किन्तु तथापि लिड् जात एव। एवमेव हनूमान् सीतां वक्ति— **'स मार्गमाणस्तां देवीं रामः सीतामनिन्दिताम्। आससाद वने मित्रं सुग्रीवं नाम वानरम्॥'** अप्यत्र हनूमता सुग्रीवो न दृष्टः? किं वा शतसहस्रवर्षान्तरितो यदर्थम् 'आससाद' इति लिट् प्रयुज्यते।

पुनर्दृश्यताम्— स्वप्नं वीक्ष्य त्रिजटा राक्षसी ब्रूते— '**पिबँस्तैलं हसन्नृत्यन् श्रान्तचित्ताकुलेन्द्रियः। गर्दभेन ययौ शीघ्रं दक्षिणां दिशमास्थितः॥**' अपि राक्षसी त्रिजटा स्वस्वामिनं राक्षसेन्द्रं न दृष्टवती? न वा स तस्याः परिचितः? यत्तदर्थे 'ययौ' इति लिट् प्रायोजि। पुनरालोक्यताम्, ब्राह्मास्त्रवशीकृतो हनूमान् रावणं वक्ति— '**स सीतामार्गणे व्यग्रः सुग्रीवः सत्यसंगरः। हरीन् संप्रेषयामास दिशः सर्वा हरीश्वरः॥**' इह किं कदाप्यदृष्टः सुग्रीवः श्रीहनुमतो यल्लिटं प्रयुक्तवान्। अन्यदालोक्यताम्, सीतायाः संदेशमादाय श्रीरामं प्रति प्रत्यगतो हनूमान् ब्रूते — '**साभिवीक्ष्य दिशः सर्वा वेण्युद्ग्रथनमुत्तमम्! मुक्त्वा वस्त्राद्ददौ मह्यं मणिमेतं महाबल॥**' इदानीमेव समागतस्य हनूमतः श्रीजानकी अपरिचिता, कदाप्यदृष्टा वा संवृत्ता? यत्स 'ददौ' इति प्रयोगविटं लिटं प्रयुयुजे। अन्यदपि स एवाह-'विवर्द्धमानं च हि मामुवाच जनकात्मजा।' इत्यादि।

कवीनां निकषायमाणो बाणोपि लिटं प्रायुङ्क्त। महाश्वेता चन्द्रापीडाय निजस्य तापसव्रतग्रहणवृत्तं कथयन्ती वक्ति— द्वितीय ऋषिकुमारः (कपिञ्जलः) पुण्डरीकस्य विरहविकलतां संसूच्य— '**कुब्ज-किरातबधिरवामनबर्बरविकलमूकानुगतेन परिवारजनेन सर्वतः संरुद्धे द्वारदेशे कथमप्यवाप्त-निर्गमः 'प्रययौ'।**' अपि पुण्डरीकस्य वृत्तं तस्याः समक्षे युगयुगान्तरस्य कथा, कदाप्यदृष्टो वा निजप्रियतमसुहृत्कपिञ्जलस्तस्याः? किं वा बाण एवाऽवैयाकरणः? न च पुरातनं वृत्तं शुकादिर्वक्तीति समाधानाय मुखमुद्घाटयितव्यम्। प्रत्यक्षसंलापात्मिकायां कथायां ('नॉवेल') तथा स्वीकारस्य कवीनां सुस्पष्टमसंमतत्वात्।

## के वैयाकरणाः?

परिगणितास्वासु समालोचनापङ्क्तिषु महामहोपाध्यायमहाभागैर्यन् मुहुः 'वैयाकरणाः' इति पदमाम्रेडितं तत्रैकमिह साधारणभावेन जिज्ञास्यं यत्— केऽमी वैयाकरणाः? ननु व्याकरणं ये विदन्ति अधीयते वा त एवात्र वैयाकरणा व्यपदिश्यन्ते, किमत्राधिकजिज्ञासया? स्यादेतत् किन्त्वस्त्यत्र संशयः। व्याकरणस्य वेदने (ज्ञाने) भवेदपि वैमत्यं जातु, किन्तु ये बहून् संवत्सरानभिव्याप्य संस्कृतसरस्वत्या एतस्या यादृशीं तादृशीं वा सेवां निर्वाहयन्ति तैर्यत्किञ्चित्तु व्याकरणस्याऽस्याध्ययनमवश्यं कृतं स्यात्। बहुभिस्तु श्रीमतां सान्निध्ये एव व्याकरणमिदमधीतम्। निजजीवनस्य सर्वतो मूल्यवान् भूयान् समयो व्यतिगमितश्चापि [ज्ञानसंपादनं जातं न वा इति तु कथान्तरमिति निवेदितवान् पूर्वम्] एवं सत्यपि तादृशभाषासेवकानभिमुखीकृत्यापि यदुपदिश्यते 'वैयाकरणास्तु' इति, ततः स्पष्टीभवति यद् भाषामिमामालम्ब्य लेखनव्यवहारपरिचालका न वैयाकरणा भवन्ति।

यैः पूर्वं व्याकरणमधीतम्, ततो व्याकरणस्यास्य पदाङ्कपद्धत्या प्रयोगप्रचाराय अलङ्कारशास्त्रापरपर्यायं 'साहित्य'शास्त्रमधिगतम् ततो गद्यपद्यरूपेण व्याकरणस्यास्य प्रयोगा अपि यैः प्रचारे प्रवर्तिताः तानप्यवलम्ब्य समुपदिश्यते 'वैयाकरणास्तु', ततश्च तेऽपि वैयाकरणा न भवन्ति। अर्थात् व्याकरणमधीत्य साहित्यानुसारं कवितां कुर्वन्तोपि न वैयाकरणा भवन्ति। भवन्तु ते कामं साहित्यविदः कवयो वा किन्तु न वैयाकरणाः। ''संस्कृतभाषायां पुरा प्रयोगपद्धतिरियमासीत्, धातूनामेवं जन्म, बहवो धातवः सांप्रतं निर्मिताः बहवस्तु तत्रभवता पाणिनिना तदनुगामिभिर्वा प्रयोगबाहुल्यमालोक्य धातुपाठे संवर्द्धिताः, बहवस्तु सांप्रतमपि वर्द्धन्ते अग्रे वर्द्धिष्यन्ते च, येषां कृते प्रोच्यते स्माचार्यैः 'वर्द्धते धातुगण इति हि शब्दविद आचक्षते' इत्यादि समये समये सूचयन्तोपि न वैयाकरणा भवन्ति। अस्तु किं वा शाखाच-

ङ्क्मणेन। यैर्व्याकरणमधीत्य साहित्यं तर्को दर्शनं गणितादिकं वाधीतं न ते वैयाकरणाः प्रोच्यते, अपि तु यथाक्रमं 'साहित्यविदः' 'तार्किकाः' 'दार्शनिकाः' 'गाणितिकाः' वा प्रोच्यन्ते न तु वैयाकरणाः।

व्याकरणमिदमधीत्य दीर्घे निजजीवनकाले संस्कृतभाषामेव सर्वात्मना सर्वकालं व्यवहरद्भि-र्भाषायामेतस्यां पूर्वकालापेक्षया व्याकरणद्वारा संप्रति को वा विशेषः समुत्पन्न इति व्यवहारानुभवेन यैर्निश्चितं सूचितं च तदेतज्जनतायाम्, एवंविधभाषामर्मविवेचकानुद्दिश्यापि तदितरबुबोधिषया चेदुच्यते 'वैयाकरणास्तु', तर्हि मन्ये तेऽपि वैयाकरणा नाऽभिप्रेताः। अर्थात् व्याकरणमिदमधीत्य, संस्कृतभाषामिमां लिखन्ति, पठन्ति, तद्द्वाराऽन्यान् बोधयन्ति च न ते वैयाकरणाः। ये व्याकरणमिदधीत्य वेदं वेदविज्ञानं वा प्रचारयन्ति न तेऽपि वैयाकरणाः, कामं वैदिकास्ते प्रोच्येरन्। वास्तवे वि-आकरणस्य [शब्दतत्त्व-विवेचनस्य] भाषण-लेखनद्वारा प्रचारका अपि न वैयाकरणाः ख्यायन्ते। एवं सति वैयाकरणाः के जीवा भवन्ति? व्याकरणमधीत्य वेदान् तदङ्गभूतानि शास्त्राणि वा ये नाऽधीयते, वि-आकरणस्य तत्त्वं ये न विदन्ति न चान्येषु ते तद्बोधयितुं पारयन्ति, व्याकरणमधीत्य भाषाया व्यवहारेण शब्दानां प्रयोगं ये न कुर्वन्ति, तर्हि ये न लिखन्ति न पठन्ति ईदृशा महाशया एव किं वैयाकरणपदवाच्याः?

मैवम् मैवम्। व्याकरणमेव ये केवलं पठन्ति परिशीलयन्ति च त एव वैयाकरणाः। सम्यक् सम्यक्। किन्तु व्याकरणाध्ययनस्य फलं तु पुरुषार्थसाधकानां वेदानां परिज्ञानं तदङ्गेषु प्रवेशो वा। भाष्यकारेण तत्रभवत्पतञ्जलिना व्याकरणे तदेव तु बोधितम्! अनन्यवैष्णवाः, भक्तेः फलं यथा भक्तिः, भगवानेव साधनं भगवानेव च साध्यः, इत्यादि यथा स्वीकुर्वन्ति तथा व्याकरणस्य फलं व्याकरणम्, इत्यनन्यभक्तिरियं लौकिकार्थसाधिका स्या*त्परलोकप्रसाधिका वा ?

नैवम् नैवम्। सर्वाण्यप्यन्यानि शास्त्राणि कर्मकौशलानि वा ये जानते, किन्तु प्राधान्यं येषां व्याकरणस्य, त एव वैयाकरणाः। सम्यगिदम्, किन्त्वेवं सति व्याकरणाध्ययनोत्तरं पठितैरन्यान्यशास्त्रै-र्व्यपदेशः [आलंकारिकः, तार्किकः, दार्शनिकः इत्यादिः] विलुप्येत, वैयाकरणेत्यस्यैव व्यपदेशस्य तत्र निरूढत्वात्।

मैवम् मैवम्। यैः पूर्वं व्याकरणमधीतम्, तत्तात्पर्यवेदिनश्च ये शास्त्रान्तरेष्वप्यनुप्रविष्टास्ते ह्यवश्यं वैयाकरणाः। किन्तु तावत्कालं, यावत्कालं ते व्याकरणानुसारं शब्दप्रयोगं कुर्वन्ति। यदा तु ते व्याकरणं व्युच्चर्य उच्छास्त्रम् (व्याकरणविरुद्धम्) शब्दान् प्रयुञ्जते तान् व्याकरणस्य मर्यादां स्मारयितुम्, व्याकरणाध्ययनस्याभ्यर्हितत्वं प्रदर्शयितुं च प्रोच्यते— 'वैयाकरणास्तु' इति। साधु साधु। किन्तु वैयाकरणा व्याकरणमधीत्य न किञ्चिच्छास्त्रान्तरमनुप्रविशन्ति [तथा सति तत्तच्छास्त्रानुसारं दार्शनिक-तार्किकादि-व्यपदेशः स्यात्] नापि च लिखन्ति न चापि कवितादिकं कुर्वन्ति [तथा सति कविरित्यादिख्यातिः स्यात्] एवं सति 'अनन्यानां' तेषां व्याकरणानुसारी प्रयोगः कुत्र गवेषणीयः स्यात् ? मा मैवम्। यदा ते स्वपाठनस्थाने स्थित्वा व्याकरणमहत्त्वमुपदिशन्ति, आनन्दे प्रपूर्य कदाचिन्निजमण्डल्यां संस्कृतं वा समुच्चारयन्ति, परीक्षोत्तरणाय निजविद्यार्थिनां कृते 'परीक्षापञ्जिका' वा लिखन्ति, एवमादिषु विज्ञातुं शक्य एव तेषां व्याकरणश्रद्धानप्रयोगः। यथा 'एकपदे सन्धिरवश्यं कर्तव्यः। अर्थबोधस्य विचारो नास्मदधीनः, किन्तु सन्ध्यभावाय नास्माकं व्याकरणे सूत्रम्। अत एव सन्धिरवश्यं प्रयोक्तव्यः। यः शब्दः साक्षात्सूत्रेण व्याकरणे निष्पादितः स एवास्माभिः प्रयोक्तव्यः। तत्सदृशस्यान्यस्य रूपस्य प्रयोगे उच्छास्त्रतायाः संदेहः। लक्षणैकचक्षुष्कैश्च लक्षणोल्लङ्घनस्य संदेहोऽपि परिहर्तव्यः।' इत्यादि।

सम्यगिदम्। किन्तु श्रीमन्! एवं सति व्यवस्थैव नवीना कर्तव्या स्यात्। भारतप्रसिद्ध-जयपुर-राजकीयसंस्कृतमहाविद्यालयस्य वर्तमानव्याकरणप्रधानाध्यापका अपि सांप्रतं 'त्रुटिर्निस्सारयितुं प्रभूयते' 'सूत्रभाष्यानि' इत्यादि स्वच्छन्दं प्रयुञ्जते, तर्हि किं पाणिनी-यमन्यत्सर्जनीयं स्यात्? वैयाकरणा: 'आलंकारिक:' इति निष्पादयन्ति, किन्तु ते 'अलंकारिक:' इति लिखन्ति। संस्कृतव्युत्पन्ना: 'विदुषां संमानं' जानन्ति, ते 'विदुषां सन्मानं' विदु:। 'बकार'-'व'कारयो:, 'श'कार-'स'कारयोरपि तेषां वाक्प्रवाहे न प्रभेदस्तर्हि किं संस्कृतसाहित्यस्य व्यवहारमार्ग एव परिवर्तनीय: स्यात् ? ''एकपदे सन्धिर्व्याकरणेनानुशिष्ट इत्यर्थविलोपोपि कामं कर्तव्य: किन्तु सन्धिरवश्यं प्रोक्तव्य:'' इत्यस्यापि रहस्यं नावगतम्। अर्थबोधानुरोधात्संज्ञानुरोधाद्वा स्वयं वैयाकरणैरेव स्वग्रन्थेषु 'अच्सन्धि' इत्यादौ 'अक् शन्धि:' इत्यादिरूपो विरूप: सन्धिर्न क्रियते। ततश्च 'श्रीअमरनाथशर्मा' इत्यादिषु सन्धे: कोऽभिसंधि: ?

नैव नैव। ये लक्षणैकचक्षुष्कास्तेषां सविधे असंधे: किमपि सूत्रं नास्ति, अत एव तेषां तु 'श्र्यमरनाथशर्मा' इत्येव प्रयोगो योग्य:। अन्यथा 'सन्धे:' स्थले वैयाकरणै: सह 'विग्रहस्य' प्रसङ्ग: समुपतिष्ठेत्। तस्मादेवंविधनाम्नामग्रे 'श्री'कार एव न प्रयोक्तव्य इत्येव 'वैयाकरणानां' चरमाऽऽज्ञा। 'एकचक्षुषां' शिरोमणे! भगवन्! भवानवश्यं शास्त्रानुसारमेव श्वासप्रश्वासग्रहीता, किन्तु वङ्गादिदेशेषु आदौ श्रीपदप्रयोगं विना नामधेयमशुभं परिगण्यते। अत एव तत्र प्रत्येकजीवितव्यक्तेर्नामधेयस्याग्रे श्रीपदप्रयोगो नियमेन क्रियते। न च तत्र सर्वे अवैयाकरणा एव। सन्ति तव व्याकरणविद्वांसो विवेकिनश्चापि। किं ते 'श्रीअन्नदाचरणतर्कचूडामणि:' इति न प्रयुञ्जते ?

प्राचामाचार्याणां प्रयोगरूपा 'भुक्ति:' यदि प्रमाणत्वेन स्वीकर्तुं शक्यते तर्ह्येवंविधे स्थले सन्ति प्राचीनार्याणां प्रयोगा अपि। पत्रलिखिता लिपि: काममन्यथापि कर्तुं शक्यते किन्तु पाषाणलिखिता लिपि: पाषाणलिपिरेव। 'राजप्रशस्ति'नामकं शिलालेखात्मकं काव्यमुदयपुरीयमहाराणाभूपालानां कीर्तिध्वजरूपं 'राजसागर'तटे घट्टशिलापट्टेषु प्रोथितं 'काव्यमालायां' मुद्रितं चापि। तत्र— '**श्रीएकलिङ्गेन मुदा प्रदत्तं हारीतनाम्ने मुनयेऽथ तेन**'। **एवं** '**श्रीराणोदयसिंहसूनुरभवत् श्रीमत्प्रताप: सुतस्तस्य श्रीअमरेश्वरोऽस्य तनय: श्रीकर्णसिंहोऽस्य तु॥**' इत्यादि।

अस्तु, वैयाकरणा: कामं प्रजल्पन्त्येव, परं महामहोपाध्यायमहाभागैस्तु व्यवहारप्रवाह: स्वयं सोयमनुभूत एवेति किञ्चित्स्मारयामि। जयपुरशिक्षाविभागद्वारा या 'संस्कृत-शिक्षापरिष्कारकसमिति:' ('कमीशन') नियमिताऽभूत्तस्यां श्रीमहामहोपाध्याय-महाभागैरेव महता समारोहेण लिखितमासीद् यद् राजगुरूणां नाम्ना सह 'श्री' इत्यवश्यं संयोज्यम्। एवं सति यस्य नाम अनन्ताचार्य इति तत्र किं 'श्रीअनन्ताचार्य:' इति न प्रयुज्येत ? 'श्र्यनन्ताचार्य' इति तु किं कोपि बोद्धुं पारयेत् ? अस्तु, प्रसक्तानुप्रसक्तेन बहुदूरमनुधावितोऽस्मि। मन्ये, नीरक्षीरविवेकिन: परिचिनुयुरेतावतैव साम्प्रतिकवैयाकरणानां स्वरूपमिति कृतं बहुना।

'चीयन्ते चतुर्दिक् चञ्चरीककुले मोदरसा:' अत्र 'चतुर्दिक्'पदस्य 'चतस्रो दिशो यस्य (चयनस्य) आश्रयभूता यथा भवन्ति तथा' इति व्याकरणानुसारि साधुत्वं स्वयं स्वीकृत्यापि अत्र ''कियत्स्वारस्यं'' मिति पृच्छ्यते महाभागै:। 'चारों दिशाओं (में), चारों ओर' इति भाषार्थस्वारस्य 'चतुर्-दिक्'पदयो प्रत्यक्षश्रवणे एव यथा हृदि परिपुष्यति न तथा 'समन्तात्-परित:' इत्यादिपदै:। न च 'चीयन्ते

चतुर्दिक् चञ्चरीके'ति पदशय्यापि शोभतेऽन्यैः पदैर्विधृतैः। अत एवात्र कियत्स्वारस्यमिति करे लेखनीं समादाय स्वयमेवंविधच्छन्दस्सु कवितां कुर्वतां हृदयमेवाऽऽपृच्छ्यताम्। अथवा कवीनां 'गुरुघण्टालैः' श्रीमद्भिरेव स्वयं हृदि हस्तमाधाय निराग्रहमाज्ञप्यतां यद् व्याकरणसमाधाने समवाप्तेऽपि 'चीयन्ते चतुर्दिक् चञ्चरीके'त्यादिश्छन्दो-विलासो वृत्त्यनुप्रासोऽथ सहैव सिंहावलोकनविन्यासोऽपि यदि निर्भरं निर्वाह्यते तदापि किं 'वैयाकरणास्तु' इति तुहिननिपातः स्थाने ?

वर्तमानकाले पदे पदे वयं 'वैयाकरणास्तु'इति' तुन्तुनीं' वादयामः, किन्तु भगवतः पतञ्जलेरय-मुक्तिनिष्कर्षो न कदापि विस्मर्तव्यो नूनम्। **'जलाहरणार्थी यथा कुम्भकारकुलं गत्वाऽऽह— घटं मे निर्माहि जलमाहरिष्यामि। न तथा किल शब्दान् प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाऽऽह— शब्दान् मे निर्माहि प्रयोक्ष्यामीति'।** भाषायाः कृते व्याकरणं निष्पद्यते न किल व्याकरणस्य कृते भाषा निर्जीवं निष्पीड्यते। वज्रदृढीकृतमस्माकं पाणिनीयव्याकरणमेव स्वल्पं स्मर्यतां यद्धि पृषत्-उदरं पृषोदरमित्येव किम्, गूढ आत्मा यस्येत्यत्र गूढात्मेति स्थाने 'गूढोत्मा' इत्यपि यदि प्राचलत्तर्हि तदपि सूत्राणि विनैव समाधातुं चेष्टते। एकेऽमी वयं स्मो यद् व्याकरणेन संभवत्समाधानमपि समाच्छेत्तुमिच्छामः। अद्य हि संस्कृतभाषामिमाम् 'अव्यवहृताम्' 'अव्यवहरणीयाम्' 'मृताम्' वा श्रुत्वा सभासु अग्निशर्माणो भवामः किन्तु स्वहस्तेनैव वयं तामव्यवहृतां केवलं पुस्तकस्थां संपादयितुमिच्छाम इति न जानीमः।

प्रतिदिनव्यवहारे समुपादीयमाने रूप्य-पित्तलादिपात्रे व्यवहारजनितः स्वल्पसंघर्षः, मोचो ('मोचा'), ('दौंचा') वा नूनमनिवार्यो भवति किन्तु मञ्जूषास्थितं तत्तु असंघर्षमेव दूरतो दर्शनीयं भवति। 'प्राचां' 'उदीचां' सर्वेषां व्यवहारे समुपादीयमाना गीर्वाणगवी व्यवहारजनितान्नानापरीवर्तान् पुरा प्रेक्षांचक्रे इति जानीमः, किन्तु वयं संप्रति घोरविरलतामये अत एव सुविधाप्रदानोचितेऽपि संस्कृतस्य समये 'मन्दाकिनिधारा' [सोरों की धारा, हरद्वार की धार इतिवत्] संज्ञां जानन्तोऽपि ह्रस्वं न समाधातुमिच्छामः। अस्तु, संस्कृतगवीमिमां यथैव परिचालयिष्यामस्तथैव सेयं परिचलिष्यतीति किं वा विशेषनिवेदनेन।

## उपकारस्मरणम्

सर्वतः पूर्वं तुलितमहेन्द्रस्य जयपुरनरेन्द्रस्य महिमानमभिनन्दामो यस्यौदार्येण 'राजसंस्करणं' यथा पुस्तकानां महत्त्वाय, तथा 'राजसमर्पण'मिदं ग्रन्थस्यास्य समपद्यत सौभाग्याय। ततः शिक्षासचिवस्य एम.ए. पदमण्डितपण्डितश्रीअमरनाथअटलमहा-भागस्योपकारं मन्यामहे यस्य लेखनीतः सोयं राजसमर्पणोत्साहः समारभ्यत। ततो वर्तमानशिक्षासचिवस्य श्रीदेवीशङ्करतिवारिमहाभागस्याप्यसामान्य-माभारमभिमन्यामहे यस्य शासने समपूर्यत सोयं समारोहः समादरेण।

ततो ग्रन्थनिर्माणसमये जयपुरराजकीयशिक्षाविभागाध्यक्षपदमधितिष्ठतः श्रीश्याम-सुन्दरशर्म एम.ए. महोदयस्योपकारमहमनुचिन्तयामि, निर्मायं गुणप्रणयिनो यस्य समये समये प्रोत्साहनेन विपुलपरिश्रम-साध्यमिदं कार्यमस्मिन् रूपे परिपूर्तिमुपगतम्। ततो जयपुरराष्ट्र- प्रधानसचिवस्य, आङ्गल-हिन्दी-संस्कृतेतिसाहित्यत्रितयेपि परममार्मिकस्य भर्तृहरिशतकत्रयस्य आङ्गल-हिन्द्यनुवादाद्यनेकग्रन्थनिर्मातुः एम.ए. पदमण्डितस्य स्वर्गवासिनः सरगोपीनाथ-पुरोहितमहाभागस्याप्युपकारमहमधिमानयामि येन हि ममाक्षरयोजनमिदं 'पण्डितसभा'याः सभापतिपदमलंकुर्वाणेन निजोदारतया भृशमभिनन्दितं नूनम्। ततो राजकीयप्रधान-सचिवकार्यालयात् (महकमा-खास) साहित्यवैभवाभिनन्दन-पत्रप्रेषणेन

निजहृदयौदार्यमिदं संप्रकाशयता येन जयपुरवैभवस्यास्य प्रकाशनप्रतीक्षायामुत्कण्ठा नूनमभिव्यञ्जिता। हन्त! गुणग्राहकस्यास्य समये नाऽस्य प्रकाशनं समजनीति भृशं खिद्ये हृदि। महाभागस्यास्य हृदयौदार्यसूचनाय पत्रं तत्प्रकाशयामि ग्रन्थस्याऽऽदौ भूमिकया सह।

ततो विद्याभूषणपुरोहितश्रीहरिनारायणशर्मबी.ए.महाभागस्याप्युपकारभारमहमनिश-मनुचिन्तयामि येन जयपुरराज्यस्येतिहाससंबन्धिनी सूचना स्थाने स्थाने मह्यं लेखरूपेण प्रसादीकृता, यां हि पठेयुः पाठकमहाभागाष्टीकया सह संपृक्तामिमाम्। अथ भारतख्यात-कीर्तेरायुर्वेदमार्तण्डस्य श्रीलक्ष्मीरामस्वामि-महाभागस्याप्यहं भूरि भूरि कृतज्ञो येन हि ग्रन्थप्रणयने समये समये नितान्तमुपकारिणी मन्त्रणा मह्यमभिविश्राणिता। हन्त! स्वर्गतयोरनयोः संप्रकाश्यते सोयं ग्रन्थ इत्यनुताप एव।

इदानीं वाग्मितावाचस्पतेर्म.म.पं.श्रीगिरिधरशर्मचतुर्वेदमहाभागस्यौदार्यमहमत्यर्थमभिनन्दामि येन राजकीयसंस्कृतकालेजस्याध्यक्षपदमामण्डयता पुस्तकस्यास्य जयपुरधरणिपुरन्दरस्य करे समर्पणाय शिक्षासचिवमहाभागस्य संनिधौ लेखादिकमभिप्रहितम्। साम्प्रतं च पुस्तकस्यास्य प्राक्कथनमभिलिख्य रचनाप्रमेयमर्मज्ञतां चात्मनः संप्रकाशयता पूर्णसहयोगो मे प्रसादीकृतः। प्रारम्भे चोपसंहारे च कृपाप्रकटनं न किं पूर्णः सहयोगः? राजसमर्पणाय प्रारम्भो लेखादेः, मुद्रणोपसंहारे च प्राक्कथनलेखस्यानुग्रहः।

भिषगाचार्य-पं.श्रीनन्दकिशोरशर्मराजवैद्य-['प्रिन्सिपल 'आयुर्वेदिक काजेज' जयपुर] महाभाग-स्याप्यहमुपकृतोस्मि येन समयापेक्षितं मे साहाय्यमनुविश्राणितम्। एवं व्याकरण-धर्मशास्त्राचार्य-पं.श्रीवृद्धिचन्द्रशास्त्रिणमप्यहमाशीर्भिरभिनन्दामि यो हि मुद्रणादिषु समपीपदन्मे कार्यसौकर्यं बहुधा।

येन केनापि वा रूपेण भवेत्परं प्रेमप्रकाशप्रेसस्य प्रणयोपि न विस्मरणीयो नूनम्, येन युद्धकालाद्बहुपूर्वं प्रारब्धं मुद्रणं युद्धपरिसमाप्तावपि न परिसमापितम्, समापितं तु ममोत्साह-समुज्जृम्भणमखिलम्। यतो हि यादृशं मुद्रणमङ्गीकृतं न तन्निर्व्यूढमंशतोपि। ग्रन्थमध्ये मुद्रणीयोंऽशो विस्मृत्य निह्नुतो निजसविधे। एकवर्षे प्रतिज्ञातं मुद्रणकार्यं षड्वर्षैरपि न परिशेषितमित्येव न, किन्तु मुद्रितः पत्रराशिस्तादृशे दुःस्थले निक्षिप्तो येन पत्राणि मलिनानि विरूपाणि च संवृत्तानि। सुमसृणशिल्पपत्रेषु (आर्टपेपर) मोहमयीतो मुद्राप्य बहुव्ययेन संगृहीतान्यष्टौ ब्लाकचित्राणि निजस्थानतो विलोपितानि येषां न्यूनतया वर्ण्यविषयेपि विशृङ्खलतेव संदृश्येत। यथा दाक्षिणात्यानां भूरिभोजनम् (पृ. २११), एतद्धि केवलं चित्रानुरोधादेव समुपात्तम्। घोरतरं परिश्रम्य नवीनमाविष्कृतो मरुत्तर (मोटर) शकटिबन्धः कुत्रचिदपहारितः। एतस्य पुस्तकस्य मुद्रणाय यानि सीसकाक्षराणि, पत्राणि च पृथङ् नियमितानि तानि लाभ-लोभादन्यत्र प्रयुज्य निःशेषितानि। क्षमायाचनमात्रेण नम्रीभूय सर्वमिदमपमृष्टं च। मध्येसागरमानीय पोतभङ्गस्येव कृपा सेयं तथा विहिता येन द्वितीयो मुद्रणालयः सर्वश्चापि चित्रादेः प्रबन्धः पुनर्नवीनतया गवेषणीयोऽभवत्। तत एव सेयं भूमिका मुखपत्रादिकं च 'प्रिन्टर्स एण्ड पब्लिशर्स' मुद्रणालये मुद्रितम्। तेन च यादृशं विचिन्तितमासीत्तत्सर्वं विस्मृत्य महायुद्धस्य दुर्धरेस्मिन् समये यादृशी मुद्रा-चित्रादेः सामग्री समुपलब्धा तयैव संतोषितमात्मनो हृदयमिति किं वा कस्मै निवेद्यतां नूनम्?

## टीका

अस्तु, यथोपलब्धैश्चित्राद्युपकरणैः सज्जीकृतं जयपुरवैभवमिदं संमुखे श्रीमताम्। दूरदूरतः समागता भ्रमणविलासिनो बहुव्ययेन यद्वैभवमनुभवन्ति तद्धस्तगतमिदं यथेच्छमनुभूयतां भावुकैः। ग्रन्थस्य स्पष्टीकरणाय पूर्वमलिख्यत केवलं संस्कृतटीकैव। किन्तु आमुख-नगरवीथ्योमुर्द्रणोत्तरं बहूनां हितैषिणां

सेयमपि मन्त्रणा समभवद्यत् अन्यान्यसाहित्यरसिकानां कृते हिन्दीभाषार्थोऽप्यवश्यं दीयेतेति। तदनुसारं पूर्वमुद्रितयोरामुख-नगरवीथ्योर्हिन्दीं भाषार्थं पूर्वम् (पृ. ६०) प्रदाय अग्रे नीचैर्भागे सर्वत्र सहैव हिन्दीभावार्थः प्रत्तोऽस्ति। मध्ये नागरिकवीथ्यां हिन्दीभाषार्थो नाऽवलोक्येत पाठकमहाभागैः। सोयमपि मुद्रालयस्य कृपाविशेष इत्यवबुध्यतां तैः।

पुरातनलेखन्या लिखिता सेयं हिन्दी नवीनलेखकानां मनसि मन्ये न कदाचिद्रोचेत किन्तु प्रत्येकपदस्याक्षरार्थमनुरुन्धाना सेयं हिन्दी कारणविशेषणाऽत्रावतीर्णा। यतो हि मूलगतं स्वारस्यं नानुवादैरधिगम्यते इति लोके प्रसिद्धिः। हिन्दीछन्दःसौन्दर्यं संस्कृतेपि संदर्शयितुमिच्छतो ग्रन्थस्यास्याऽऽनन्दो न तावत्कालं वस्तुतोऽवगम्यते यावत्कालं तदिदं छन्दो नानुशील्यते। अत एव पदानामन्वयानुसारं विहितमिमं हिन्दीभाषार्थं पुरतोऽवबुध्य ततो मूलपद्यस्यैव प्रत्येकपदस्यार्थं बोद्धुं ते तथा प्रयतेरन् यथा पद्यगतं स्वारस्यं तेषां बुद्ध्यारूढं भवेदिति टीकाकर्तुरिच्छा। मन्ये काव्यार्थविनोदिनस्तथाऽनुष्ठाय कुर्युः परीक्षामेतस्येत्यलं मुधा विस्तरेण—

**श्रीकाशीनाथशास्त्रिप्रवरकरुणया प्रापितो वाक्प्रवेशं**
**श्रीलक्ष्मीनाथशास्त्रिप्रपदपरिचयाच्छास्त्रपाण्डित्यमाप्तः।**
**साहित्यं कृष्णशास्त्रिप्रणिहितदयया लब्धवान्, मातुलैः स्वै-**
**र्वाग्गुम्फं लम्भितोऽसाविति विनयभराद्वन्दते मञ्जुनाथः ॥१॥**

**व्यञ्जन्मञ्जरिपुञ्जेऽस्मिन्निकुञ्जे मञ्जुलस्वनाः।**
**उन्मीलत्कञ्जकुञ्जेषु गुञ्जेयुरलिकुञ्जराः ॥२॥**

जयपुरम्
(जुलाई १९४७)

भट्टश्रीमथुरानाथशास्त्री
'मञ्जुनाथः'

----

# जयपुरवैभवम्

## आमुखवीथी; चतुष्पदीचत्वरः

:: सरस्वती ::

**सो.-- कीलितकुवलयदाम, तामरसद्युतिदर्पहम्।**
**शशधरधवलितधाम, मामनिशं गोपायतात्॥१॥**

श्वैत्येन निर्जितं कुवलयदाम (स्रक्) येन। तामरसस्य कमलस्य शोभागर्वहारकम्। चन्द्रवद् धवलं धाम तेजः (सरस्वती)॥१॥

* चौपाई *

**जयति जनितविधुरुचिपरिहासा। जयति जलजकुलकलितनिवासा।**
**जयति जगत्त्रयकविकृतगाना। जयति भारती भणितिनिधाना॥२॥**

निजशरीरकान्त्या जनितः चन्द्रकान्तेरपि पराजयो यया। जलज.कमलासना। भणितिः वाङ्मयमेव निधानं निधिर्यस्याः सा॥२॥

**यदवलोकलक्ष्मीलवलीला। सकलकलुषकुलविशमनशीला॥**
**हृदयसदनसुखसृष्टिरपारा। कविविलासमञ्जुलमधुधारा॥३॥**

यस्याः अवलोकलक्ष्म्याः दृष्टिसंपदः लेशस्यापि लीला, सकलपापसमूहनाशिनी (अस्ति)। हृदयरूपसदनस्य अपारा सुखसृष्टिः। कविविलासानां कृते मञ्जुला मधुधारा। भारत्या दृष्टिलवं प्राप्य अमृतधारासिक्ता इव कविताः प्रवर्द्धन्ते इति भावः॥३॥

**मतिविकासकुसुमाकरकल्पा। कीर्तिकौमुदीप्रसृतिरनल्पा॥**
**तदिह सकलसुखमङ्गलमूला। भवतु भारती भृशमनुकूला॥४॥**

बुद्धिविकासे वसन्तसदृशी सा अवलोकलक्ष्मीः कीर्तिकौमुद्याः अनल्पा प्रसृतिः प्रसारः। सकलानां प्राणिनां यत् सुखं हिताचरणम्, मङ्गलं पूर्वजन्माऽदृष्टं च तत् मूलम् (कारणम्) यस्याः सा। एतज्जन्मकृतेन पूर्वजन्मकृतेन च सुकृतेन प्राप्या इत्यर्थः॥४॥

**कलनिनादियत्कच्छपवीणा। श्रुतिग्रामपरिपोषप्रवीणा॥**
**स्वरतरङ्गरिङ्गन्मधुधारा। सकलसिद्धसारस्वतसारा॥५॥**

कलनिनादिनी यस्याः कच्छपी वीणा। श्रुतीनां संगीतप्रसिद्धानां स्वरारम्भकशब्द-विशेषाणां, षड्जग्रामऋषभग्रामेत्यादिस्वरसंघातानां च परिपोषे यथावदभिव्यञ्जने प्रवीणा। या वीणा, स्वरतरङ्गेषु रिङ्गन्ती प्रस्रवन्ती मधुधारा यस्याम् ईदृशी अस्ति। सकलं सिद्धं परात्परं यत् सारस्वतं वाङ्मयं तदेव सारो यस्याः ॥५॥

**सो.-- निखिलनिगमनिश्श्रेय-निरवधिनिरुपाधिकगुणा।**
**विमलविवेकविधेय -विनया वाग्देवी जयति ॥६॥**

विमलेन विवेकेन विधेयः संपाद्यो विनयः प्रपत्तिर्यस्याः सा। जयतिपदारम्भा जयतिपदावसाना च सेयं वाग्देव्याः मङ्गलप्रस्तावना ॥६॥

**शरणमुदेतु मानसे सुचिरम्। चरणमेकमिन्दीवररुचिरम्॥**
**यदनुचिन्तयति चञ्चलचित्ते। कापि धीरता पदमुपधत्ते ॥७॥**

यत् (चरणं 'कर्म')। अनुचिन्तयति ध्यायति चञ्चलेपि चित्ते किमपि धैर्यं पदं दधाति ॥७॥

**भगवति! भूरि भारमहमादाम्। यदभिनवे पथि पदमिदमाधाम्॥**
**सपदि विधेहि मह्यमनुकम्पाम्। देहि देवि मतिप्रनिशमकम्पाम् ॥८॥**

अभिनवे नवीनच्छन्दोबन्धरूपे मार्गे ॥८॥

**दीनविनयमवमन्य न शेताम्। जननि जनय करुणादृशमेताम्॥**
**रचनाश्रममिह मनसि न विन्दे। पदसरोजमकरन्दमिलिन्दे ॥९॥**

दीनस्य विनयं प्रार्थनां तिरस्कृत्य भवती न शेताम् न उदास्ताम्। पदसरोजमकरन्दार्थं भ्रमरायिते मनसि रचनाकृतं श्रमं न अनुभवामि, यदि भवच्चरणावलम्बनं स्यात्तर्हि मे मनसो न मनागपि श्रम इति भावः ॥९॥

**दो.-- चरणसरोरुहयोर्नमन्, सुबहु बद्धयुगपाणि।**
**रसिकमनसि मोदावहां, वाणि मतिं करवाणि ॥१०॥**

बद्धौ युगभूतां पाणी यस्मिन् कर्मणि, बद्धाञ्जलिपुटमित्यर्थः। हे वाणि रसिकमनसो यथा मोदः स्यात्तथा रचनानुगां मतिं संपादयानि। आशिषि लोट्॥ १०॥

**विनतमौलि सविनयमभिवन्दे। गुरुवरचरणराजदरविन्दे।**
**यच्छाया हृदि शममुपसूते। कृतिविमूढताभ्रमपरिभूते ॥११॥**

गुरुवरचरणरूपे राजती (शोभमाने) अरविन्दे अभिवन्दे। कृतौ रचनायां या विमूढता, यश्च भ्रमः (अयथार्थज्ञानम्) ताभ्याम् आक्रान्ते हृदि शन्तिम् उपसूते उत्पादयति ॥११॥

**हृदयमन्दता व्रजति विरामम्। यत्सौरभमभिगम्य निकामम्॥**
**गुरुवरकृपा सकलसुखसीमा। दलयति दुरितमसद्भ्रमभीमा ॥१२॥**

असन् अनुचितो यो भ्रमः तत्कृते भीमा भयंकरी ॥१२॥

**गुरुरुपदेशदीपमभियच्छन्। हृदयतिमिरमपनयति नियच्छन्॥**

**मनसि मणौ गुणरुचिमभिसूते। पदपयोजरजसा परिपूते॥१३॥**

नियच्छन् नियमयन् शासने रक्षन्नित्यर्थः। रजसा निर्मलीकृते रत्नादौ गुणानां हारसूत्रादीनां यथा रुचिः (कान्तिः), तथा चरणरजसा परिपूते मनोमणौ विनयदाक्षिण्यानुगुणां रुचिम् उत्पादयतीत्यर्थः॥१३॥

**वाल्मीकिप्रमुखा विजयन्ते। ये स्म भारतीमभिनवयन्ते॥**

**सूक्तिसिन्धुमभिलक्ष्य हि येषाम्। कृतिसरितः प्रवहन्ति परेषाम्॥१४॥**

अभिनवयन्ते निजरचनया अभिनवां कुर्वन्ति स्मेत्यर्थः। येषां वाल्मीक्यादीनां सूक्तिसागरम् अभिमुखं लक्ष्यीकृत्य। परेषाम् अन्येषां कवीनां कृतिरूपाः सरितः प्रवहन्ति। नदीनां सागराभिमुखत्वं प्रसिद्धम्। कवीनामुपजीव्याः किल वाल्मीक्यादय इति भावः॥१४॥

**दो.-- व्यासवचनरचनाचयेष्वासमस्तभुवनानि।**

**भासयत्सु भावुकभरायासमहं न वदानि॥१५॥**

समस्तभुवनानि आ (अभिव्याप्य) व्यासरचनापूरेषु प्रकाशयत्सु सत्सु भावुकगणस्य आयासं मनःखेदमहं न वर्णयानि। समस्तभुवनेषु प्रख्याता व्यासकृतयस्तथा च भावुकानां को वा खेद इति सकलोपजीव्यत्वं व्यासस्य सूच्यते। तथा च मत्सदृशानां रचनाभिः को वा तेषां परितोष इति निजविनयो ध्वन्यते। व्यास-आस-इत्यादयश्चतुर्ष्वप्यनुप्रासाः॥१५॥

**सकलसुजनपरिवादपरीता। खलपरम्परा केन न गीता॥**

**या समस्तगुणगौरवनिष्ठान्। लघयति हन्त गिरैव गरिष्ठान्॥१६॥**

ग्रन्थकाराणां नियमानुसारं दुर्जननिन्दां सुजनप्रशंसां चारभते-सकलसुजनेति.--

सज्जनानां परिवादेन निन्दया युक्ता। या सकलगुणगौरवयुक्तान् गिरैव वाङ्मात्रेणैव लघयति तिरस्करोति। गुरुतमपरिमाणान् वाङ्मात्रेणैव वा लघू करोति तस्याश्चमत्कारोऽवश्यमेवापूर्व इति हन्तपदेन सूच्यते। परमार्थस्तु गुरून् केवलं वाङ्मत्रेण निन्दति, नाधिकं सामर्थ्यमिति प्रतीयते। व्याजनिन्दा॥१६॥

**कुटिलकथारसरङ्गमुपेता। कपटकोटिसहचरीसमेता॥**

**क्षुन्दन्ती सुयशः परकीयम्। नृत्यति खलरसनैव नटीयम्॥१७॥**

कुटिलकथारस एव रङ्गो नाट्यस्थलं तत् प्राप्ता। कपटकोटिरूपया सहचर्या समेता। क्षुन्दन्ती अवमृद्नन्ती 'खूंदती हुई'। खलजिह्वारूपा इयं नटी नृत्यति॥१७॥

**खलजिह्वा तूलीतुलितेयम्। कपटरङ्गमाह्वाऽनपनेयम्॥**

**परपरिवादचित्रमभिसूते। विमलयशसि पट इव परिपूते॥१८॥**

रूपकान्तरमाह--तूल्या रङ्गकूर्चिकया तुलिता समाना। या अनपनेयं अहार्यं कपटरूपं रङ्गं रञ्जनद्रव्यं प्राप्य। परिपूते खटिकालेपादिना परिमार्जिते पत्रपटादौ इव। परस्य विमले यशसि निन्दारूपं चित्रम्, अभिसूते लिखतीत्यर्थः॥१८॥

**पिशुनवदनवल्मीकनिलीना। खलजिह्वाभुजगीह नवीना॥**

**दशति दूरतोपि हि विहरन्ती। चित्रं या सुजनान्विदहन्ती॥१९॥**

वदनमेव वल्मीकं सर्पबिलस्तस्मिन् निलीना गुप्ता। अन्या भुजगी बर्हिर्नि:सृत्य दशति, इयं तु वल्मीके गुप्तैवेति व्यतिरेकः। विदहन्ती पीडयन्तीति यावत्। विहरन्ती सती दूरतोपि दशति। तस्याः किल विहारोऽन्यस्य मरणमिति भावः॥१९॥

**दो.-- परहितपरिपाटनसुपटु, परपरिभवपरिहासि॥**

**पिशुनपटलमीड्यं न किम्, परनिमित्तमायासि॥२०॥**

परहितस्य परिपाटने उन्मूलने सुचतुरम्। परपरिभवे परतिरस्कारे सति परिहसति प्रसीदति तच्छीलम्। अत एव परनिमित्तम् अन्येषां कृते। आयासि परिश्रमकारकं पिशुनवृन्दं किं न ईड्यं स्तवनीयम्? अपि तु परहितनाशनम्, परतिरस्कारे प्रसन्नता, इत्यादि परार्थमेव परिश्रमकारकं खलवृन्दमवश्यमेव स्तोतव्यमिति व्याजनिन्दा॥२०॥

**सुकृतसज्जसज्जनसमुदाये। विनयमेष विनिवेद्य सुखाये॥**

**परगुणौघपरिचायिनि चित्ते। यो हि कपटघटनां न निधत्ते॥२१॥**

सुजनप्रशंसामुपक्रमते-सुकृते सज्जो यः सज्जनसमुदायस्तस्मिन्। एषोहम् विनयं विनिवेद्य सुखाये सुखीभवामि। सुख इवाचरतीति, आचारक्यङन्ताल्लट् उत्तमपुरुषः। यः सुजनसमुदायः। परगुणसमूहानां परिचायिनि परिचयरक्षके परीक्षिणीत्यर्थः। स्वचित्ते कपटं न धत्ते॥२१॥

**जयति कापि मञ्जुलमधुमल्ली। सुजनसूक्तिसंजीवनवल्ली॥**

**या द्विजिह्वरसनापरिलीढे। स्रवति सुधामिव मानसनीडे॥२२॥**

कापि अनिर्वचनीया। मञ्जुलमधुमल्लिकास्थानीया, सुजनसूक्तिरूपा संजीवनवल्ली जयति। या द्विजिह्वानां, पिशुनानां सर्पाणां च जिह्वाया परितो लीढे आस्वादिते (स्पृष्टे)। चित्तरूपे नीडे गृहे जीवनदानार्थं सुधामिव स्रवति। सर्पजिह्वया परिलीढे पक्षिगृहे यथा अमृतस्रावेण फलं तथा चित्ते सुजनसूक्त्या फलमित्याशयः॥२२॥

**खलकलङ्करेखापि च लग्ना। सुजनसूक्तिसुरसरिति निमग्ना॥**

**शुचिरुदेति विमलत्वमुपेता। शिवशशाङ्कलेखेव समेता॥२३॥**

खलदत्तस्य कलङ्कस्य रेखापि सुजनसूक्तिरूपायां गङ्गायाम् निमग्ना, तदनन्तरं विमलतां प्राप्ता, अतएव शुद्धिचः सती उदेति निष्क्राम्यति। समेता संमुखामुपेता शिवस्य चन्द्रलेखा इव। चन्द्रलेखेव विमला सती उदेति उच्चैरारोहति। चन्द्रलेखापि हरशिरसि गङ्गाप्रवाहपवित्रितैव कलङ्करेखया रहिता जाता, अन्यथा तु चन्द्रः सकलङ्क एव। एवं सत्सूक्तिगङ्गायां खलप्रसेधित- कलङ्कोपि विमलः सन् शिवशशाङ्कलेखेव भूषणं भवतीति भावः॥२३॥

**सुपटुमवैमि न सज्जनदृष्टिम्। परगुणपक्षपातपरिपुष्टिम्।**

**अपरैः सुगुरूकृतमपि गाढम्। या न दोषमभिपश्यति बाढम्॥२४॥**

परेषां गुणानां पक्षपातस्य यत्र परिपुष्टिरस्ति, ईदृशीं सज्जनदृष्टिं अहं सुपटुं सुचतुरां न जानामि। या अपरैः दुर्जनैः गाढं यथा स्यात्तथा सुगुरूकृतमपि (लघुमपि सन्तं गुरुरूपेण प्रसेधितमपि) दोषं न पश्यति। या दृष्टिर्गुरुतरमपि वस्तु न पश्यति सा कथं पट्वी ? एवं गुणपक्षपातवशात् महान्तमपि दोषं या न पश्यति। किन्तु तद्वन्तं जनमात्मीयेषु गणयति सा अवश्यं विकलेति व्याजस्तुतिः॥२४॥

**यदि च सुजनसंगमरससारा। मिलति मञ्जुमन्दाकिनिधारा॥**

**तदिह पापभवतापसनाथा। तुदति हन्त कथमिव खलगाथा॥२५॥**

सत्संगमरस एव सारो यस्याः सा। मन्दाकिन्या धारा। ङ्यापोरिति ह्रस्वः। पापेन, भवतापेन सांसारिकदुःखेन च सनाथा। खलगाथा दुर्जनकथा॥२५॥

**अहह साधुसंगमसुखसरणी। हृदयतापपीड़ापरिहरणी॥**

**यामुपेत्य परिभवति न बाधा। भवति भूरिसुखसूतिरगाधा॥२६॥**

साधूनां संगमसुखस्य सरणिः शैली, हृदयतापरूपायाः पीड़ायाः परिहर्त्री अस्ति। यां पद्धतिं प्राप्य अगाधा अपारा। सुखसूतिः सुखोत्पत्ति॥२६॥

**दो.-- मलयजमदमीलनपराः, सुजनसूक्तयो भान्ति।**

**उरसि यासु सक्तास्वपि हि, तापजापदो यान्ति॥२७॥**

मलयजमदस्य चन्दनगर्वस्य संकोचनपराः। यासु सूक्तिषु लग्नास्वेव तापजाः आपत्तयो यान्ति। चन्दनः किंचित्कालं तत्कृतशैत्यप्रतीक्षायां तापं हरति। इमास्तु लग्नमात्रा एव उरसस्तापापदं हरन्तीति चन्दनगर्वमीलिन्यः॥२७॥

**जयति पूर्वकविवाङ्मधुधारा। सकललोकसुखसौरभसारा॥**

**हरति तापमपि या हृदि नीता। निखिलजगति जीवातुरुदीता॥२८॥**

सुजनप्रशस्तिं परिसमाप्य पुनः प्रकृतां कविप्रशंसामुपक्रमते-जयति.--

सकललोकानां यत्सुखं तदेव सौरभसारः सुगन्धसारो यस्यां सा, सर्वलोकसुखजननी। पूर्वकवीनां वाग्रूपा मधुधारा। यस्यां सौरभं मधुरता च स्यात् ईदृशी मधुधारा अवश्यं जयतीति भावः। या वाग्धारा जीवातुः जीवनौषधिः सती उदीता उत्पन्ना, (ईङ् गतौ, अस्मात् क्तः)। या हृदि नीतापि तापं हरति। अन्या औषधिर्भक्षिता सती तद्वीर्यविपाके रक्तेन सह मिलिते सति, तापं हरति। इयं तु हृदये संनिहितापि तापमपनयतीति विशेषः॥२८॥

**प्रकटसाधुसुरतरुरुचिरेखा। चेदुदेति नन्दनवनलेखा॥**

**यदि च मिलति मन्दाकिनिधारा। तीरविततसुररमणिविहारा॥२९॥**

**यदि च भवति भुवि विलुलितलोभा। त्रिदिवकुञ्जगुञ्जत्पिकशोभा॥**

**जगति तर्हि तुलयति बत धन्ये। कविविलासलीलामिति मन्ये॥३०॥**

प्रकटा साधूनामुत्तमानां सुरतरूणां रुचेः कान्तेः रेखा यस्यां सा। सुरतरुसुभगेति यावत्। चेत् (भुवि) नन्दनवनपंक्तिरुदेति, अकस्माद् भाग्योदयेनाविर्भवति। यदि च तस्यां वनलेखायाम्, तीरे विततः विस्तृतः सुररमणीनां विहारो यस्याम् ईदृशी मन्दाकिनीधारा भवति ॥२९ ॥

विलुलितलोभा जनितलोभा। त्रिदिवकुञ्जे स्वर्गकुञ्जे। गुञ्जतां कूजतां पिकानां शोभा। धन्ये कविविलाससम्बन्धाद्बहुमानभाजने जगति। अयं किल सर्वस्याशयः यदि भूमौ नन्दनवनलेखा स्यात्तस्याश्च मध्ये यदि मन्दाकिनीधारा स्याद्यस्यां देवाङ्गना विहरेयुः। तस्यास्तटकुञ्जे यदि पिकगुञ्जारवः स्यात्तर्हि कविविलासं जगति तुलयेत्। सम्भावनालङ्कारः ॥३० ॥

**हृदयकलितकल्मषकुलदलनी। निरुपमाननिरवधिसुखकलनी ॥**
**अहह कापि निर्भरमदरम्या। कविवाक्सीधुसुधेयमदम्या ॥३१ ॥**

हृदयनिहितस्य कल्मषकुलस्य विषादरूपदुरितसमूहस्य दलनी नाशिनी। लेखनीतिवत्। निरुपमानं अनुपमं निःसीमं च सुखं कलयति। निर्भरो गाढो यो मदस्तेन रम्या। अन्या सीधुसुधा अम्लादिपदार्थ-दमनीया भवति, परं कविवचनरूपा मद्यसुधेयम् अदम्येति भावः ॥३१ ॥

**दो.-- भासकालिदासप्रभृति - कविविलासमीडीय।**
**वाङ् नो वहति विकासमिह, यद्विभासमभिनीय ॥३२ ॥**

कालिदासप्रभृतिकवीनां विलासं कविताचमत्कारं ईडीय स्तुयाम्। ईड् स्तुतौ अस्माल्लिङ उत्तमपुरुषैकवचनम्। यद्विभासं यस्य कविविलासस्य विभासं प्रकाशम्। अभिनीय नीत्वा, गृहीत्वा। इह संसारे। नः अस्माकं वाक् विकासं वहति। कालिदासादिच्छाययैव व्युत्पत्त्या, अस्माकं वाचो विकास इत्यर्थः ॥३२ ॥

**महितमहाकविमौलिविनिहिता। जयति कालिदासातुलकविता ॥**
**दिव्यशक्तिशंसिनि सुविलासे। माद्यति रसिकमनो यदुपासे ॥३३ ॥**

सामान्यतः कवितामभिष्टुत्य कविविशेषाणां कवितां सविमर्शमुपस्तौतिमहितमहा.-

महितानां महाकवीनां मौलिषु न्यस्ता। सर्वैरपि सबहुमानमादृतेत्यर्थः। अतुला अनुपमा कविता। दिव्यशक्तिं सूचयति ईदृशे। सु, विलासा विभ्रमा यस्मिन् ईदृशे। यदुपासे यस्याः कविताया उपासे उपासनायां (सेवने), उपपूर्वकादास्धातोर्घञ्। रसिकानां मनः माद्यति, मत्तं भवति, हृष्यतीत्यर्थः। तथा च-प्रत्यक्षरं दिव्यभावः, नैसर्गिकत्वं, विभ्रमनिर्भरत्वं च कालिदासकविताया विशेष इति भावः ॥३३ ॥

**असमसाहितीसारसुवचना। लसति दण्डिपण्डितवररचना ॥**
**जगति जाग्रदादर्शसनाथा। यस्य कैर्न गेया गुणगाथा ॥३४ ॥**

असमं अनुपमं साहित्यसारं सुप्रकारेण वक्ति तादृशी। सहितस्य भावः साहिती, भावष्यञन्तान् ङीष्। अथवा असमानि साहित्यस्य सारभूतानि सुवचनानि यस्यां सा। जाग्रत् दैदीप्यमानः यः आदर्शस्तेन सनाथा युक्ता। जगन्नाथात्पूर्वम्, अन्ये हि साहित्यकारा उदाहरणे अन्येषामेव कृतिमुद्धरन्ति, न स्वयं तादृक्प्रौढं रचयन्ति। अयं तु दण्डी स्वकीयामेव रचनामुदाहरन् साहित्यविदामादर्श इति अस्य रचना आदर्शसनाथा। किञ्च-आदर्शेन काव्यादर्शेन सनाथा, अस्य गुणकथा कैर्न गेया। यावत्काव्यादर्शं सर्वैरेव स्ताव्येति भावः ॥३४॥

**भूरि वीरभावानभिदधती। भवति भट्टभवभूतिभारती॥**

**यस्य लोकलिपिललितलेखिनी। रम्यरसेपि च रुचिरेरेखिनी॥३५॥**

वीरभावान् वीररसोचितान् भावानभिदधती कथयन्ती। भवभूतिर्हि वीररसनिगुम्फे कालिदास-मतिशेते। एष हि 'झणझणायितस्यन्दनः' अमन्दमददुर्दिनद्विरदवारिदैरावृतः॥ (उत्तर.), दोर्दण्डाञ्चित-चन्द्रशेखर. (वीरचरि.) इत्याद्योजोऽनुकूलबन्धैर्वीररसमुपबृंहयति। कालिदासस्तु मधुरतरवर्णनाभ्यासादोजः स्थलेपि-- "यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम्।" इत्यादि मधुरतरमेवाह। लोकलिप्यां लोकचरितचित्रणे ललिता यस्य लेखिनी। रम्यरसेपि विप्रलम्भकरुणादावपि। रुचिररेखायुक्ता, सुनिपुणेति यावत्। अयं हि चरितचित्रणे चतुरः, करुणविप्रलम्भादिवर्णने चाद्वितीयः। प्रसिद्धिश्चास्य-'भवभूतेः सम्बन्धात् भूधरभूरेव भारती भाति। एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा॥' इत्यादिः सुप्रसिद्धैव॥३५॥

**सहृदयहृदयपटान्न निगच्छति। बाणलिखितगद्यं मुदमृच्छति॥**

**क्लिष्टकल्पनाबहुतरभरिते। यत् सुबन्धुबन्धेपि विजयते॥३६॥**

हृदयरूपात् पटात् न निगच्छति, न याति। बाणेन लिखितं गद्यं मुदं हर्षं ऋच्छति गच्छति, ददातीत्यर्थः। लेखिन्या लिखितमेव गद्यादिकं यदा पत्रपटात् न याति, तर्हि बाणेन बाणाग्रफलकेन लिखितं उत्कीर्णं गद्यं कथं गच्छतु नाम ? यत् बाणस्य गद्यम्। क्लिष्टकल्पनाभिरत्यन्तं भरिते सुबन्धुबन्धे (वासवदत्ताख्ये) सत्यपि विजयते उत्कर्षति। तथा च-गद्यचातुर्येपि क्लिष्टकल्पना सुबन्धोर्दोषः, बाणस्य तु सुमधुरता गद्यस्य सुप्रथितेत्यलं महत्सु तारतम्यविचारेण॥३६॥

**दो.-- मिलितवर्णमैत्रीमधुर्माघोऽभिमुखमुदेति।**

**मधुरताऽथ सा भारवेः केषां न स्मृतिमेति॥३७॥**

मिलिता या वर्णमैत्री सा एव मधु यस्मिन्नीदृशो माघः (शिशुपालवधकाव्यम्) संमुखमायाति। भारवेः (किरातार्जुनीयकारस्य) सा वर्णमैत्रीकृता मधुरता केषां स्मृतिं नैति। अपि तु सर्वे स्मरन्ति। तथा च-माघभारव्योर्वर्णमैत्रीकृते माधुर्ये समानतेति भावः। पक्षान्तरे च-मिलितं सर्वेषां क्षत्रियादिवर्णानां मैत्रीकारकं मधु मद्यं यस्मिन्नीदृशो माघमासः। शीते माघमासे मद्यपैर्विशेषतो मधु सेव्यते। तस्यां मद्यगोष्ठ्यां च क्षत्रियादिवर्णानां न भेदः, प्रत्युत सर्वे मद्यपाने मिलन्ति। तथा च-वर्णानां मधुद्वारा मैत्रीकारको माघमासः समीपागतोऽस्ति, ततश्च मधुरता मधुवर्षिणी रवेः सूर्यस्य भा आतपः केषां स्मृतिं नाऽऽकर्षति। माघमासे आनन्दकारिणी सूर्यदीप्तिः सर्वेषामभिमता भवतीति सर्वस्याशयः॥३७॥

**सुप्रसन्नगौरवगुणधानी। जयति राजशेखरकविवाणी॥**

**यन्निबद्धरचना रसनीया। मदयति मीमांसापि यदीया॥३८॥**

सुप्रसन्नः प्रसादगुणयुक्तो गौरवगुणो (अर्थगाम्भीर्यं प्रौढिर्वा) धीयते यस्यां सा। राजधानीतिवत् अधिकरणे ल्युट्, ङीप्। यया वाण्या निबद्धा रचना। रसनीया सहृदयानामास्वादनीया भवति। यदीया मीमांसा, यद्रचनासंबन्धिनी मीमांसा विमर्शोपि मदयति प्रसादयति। अर्थात् यस्या अन्तस्तलं विचारेण मार्मिकाणामानन्दप्राप्तिर्भवति। किञ्च-यदीया राजशेखरसंबन्धिनी मीमांसा (काव्यमीमांसा) मदयति सारस्वतेयपुरुषादिपरिज्ञानेन, नानाविधकाव्यभिदाबोधनेन च विदुषश्चमत्करोतीत्यर्थः॥३८॥

**अतुलकल्पनाक्रमकमनीया। वाक् श्रीहर्षकवेः स्तवनीया॥**

**प्रौढबन्धबन्धुरपदशय्या। मिलति मुरारिसूक्तिरविजय्या॥३९॥**

अतुलः, अनुपमो यः कल्पनाक्रमस्तेन कमनीया। एवं च 'निपीय यस्येति' प्रथमपद्ये योऽर्थस्तमेव 'रसैः' कथा यस्येति द्वितीयपद्येपि बध्नतोऽनवीकृतत्वम्, स्थाने स्थाने क्लिष्टत्वं च यद्यपि वैगुणं तथापि अपूर्वकल्पनासु श्रीहर्षस्य (नैषधकर्तुः) प्रथितं पाटवमिति भावः। प्रौढबन्धेन बन्धुरा सुन्दरी पदशय्या यस्याः सा। अविजय्या अन्येन कविना विजेतुमशक्या। तथा च आख्यातकृत्तद्धितादि-समञ्जसप्रयोगात्प्रौढबन्धे मुरारिकवेः (अनर्घराघवकर्तुः) पाटवमिति ध्येयम्॥३९॥

**सुप्रसीददोजोनिःश्रेणी। भाति भट्टनारायणवेणी॥**

**साभिप्रायपदौघनिधानी। लसति विशाखदत्तवरवाणी॥४०॥**

प्रस्फुरत्प्रसादं यथा स्यात्तथा, ओजोगुणस्य निःश्रेणिः। उत्तरोत्तरवृद्ध्या सोपानभूता। वेणी वेणीसंहारनाटकम्। तथा च 'यो यः शस्त्रं बिभर्ती'त्यादिषु कठिनपदप्रयोग-बृहत्समासाद्यभावेपि ओजसः पूर्णमात्रायामाविष्करणं भट्टनारायणस्य सर्वसंमतो गुण इति ज्ञेयम्॥ साभिप्रायाः पदौघा निधीयन्ते यस्यां सा। विशाखदत्तस्य (मुद्राराक्षसनाटककर्तुः) वरा वाणी। अर्थपोषमन्तरा नैकपदमपि नाटकेऽनेन प्रयुक्तमिति विदुषां विदितमेव॥४०॥

**अनुप्राससुखसहजसुवेषा। जयति जगद्धरपद्धतिरेषा॥**

**यत्र नादिनवनूपुररम्या। नृत्यतीव भवभक्तिरदम्या॥४१॥**

वृत्याद्यनुप्रासैः सुखः सुखकरः, सहजः स्वाभाविकः, सुन्दरो वेषो यस्याः सा। यत्र यस्यां पद्धत्याम्। नादिभिर्मञ्जुशिञ्जानैर्नवनूपुरैः रम्या, अदम्या अरुद्धप्रसरा, शिवभक्तिर्नृत्यतीव। एवं च मञ्जीरशिञ्जारववन्मञ्जुला, वृत्त्यनुप्राससत्त्वेपि निसर्गसुन्दरी, शिवभक्तिमयी जगद्धरस्य (स्तुति-कुसुमाञ्जलिकर्तुः) वाणीति फलितम्॥४१॥

**सो.- काश्मीरोत्था भान्ति, भर्तृमेण्ठबिह्लणमुखाः।**

**येषां कविता यान्ति, कुङ्कुमकेसरसहजताम्॥४२॥**

भर्तृमेण्ठो (हयग्रीववधनिर्माता), बिह्लणो (विक्रमाङ्कदेवचरितकर्ता), भल्लटः, एतदादयः। कुङ्कुमस्य काश्मीरजस्य ये केसराः परागकोषास्तेषां सहजातत्वम्।

सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः।

न शारदादेशमपास्य येषां मयाद्य दृष्टः कुहचित्प्ररोहः॥

**कविताध्वनि काश्मीरककलिते। सा क्षेमेन्द्रसूक्तिरुन्नयते॥**

**या हि रुचिररचनापरिचेया। वचनौचित्यविचारविनेया॥४३॥**

काश्मीरकपण्डितकृते कविताध्वनि कवितामार्गे। उन्नयते उन्नतिं स्पृशति। रुचिराभिः रचनाभिः परिचेया परीक्षणीया या सूक्तिः, वचनानामौचित्यविचारेण विनेया उपगम्या सेवनीयेति यावत्। तथा च

वाणीनामौचित्यं प्रयुञ्जाना क्षेमेन्द्रसूक्तिः सद्भिः सेवनीयेति भावः। किञ्च 'औचित्यविचार-चर्चा' नामकं ग्रन्थं प्रकाशयन्ती क्षेमेन्द्रसूक्तिरित्यप्यर्थः। नानाविधाः संस्कृतप्राकृतादिरचनाः, औचित्यविचारश्च क्षेमेन्द्रसूक्तेरुन्नतिः ॥४३ ॥

**परिमलपदगुम्फो मधुगाही। पारिजातपरिमलपरिवाही ॥**

**प्रभुमवैमि कह्लणकविमद्धा। बत तरङ्गिणी येन निबद्धा ॥४४ ॥**

परिमलगुप्तस्य कालिदासापरनाम्नः पदगुम्फः। मधु गाहते तच्छीलः पारिजातसौरभवाही च (अस्ति)। सुवर्णैः संग्रथिते यत्पदगुम्फे, सुवर्णे सुगन्ध इव माधुर्यकृतोऽलौकिको गुणः प्रतीयत इति भावः। 'नवसाहसाङ्कचरितम्' यस्य प्रत्यक्षं प्रमाणम्॥ कह्लणकविं राजतरङ्गिणीकारं अद्धा सत्यं प्रभुं समर्थमवैमि। येन राजतरङ्गिणीसदृशः सुप्रसन्नगभीरार्थ ऐतिहासिको ग्रन्थो निबद्धः। पक्षान्तरे च-येन तरङ्गिणी नदी अवरुद्धा स कथं वा प्रभुर्न बोध्यः ॥४४ ॥

**को ननन्द न हि निर्भरबन्धे। भृशमभिनन्दसूरिसुनिबन्धे ॥**

**अहह भर्तृहरिवाक्सरसीयम्। तापहारि सेवनमदसीयम् ॥४५ ॥**

निर्भरोऽश्लथः बन्धो गुम्फो यस्मिन्नीदृशे अभिनन्दसूरेः (कादम्बरीकथासारादिकर्तुः) सुन्दरे निबन्धे को न ननन्द अपि तु सर्व एव प्रससाद। प्रसिद्धो ह्याभाणकः 'अभिनन्दस्य नन्दिनी' इति॥ भर्तृहरेः शतकत्रयादिकर्तुः वाक् इयं सरसी पुष्करिणी। अदसीयम् अदःसंबन्धि। अदसश्छः। सेवनं तापहारि ॥४५ ॥

**कलितकान्तकोमलपदपुण्या। कविजयदेवसूक्तिरतिगुण्या ॥**

**मधुरवर्णमैत्रीरमणीया। भानुकवेरपि वाक् श्रवणीया ॥४६ ॥**

कलितैर्यथास्थानविनिवेशितैः कान्तैः कोमलैः (मधुररसानुगुणैः) पदैः पुण्या जयदेवसूक्तिः, (किन्दुबिल्वजातस्य गीतगोविन्दकर्तुः कविता) अतिगुण्या गुणवती। तन्त्रेण प्रसन्नराघवकर्तुः, महादेव-सुमित्रयोरात्मजस्य पीयूषवर्षस्य चन्द्रालोककर्तुर्जयदेवस्यापि संग्रहो बोध्यः॥ मधुराणां वर्णानां मैत्र्या रमणीया, भानुकवेः रसतरङ्गिणी-रसमञ्जरीकर्तुः वागपि श्राव्या। वर्णमैत्री पदमाधुर्यं ध्वनिकृतं सुश्राव्यत्वं च भानुकवेः कवितायां मार्गणीयम् ॥४६ ॥

**अनुप्रासपटुपदपरिचेया। शम्भुसूक्तिरपि मनसि निधेया ॥**

**मधुरमञ्जुगुम्फनगणनीया। गोवर्द्धनवाणी स्तवनीया ॥४७ ॥**

अनुप्रासेन पटूनि सुभगानि यानि पदानि तैः परीक्षणीया, शंभोः राजेन्द्रकर्णपूर-अन्योक्तिमुक्ताल-तादिकर्तुः काश्मीरकस्य सूक्तिः। मनसि हृदये उत्कीर्णा भवतीत्यर्थः। प्रसिद्धं ह्यस्य- प्रासपटुपदप्रयोगपाटवम्॥ मधुरो मधुररसानुकूलो मञ्जुः प्रस्फुरच्छृङ्गारो यो गुम्फस्तेन गणनीया (माननीया) गोवर्द्धनस्य आर्यासप्तशतीकर्तुः वाणी स्तोतव्या। उक्तं च जयदेवादिभिः- 'शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्द्धनस्पर्द्धी कोपि न विश्रुतः' इति ॥४७ ॥

**सो.- जयति जीवगोस्वामि-रचना भक्तिरसोत्तरा।**

**कमपि रसं कलयामि, कर्णपूरकविताक्रमे ॥४८ ॥**

भक्तिरसः उत्तरः प्रधानं यस्यां सा। जीवगोस्वामिनो रचना भक्तिरसामृतसिन्धु-प्रभृतिर्जयति, अन्यान्यभक्तकविषु विरलदर्शनत्वेनोत्कर्षतीत्यर्थः। भक्तिरसोत्तरेत्यनेन, भक्तेः रसत्वेन स्थापनं जीवगोस्वामिनो भक्तिरसामृतसिन्धुस्थं मतमपि सूचितम्॥ कर्णपूरगोस्वामिनः कवितापद्धतौ। कमपि, अन्यान्यभक्तकविष्वसुलभं रसमानन्दं कलयामि प्राप्नोमि। अत एव एतस्य कृतौ, आनन्दवृन्दावनचम्पू-अलंकारकौस्तुभ-उज्ज्वलनीलमणिप्रभृतिरचनायां भक्तिप्राधान्येप्यपूर्वा कवित्वशक्तिराकर्षकता च प्रतीयते ॥४८॥

**कृतविदर्भपथपदविन्यासा। पटुरनन्तपण्डितरचना सा॥**
**प्रौढगुम्फगौरवगुणगम्या। भोजभारती केन न नम्या॥४९॥**

कृतो विदर्भपथस्य वैदर्भमार्गस्य पदविन्यासो यस्यां सा, ओजःप्रसादमाधुर्याणां सकलानामेव तत्रोपलम्भात्। 'समग्रगुणा वैदर्भी' इति वामनः। अनन्तपण्डितस्य 'भारतचम्पू' कर्तुः सा रचना, पटुः सुनिपुणा (अस्ति)॥ प्रौढो यो गुम्फः, अर्थगौरवगुणश्च ताभ्यां गम्या सूचनीया। भोजराजस्य रामायण-चम्पूप्रभृतिकर्तुर्भारती ॥४९॥

**विशदविषयगुम्फनमनुरुन्धे। वेदान्तार्यगिरामनुबन्धे॥**
**अनुप्रासमनुगतमभिधेयम्। वहति वेङ्कटाध्वरिरचनेयम्॥५०॥**

वेदान्ताचार्यस्य पादुकासहस्रादिकर्तुर्गिरामनुबन्धे वाग्गुम्फे। विशदं विषयस्य एकस्यैव विस्तरेण गुम्फनमनुरुन्धे मानयामि। एकस्यैव वर्ण्यस्य नानाविधाभिर्वर्णनपाटवं तस्याहं बहु मानयामीति भावः॥ वेंकटाध्वरिणो लक्ष्मीसहस्र-विश्वगुणादर्शप्रभृतिकर्तुरियं रचना। अनुप्रासमनुगतम् अनुप्रासानुसारि अभिधेयं वाच्यं वहति। तस्य रचना प्रायः शब्दालंकारमेव सह कृत्वाऽभिधेये प्रसरतीत्यर्थः। अनुप्रासेन अनुगत-मभिधेयमित्यनुक्त्वा, अभिधेयमेव अनुप्रासमनुगच्छतीत्युक्त्वा अनुप्रासानुरोधेन वाच्ये वैगुण्यमपि कुत्रचित्सूचितमिति सुधीभिरुन्नेयम्॥५०॥

**श्लेषनिवेशकुतुकि हृदयं चेत्। तदिह त्रिविक्रमगुम्फमुदञ्चेत्॥**
**निबिडनिगुम्फनैपुणं प्रायाम्। मङ्ख-मयूर-महितरचनायाम्॥५१॥**

श्लेषालङ्कारस्य संनिवेशे कौतुकयुक्तम्। त्रिविक्रमभट्टस्य नलचम्पूकर्तुर्गुम्फम्। उदञ्चेत् अनुसरेत्॥ निबिडः, अश्लथो यो निगुम्फस्तन्नैपुणं प्रायाम् प्राप्नवम्। मयूरः सूर्यशतकादिकर्ता प्रसिद्धः। मङ्खः श्रीकण्ठ-विजयकर्ता काश्मीरकः॥५१॥

**अनुप्रासतृष्णातपतुम्फे। रामभद्रदीक्षितपदगुम्फे॥**
**गुणमलभ्यमपरे कविलोके। ननु निसर्गसुन्दरमवलोके॥५२॥**

अनुप्रासतृष्णारूपस्यातपस्य तुम्फे तर्पके, अनुप्रासपूर्णे इत्यर्थः। तुफ तुम्फ तृप्तौ। अन्तर्भावि-तण्यर्थः। रामभद्रदीक्षितस्य रामाष्टानुप्रास-शृङ्गारतिलकादिकर्तुः पदगुम्फे। अपरे कविलोके अलभ्यं निसर्गसुन्दरं (स्वाभाविकम्) गुणमवलोके पश्यामि। शब्दालङ्कारबाहुल्येपि प्रसादमाधुर्यादिगुणो विलसतीति भावः। पदगुम्फस्य विशेष्यतानुरोधेन, कविलोके इत्यनेन तद्गुम्फो लक्षणीयः॥५२॥

**वाददुर्गमाध्वनि सुदुरापम्। जगन्नाथगिरि गुणमिममापम्॥**

**महितमञ्जुमधुरिमगुणरम्या। रसगङ्गा विलसति यददम्या॥५३॥**

वादस्य परस्परं शास्त्रार्थविमर्शस्य, दुर्गमे मार्गे, सुदुरापम् अतिदुर्लभम्। जगन्नाथगिरि, जगन्नाथ-पंडितराजस्य वाण्याम्। आपम् अध्यगमम्, आप्नुतेर्लुङ्। महितः सकलसंमानितो मञ्जुः काव्यशोभावहो यो माधुर्यगुणस्तेन रम्या। अदम्या केनाप्यनभिभवनीया, सर्वतोप्युत्कर्षशालिनीति यावत्। रसस्य काव्यपरिभाषितस्यानन्दस्य गङ्गा यद्विलसति, वादग्रन्थेपि रसगङ्गाधरे उदाहरणेषु तादृग् रसपरिपोषः कवेरनन्यसाधारणो गुण इति भावः। जगत्पूज्यस्य हिमाद्रेर्गुणमिमं प्राप्नवम् यत्तत्र दुर्गमप्रदेशेषु जगत्पूज्या सुमधुरा गङ्गा प्रवहति, एवं जगन्नाथपंडितराजस्य वाण्यां गुणं प्राप्नवमित्यपि शब्दशक्त्या ध्वन्यते॥५३॥

**दो.- ध्वनिमहिताध्वनि सच्छवीन्प्राकृतकवीन् स वेद।**

**यः किल गाथागुणगणान् याथार्थ्येन विवेद॥५४॥**

ध्वनेर्महिते पूजिते मार्गे। सच्छवीन् शोभमानान्। गाथासप्तशतीसंग्राहक-गौडवहोसेतु-बन्धादिकारकान् प्राकृतभाषाकवीन्। स वेद (जानाति) यो गाथानां सप्तशतीप्रभृतिषु निबद्धानां गाथाच्छन्दसां गुणान् यथार्थं विवेद विदितवान्। गाथासप्तशतीप्रभृतिषु ध्वनिमधुरा गाथा, यो ध्वन्यर्थसहकारेण बुद्धवान् सोऽवश्यं, प्राकृतभाषायां कीदृशं माधुर्यं ध्वन्यर्थानुगुणत्वं चास्तीति बोद्धुं प्रभवेदिति भावः॥५४॥

**सो.--तुलसी-सूर-विहारि-कृष्णभट्ट-भारति-मुखाः।**

**भाषाकविताकारि - कवयः कस्य न संमताः॥५५॥**

संस्कृतप्राकृतकवीनभिष्टुत्य, भाषानुसारिच्छन्दोग्रहणाद्भाषाकवीनपि प्रसङ्गतः, स्तौति-तुलसीति.-श्रीकृष्णभट्टः कविकलानिधिविरुदाङ्कितः सवाईजयसिंहदेवानां (जयपुरनिर्मातृणाम्) राज्ये ''अलंकारकलानिधि'' नामकं महान्तं साहित्यग्रन्थं निर्ममौ। तेन राज्ञा 'कविकलानिधिः' इत्युपाधिः करमपुरानामको ग्रामो हथरोहीभूमिश्च तस्मै पुण्यार्थम् प्रदत्ता। अस्य हि कविता 'लाल' इत्युपनाम्ना प्रसिद्धा। संस्कृते 'ईश्वरविलास' नामक महाकाव्यादिकर्ताप्यसौ व्रजभाषाया महाकविः। एतज्जन्मवृत्तम्, सत्यवकाशे कविताया आदर्शश्चाग्रे (कविवंशवर्णने) दास्यते। 'भारती' इत्युपपदधारी श्रीद्वारकानाथभट्टः श्रीकृष्णभट्टस्यात्मजः। अयमपि संस्कृतव्रजभाषयोर्महाकविः। प्राक्तनसवाईमाधवसिंहानां काले तदाज्ञापनेन बहवो भाषाग्रन्था निर्मिताः। तैरेव चास्मै 'भारती'त्युपाधिर्दत्तः। अस्यापि कविता मधुस्यन्दिनी। परिचयोऽग्रे दास्यते। व्रजभाषा-कविताकारिणः कवयः॥५५॥

**एतदादिकविकोविदनेया। जगति जाह्नवीवाखिलगेया॥**

**जयति कापि कवितामधुधारा। रसिकहृदयसंमोदनसारा॥५६॥**

एतत्प्रभृतिभिः कविश्रेष्ठैरुन्नतिं प्रापयितुं योग्या। जाह्नवीव अखिलजनानां स्तवनीया। संमोदनः सारः (तत्त्वम्) यस्याः सा॥५६॥

**यामवाप्य मादृशमरुपृष्ठे। भवति वाक्प्ररोहो रसपुष्टे॥**

**अहह वहति सुखसहजसुगन्धा। प्रमदमरुल्लहरी मदमन्दा॥५७॥**

यां मधुधारां प्राप्य। मत्सदृशेऽपि मरुदेशे। रसैः नवरसैः जलैश्च पुष्टे भरिते सति वाचां प्ररोहः अङ्कुरः उद्भवति। सुखकरः सहजः स्वाभाविकः सुगन्धो यस्याः सा। मदेन मन्दा धीरा। प्रमदरूपस्य आनन्दरूपस्य मरुतो लहरी वहति। यां पूर्वकविवाग्धारां प्राप्य मत्सदृशा अपि मरुतुल्या वृक्षैः शीतलाः आनन्दपवनयुक्ताश्च भवन्ति ॥५७॥

**सुकविसूक्तिमुत्कर्षविधाने। ध्रुवं स्पर्शमणिमहमभिजाने॥**

**सत्सु यदनुषङ्गात्परिणामे। लसति लोहकठिना रचना मे॥५८॥**

सुकवीनां सूक्तिम्, उन्नतिसंपादने निश्चितं स्पर्शमणिं (पारस) अभिजाने वेद्मि। यस्याः सूक्तेरनुषङ्गात् संबन्धात् लोहवत्कठिनापि मे रचना। परिणामे अवसाने। सत्सु सज्जनेषु लसति। यथा स्पर्शमणेः स्पर्शतो लोहोपि सुवर्णं भवति, एवं पूर्वकविसूक्तिरूपं स्पर्शमणिं संसृज्य लोहवत्कठिनमलिनापि मे रचना सत्सु उपादेया जातेति भावः ॥५८॥

**न गुणचयो न रसोऽस्त्यनुषङ्गी। न मम वाचि काचिन्नवभङ्गी॥**

**तदपि बालभाषितमिति मत्वा। शृणुत बुधाः करुणां कलयित्वा॥५९॥**

अनुषङ्गी सहचरः, अर्थात् रचनयैव सहचारी। नवभङ्गी नवीना च्छटा ॥५९॥

**सो.-- गिरिश-गिरा-गणराज-चरणकञ्जरजसाङ्कितः॥**

**सेवे सुजनसमाज - मभिनवकवितारसविदम्॥६०॥**

शिव-सरस्वती-- गणेशचरणकमलपरागं प्राप्य। अभिनवा या कविता, नीवनैश्छन्दोभिर्नवीन-प्रकारेण बद्धा या कविता तस्या रसवेदितारम् सत्समाजमाराधयामि। शिवादीनामनुग्रहेणैव तादृशानां विवेकिनां सेवा साध्येति ॥६०॥

**कुण्डलच्छन्दः (कुण्डलिया)**

**कविसूक्तिं नवनिर्गतां श्रवसि कुरुत कुतुकेन**

**कवितारसविज्ञान् विना साऽऽद्रियतां किल केन?**

**साद्रियतां किल केन येन विज्ञो गुणवेदी**

**अपटुजनः कुटिलाशयेन कविमानसभेदी।**

**भवदभिमुखमुपढौकितां नु परिमृशत मदुक्तिम्।**

**तन्मुहूर्तमवधाय बुधाः शृणुयुः कविसूक्तिम्॥६१॥**

श्रवसि कर्णे। सा सूक्तिः। येन यस्मात् कारणात्। विज्ञ एव गुणान् वेत्ति तच्छीलोस्ति। कुटिलेन वक्रेण आशयेन भावेन। भवतामभिमुखम्, उपढौकितां प्रहिताम्। परिमृशत विचारयत। अवधाय अवधानं दत्वा ॥६१॥

* * *

# मङ्गलचत्वरः

## श्रीगणेशः

### छप्पय

विशदमौलितलविलसदिन्दुखण्डाऽमलमण्डित
प्रचितचण्डपाखण्डखण्ड-खण्डनवरपण्डित।
पीवरशुण्डाचण्डदण्ड-दण्डितदुरिताऽऽकर
पाण्डुरकुण्डलिकलितललितयज्ञोपवीतधर।
जय एकदन्त विपदन्तकर लम्बोदर गिरिजातनय।
सिन्दूरशोणरुचिशुचिवदन मदनमथनतनुजात! जय ॥१ ॥

सुन्दरमौलितले विलसता इन्दुखण्डेन अमलं यथा स्यात्तथा मण्डित! इति लम्बोदरस्य संबोधनम्। प्रचितः सङ्घीभूतो यः पाखण्डसमूहस्तस्य खण्डने वरपण्डित! पीवरशुण्डारूपेण प्रचण्डदण्डेन दण्डिताः दुरितसमूहाः येन तत्संबो.। पाण्डुरकुण्डलिना श्वेतसर्पेण कलितस्या ललितयज्ञोपवीतस्य धर धारक! विपदाम् अन्तकर नाशक! सिन्दूरेण शोणा या रुचिः (कान्तिः) तथा शुचिवदन सुन्दरमुख! हे मदनमथनतनुजात शिवपुत्र! त्वं जय। पाखण्डखण्डन-विपदन्तकरादिविशेषणैः अखिलविघ्नविध्वंसकतया वीरायितानुभावस्य श्रीगणेशस्य तादृदशैरोजोव्यञ्जकैरक्षरैरेव वर्णनम्। प्रसिद्धं च छप्पयच्छन्दसस्ता-दृगेवोपनिबन्धनम्। अत एव पाखण्ड-दुरित-निग्रहप्रकरणे, ओजोऽनुकूलैरक्षरैः समासैश्चोपनिबन्धनम्। भगवतः श्रीगणेशस्य स्मरणे तु देवताऽनुभावस्यैवोदयात् मृदुलो गुम्फ इति बोध्यम्। विघ्नविध्वंसने साभिप्रायाद्विपदन्तकरपदात्प्रतीतेन परिकराऽलङ्कारेणा-ऽलंकृतो देवविषयको रतिभावो व्यङ्ग्यः। वीररसाऽनुकूलेन छन्दसा मङ्गलाऽऽरम्भेण वीररसाश्रयस्य जयपुरनरेन्द्रस्य यशोवर्णनमग्रे प्रस्तोतव्यमिति सूच्यते। प्रारम्भे छप्पयच्छन्दसो ग्रहणं व्रजभाषायाः कविपद्धत्यनुसारम्। एवं च तद्भाषानुसारमेव सामाजिकैरस्मिन् ग्रन्थे दृष्टिर्देयेति पूर्वतः सूचितम्। अत एव वाक्ये विवक्षामपेक्षमाणैर्मार्मिकैः 'जय एकदन्ते'ति सन्धौ न विग्रहीतव्यम्॥१ ॥

### कवित्त ( घनाक्षरी )

सिन्दूरारुणिम्ना मञ्जुमाणिक्यानुहारी विघ्न-
बिन्दूनुपमर्द्य लसेदन्तरायहारी मे
सकलसुरासुरसमूहसुखसिद्धिकारी
सन्ततमुदेतु मनोमन्दिराधिकारी मे।

**मञ्जुनाथ माद्यन्मधुपालिपरिवारी मिल-**
**दखिलदुरूहदुःखभारविनिवारी मे**
**कटतटखेलद्दानधारी स हि किं न भवे-**
**देकदन्तधारी सकलापदन्तकारी मे ॥२ ॥**

सिन्दूरारुणिम्ना सिन्दूररक्तिम्ना माणिक्यानुकारकः, मे मम विघ्नानां बिन्दूनपि किं पुनः समूहान् उपमर्द्य नाशयित्वा, अन्तरायहारी विघ्नविनाशकः स गणेशो लसेत्। सुखेन सिद्धिकारी सुखसिद्ध्योः कारी वा। मे मम मनोमन्दिरस्याधिकारी अधिष्ठाता, संततमुदेतु, सर्वदैव ममाग्रे प्रकटोस्तु। मंजुनाथेति कवेर्नाममुद्रा, एवमग्रेपि च्छन्दस्सु बोध्यम्। माद्यन्ती (मत्ता)या मधुपालिर्भ्रमरपङ्क्तिः सा परिवारः परिकरो यस्य, सर्वदा गण्डमदलुब्धमधुपनिषेवितत्वात्। मे मिलन् अखिलो दुरूहो (विचारयितुमपि दुःशकः) यो दुःखभारस्तं विनिवारयति तच्छीलः। कटतटे गण्डमण्डले खेलन्ती दानधारा मदधारा यस्य सः, खेलन्तं दानं धारयति तच्छीलो वा। सा एकदन्तधारको मे सकलापदाम् अन्तकारी किं न भवेत्? अपि तु दयावशत्वादवश्यं भवेदिति भावः॥२ ॥

**पुञ्जीभूतभूरिभृङ्गजालैर्विघ्नमालामिव**
**ताडयन्तमुद्यत्कर्णतालैर्ललितावहम्**
**दूरादेकदन्तेनैव पूरानापदानामुप-**
**मर्द्य विपदन्ते सुखसर्वसंपदावहम्।**
**मञ्जुनाथ सिन्दूरितसुन्दरसकलतनुं**
**सिन्धुरवदनमघसिन्धूनापदावहम्**
**सकलसुरासुरसमाजपूर्वपूजावहं**
**वन्दे विघ्नराजमहं मङ्गलमुदावहम्॥३ ॥**

पुञ्जीभूतानि भूरिभृङ्गजालानि येषु तैः। उद्यद्भिः उद्यतैः कर्णतालैः। विघ्नमालामिव ताडयन्तम्। कर्णतालचालने विघ्नमालाताडनस्योत्प्रेक्षा। ललितं भावविशेषमावहति तम्। एकेन दन्तेनैव आपदानां पूरान्। हलन्तादाप्। विपदामन्ते विपदुन्मूलनं कृत्वेत्यर्थः। अघसिन्धून् प्रति पापसमुद्रान् प्रति आपदमावहति तम्, पापसमुद्रशोषकमित्यर्थः। सुरासुरसमाजस्य पूर्वपूजां वहति तम्। मङ्गलमुदौ आवहति करोति तम्॥३ ॥

**सवैयाच्छन्दः (दुर्मिल)**

**विधिना वितनोमि न वै रचना-**
**मपि नाथ! गुणागमहीनमिमम्**
**अमुना शुभकार्यसदारिपुणा**
**बत विघ्नभरेण विलीनमिमम्।**

अयि मञ्जुलनाथ! नवीनकृता-

वधुना यतमाननवीनमिमम्

गणनातिगसद्‌गुणनायक भो

गणनाथ सनाथय दीनमिमम्॥४॥

विधिना शास्त्रनियमानुसारम्। गुणैः, आगमेन शास्त्रज्ञानेन च हीनम्। इममिति सर्वत्र स्वस्य निर्देशः। शुभकार्याणां सर्वदा रिपुणा विघ्नभरेण। नवीनायां नवीनमार्गेण परिचालितायां कृतौ रचनायाम्। यतमानं नवीनम्, इमम् (माम्)। गणनामतिगच्छन्ति उल्लङ्घयन्ति ये सद्‌गुणास्तेषां नायक। इमं दीनं (माम्) सनाथय नाथसहितं कुरु॥४॥

* सरस्वती *

मौक्तिकदामच्छन्दः ( मोतीदाम )

विनन्दतु नीलसरोरुहचारु

पदद्वयमुक्तिविकासनकारु।

यतः किल कीलितकुण्डलिधाम

व्यभादिव मञ्जुलमौक्तिकदाम॥५॥

नीलसरोरुहवत् चारु सुन्दरम्। उक्तीनां सूक्तीनां विकासने कारु शिल्पि। पदद्वयं चरणद्वयम्। विनन्दतु मयि प्रसन्नं भवतु। यतः यस्मिन् (सार्वविभक्तिकः)। कीलितं निबद्धं कुण्डलिनां सर्पाणां तेजः। मञ्जुलं मौक्तिकदामेव, सुन्दरा मौक्तिकस्रगिव। व्यभात् अशोभत्॥५॥

क.-- करुणावलोकलेशमञ्जसाधिगम्य जना

मह्यन्ते महीपैः कृतमानना निरन्तरम्

शारदशशाङ्कशोभिसुघटितदेहलता

जडतां निहन्ति याऽर्थसाधना निरन्तरम्।

मञ्जुनाथ वीणागुणरणननियुक्तकरा

तिमिरहरा या कमलासना निरन्तरम्

विद्वदवतंसपरिशंसितगभीरगुणा

शंसतु शुभानि हंसवाहना निरन्तरम्॥६॥

करुणादृष्टिलवम्, अञ्जसा शीघ्रम्। कृतमाननाः कृतसंमानाः सन्तो महीपैः मह्यन्ते पूज्यन्ते। सुघटिता शोभनाकारा देहलता यस्याः सा। अर्थसाधिका। वीणागुणानां तन्त्रीणां रणने वादने नियुक्तौ लग्नौ करौ यस्याः। शुभानि शंसतु सूचयतु ददातु॥६॥

* छप्पय *

सुरपतिमुखसुरसङ्घसिद्धसेवितपदकमला
सकरुणनयनविलोकलेशलोपितभवशमला।
कोविदगणजेगीयमानमहिमा बहुमानम्
कवितारम्योद्यानपरिष्कारैकनिदानम् ।
कविनिवहान्निर्भरमियं या चिरममरत्वं नयति
शारदेन्दुसुन्दरतनुः सा किल वाग्देवी जयति ।।७।।

सुरपतिमुखैः इन्द्रादिभिः सुरसङ्घैः सिद्धैश्च सेविता। सदयदृष्टिलेशतो लोपितो भवशमलः सांसारिक-मलो यया। बहुमानं यथा स्यात्तथा कोविदगणैरतिशयेन गीयमानो महिमा (माहात्म्यम्) यस्याः सा। परिष्कारस्य मण्डनस्य, एकनिदानं प्रधानकारणम्। अनुग्रहं विना सहृदयहृदयविद्रावकं कवित्वं न भवतीति भावः। कविनिवहान् कविसमूहान्। या इयं सरस्वती चिरकालं यावत् निर्भरं दृढं अमरत्वं प्रापयति ।।७।।

* नीलसरस्वती *

यस्य हि रजोऽधिभालमालिम्पन्ति देवा अपि
के वा वयमस्य महिमानं श्लाघितास्महे
यस्य स्मृतिमात्रतोऽवबुद्धभूरिभावा वयं
कविताकलायां न हि जातुचिदुदास्महे।
मञ्जुनाथ कुण्डलिकलितमञ्जुमञ्जीरक-
मेतत्सूक्तिसंजीवनमाराधयितास्महे
इन्दीवरशोभाभरहरणमुदूढभूरि-
करुणमुदारं चारु चरणमुपास्महे ।।८।।

यस्य चरणस्य रजः धूलिम्। अधिभालं भाले। अस्य चरणस्य माहात्म्यं वयं के श्लाघितास्महे, किं प्रशंसिष्याम् इत्यर्थः। अवबुद्धभूरिभावाः जागरितनवनवभावाः। कवित्वशिल्पे कदाचिदपि न उदास्महे न उदासीना भवामः। कुण्डलिभिः कलिता मञ्जवो मञ्जीरका नूपुराः यस्मिन्। सूक्तीनां संजीवनौषधभूतम्। उदूढा धारिता भूरिकरुणा येन तत्। उदारं वदान्यम् ।।८।।

* हयाननः *

उन्मीलत्प्रसन्नमुखमुद्यन्मणिसद्मान्तरे
पद्मासनासीनमृजुकायतमाशासेहम्
हस्तेष्वक्षमाला-ज्ञानमुद्रा-पुस्तकानि तमो-
विद्रावकशङ्खमावहन्तमनायासेहम्।

निगमविलासावनिं नासापुटनिःश्वसितै-

र्यत्पन्नखभासा साधुसूरिषु समासेहम्

वाचामधिपेन समासेव्यपादपङ्केरुह-

मुक्तीनां विकासे हयवदनमुपासेहम्॥९॥

उन्मीलत् प्रकाशमानं, प्रसन्नं मुखं यस्य तम्। उद्यतः प्रकाशं गच्छतो मणिसद्मनो रत्नगृहस्यान्तरे। पद्मासनेन आसीनम्। ऋजुकः सरलश्चासौ आयतश्च तम्। ध्यानमुद्रायां मेरुदण्डस्य ऋजुस्थापनेन तथैव स्थितेः। यथा कालिदासः - 'ऋज्वायतं संनमितोभयांसम्'। ईदृशं हयास्यमहं आशासे आशास्यत्वे-नाभिप्रैमि। तमसो विद्रावकं दूरीकारकं शङ्खं च। आवहन्तं धारयन्तम्। अनायासा आयासरहिता ईहा इच्छ यस्य तम्। सहजाभिलाषेण सर्वं साधयन्तमित्यर्थः। श्वासैः निगमविलासस्य वेद-विलासस्य भूमिम् उत्पादकमित्यर्थः। यत्पन्नख.-यस्य पादनखस्य कान्त्या। अहं समासे तिष्ठामि। सम्पूर्वकादास्-धातोर्लङुत्तमैकवचनम्। उक्तीनां विकासे सूक्तिसमुल्लासे॥९॥

* श्रीकृष्णः *

मौलौ मुकटेन वरवेणुनाप्यधरपुटे

कक्षे लकुटेन भूरि भासते निरायतम्

कण्ठे वैजयन्त्या मञ्जुमालया विराजतेऽथ

बाह्वोरुपकण्ठे हीरकेयूरैरबाधितम्।

मञ्जुनाथ मध्ये मण्डितोस्ति पीतकौशेयेन

गुल्फे मञ्जुमञ्जीरेण शोभितोस्त्यनाहतम्

दलदरविन्दोपमकोमलचरणयुगो

राधिकागोविन्दो मयि दयतामनारतम्॥१०॥

निरायतम् दीर्घं, अत्यन्तमित्यर्थः। बाह्वोरुपकण्ठे भुजयोः प्रान्ते। हीरकनिर्मितैः (भुजभूषणैः) अबाधितं निरर्गलं विराजते। गुल्फे पदघुटिकयोः चरणयोरित्यर्थः। अनाहतं अनिरुद्धम्। दलम् विकसत् यदरविन्दं तद्वत्को.। राधिकायुक्तो गोविन्दः। संज्ञा हि श्रीमतो जयपुरोपास्यस्य॥१०॥

* त्रिभङ्गीच्छन्दः *

यमुनातटचारी विपिनविहारी सुरसुखकारी दृशमयताम्

वृन्दावनवासी वेणुविलासी सुकृतविकासी संनयताम्।

यो विभवविधायी रुचिपरिचायी वाञ्छितदायी स्मृतिमयताम्

स हि ललितत्रिभङ्गी निजजनसङ्गी रतिरसरङ्गी मयि दयताम्॥११॥

दृशमयतां दृष्टिम् आगच्छतु। सुकृतिनः विकासयति उन्नमयति सः। मंनयताम्, मयि संनतः अनुकूलो भवतु। रुचिं परिचिनोति, भक्तिं परीक्षते सः। स्मृतिम् अयतां प्राप्नुवतां, स्मरणं कुर्वतामिति यावत्। निजजनसङ्गी भक्तसहायकः। रतिरसे शृङ्गाररसे रङ्गी अनुरागी ॥११॥

* श्रीशिवः *

**कर्पूरावदाते सर्वसुषमानुयाते यस्य**
**वपुषि बिभर्ति नागराजिराभरणताम्**
**तरुणशशाङ्कशोभमाननिटिलस्य यस्य**
**कण्ठे क्ष्वेडचिह्नं याति मृगमदसमताम्।**
**रञ्जने समस्तभुवनानामपि ताण्डवेन**
**पापपुञ्जभञ्जने जनानामभिनमताम्**
**जाह्नवीतरङ्गचयसङ्गतकपर्द्दधरे**
**मानसमनङ्गदर्पदमनेऽभिरमताम् ॥१२॥**

सर्वसुषमानुयाते सर्वशोभानुगते। निटिलो भालः। क्ष्वेडचिह्नं विषचिह्नम्। ताण्डवेन समस्तभुवनानां रञ्जने प्रीणके। तरङ्गचयेन तरङ्गसमूहेन सङ्गतो मिलितो यः कपर्द्दो जटाजूटस्तद्धरे ॥१२॥

* * *

# नगरवीथी

## * अथ जयनगरीवर्णनम् *

कौतुकितनागरनिरुद्धपृथुवीथिपथा
सुन्दरीसमूहरुद्धवातायनवर्गा या
कुञ्जरतुरङ्गरथरुद्धराजमार्गतटा
निशितशतघ्नीशतनित्यरुद्धदुर्गा या।
मञ्जुनाथ महितमहार्घवस्तुरुद्धापणा
रुद्धराजमार्गमध्यसिद्धभूरिभर्गा या
श्रीमन्मानभूपभुजदण्डरुद्धबाधाभरा
जयनगरी सा भाति रुद्धपुरसर्गा या ॥१ ॥

नगरवासिभिर्निरुद्धो विशालवीथिपथो (रथ्यामार्गः) यस्याः सा। शोभादर्शनार्थं स्त्रीभिरध्यासित-गवाक्षा। शतघ्नीशतैः 'तोपशतैः' नित्यं रुद्धानि व्याप्तानि दुर्गाणि यस्याः सा। रुद्धं राजमार्गमध्यं यैस्तादृशाः सिद्धाः भूरिभर्गाः बहवः शिवा यस्यां सा, जयपुरराजमार्गमवरुध्य बह्व्यः शिवमन्दिरगुल्मटिकाः सन्तीति। रुद्धः पुराणां सर्ग उत्पत्तिर्यया, जयपुरीनिर्माणोत्तरं तादृशी सुन्दरी पुरी निर्मितैव नेति सूच्यते ॥१ ॥

सुदृढ़-सुदृश्य-सुविशाल-सालसंवलिता
गोपुर-पिनद्धपुरमहिम-महीयसी
रुचिरचतुष्पटीविभागभिन्नराजपथा
राजति समन्तात्सौधराजिरतनीयसी।
मञ्जुनाथ तुङ्गतमदेवालयदन्तुरिता
शौभावैभवेऽस्याः पुनरलका कनीयसी
मानमेदिनीन्द्रमणिशासनसमृद्धसुखा
जयनगरीयं सर्वनगरीगरीयसी ॥२ ॥

सालेन प्राकारेण संवलिता। गोपुरेण पुरद्वारेण पिनद्धं युक्तं यत्पुरं तन्महिम्ना सौष्ठवेन महीयसी महिता। चतुष्पटीनाम् (चौपड़) विभागेन भिन्नाः विभाजिता राजमार्गा यस्यां सा। यस्यां समन्तात् अतनीयसी (महती) सौधराजिः राजति। दन्तुरिता, उन्नतदन्तयुक्तेव, शोभितेति यावत्। कनीयसी लघीयसी। सर्वनगरीभ्यो गरीयसी गुरुतमा ॥२ ॥

**प्रावृषि प्रसारिजलवेणी-मञ्जुलोपवनी**

**नन्दनवनीव दिव्यनेत्रैः परिपेयासौ**

**कारुकार्यखचितसुरम्यसौधमालायुता**

**वैभव-विशाला नूनमलकोपमेयासौ।**

**मञ्जुनाथ मोदान्नित्यमुत्सवसमाजैर्भृता**

**निकटगतापि पूर्वपुण्यैः परिचेयासौ**

**भारतीय 'पैरिस'पुरीव परिलोक्या भृशं**

**जयपुरपुरी मे भूरिभाग्यैरभिधेयाऽसौ ॥३ ॥**

वर्षाकाले प्रसरन्तीभिर्जलकुल्याभिर्मनोरमा उपवनिका यस्यां सा। नन्दनवनी यथा दिव्यनेत्रैः स्वर्गस्थानां नयनैः परिपेया सातिशयं वीक्ष्या, तथा जयपुर्यपि दिव्यनेत्रैः (शोभादर्शने पटुनयनैर्जनैः) दर्शनीया। प्रजाकृतैः उत्सवसमाजैः गोष्ठी-परिक्रमा-भोजनपंक्ति-प्रभृतिभिर्नित्यं भृता। निकटगतापि.- अस्यां पुर्यां निवसन्तोपि ये भाग्यवन्तो भवन्ति त एवास्याः सौष्ठवपरिचयं प्राप्नुवन्तीत्याशयः। पैरिसपुरी सौन्दर्यार्थं विश्वविश्रुता, ततश्च सेयं भारतस्य पैरिसपुरी। मम सौभाग्यादेव सेयं वर्णयितव्याऽभवदित्यर्थः। 'जैपुरपुरीति' हिन्दीवाच्यापि संस्कृते 'जयपुरपुरी'ति लिखिता। वर्णवृद्धिः सह्या ॥३ ॥

*** हरिगीतिकाच्छन्दः ***

**उत्तुङ्गपुरगोपुरनिवेशविशालवीथिधृतोद्धवा**

**श्रेणीनिबद्धसुचारुविपणिपथेषु जनकलकलरवा।**

**नृपवाट-वीथि-विटङ्क-चारुचतुष्पटीरचितोत्सवा**

**जहती तुलां जगतीतले जयतीह जयनगरी नवा ॥४ ॥**

उत्तुङ्गानां पुरगोपुराणां निवेशेन, विशालाभिर्वीथिभिः (मार्गैः) च धृतः उद्धवो हर्षो यया सा। श्रेणीनिबद्धेषु सुचारुषु विपणिपथेषु (पण्यवीथिषु) क्रयविक्रयौ कुर्वतां जनानां कलकलरवो यस्याम्। नृपवाटैः राजमार्गैः राजप्राकारैर्वा, वीथिभिः, विटङ्कैर्हर्म्याणामुन्नतभागैः, चारुभिः चतुष्पटीभिः ('चौपड' इतिख्यातैः राजमार्गचतुष्पथैश्च) रचितः उत्सवो यया। 'विटङ्क' शब्द उन्नतस्थलार्थे प्रयुज्यते। यथा 'समस्तसामन्तकिरीटवेदिका-विटङ्कपीठोल्लुठितारुणाङ्गुलि' बाणः। तुलां जहती अनुपमा, अत एव नवा सर्वनगरीभ्यो नवीना, जयनगरी इह भूमितले जयति ॥४ ॥

**दो.-- अनुपमशोभावैभवाद्वर्णनपथमतियाति।**

**सा सुरनगरीजयकरी, जयपुरनगरी भाति ॥५ ॥**

वर्णनपथम् अतियाति वर्णयितुमशक्येत्यर्थः ॥५ ॥

## * जयपुरनगरस्य संक्षिप्तेतिवृत्तम् *

श्रीजयसिंहमहाराजस्य समये 'आम्बेर' नगरस्य वसतिरतीव संकुला समभवत्। पूर्वं तु पर्वतोद्देशस्तत्रापि स्थानसंकीर्णतेति तत्र निवासे लोकानां क्लेशानुभवोऽभवत्। श्रूयतेऽपि किंवदन्ती-- सम्राजा पृष्टं पर्वतस्थल्यामाम्बेरनगरं केन स्वरूपेण वसतीति। तदा दाडिमं उत्त्वचीकृत्य दर्शितं यत् एकगृहसंमिलितमपरं गृहमिति संकुलतातिशयात् उपर्यधोभावेनोप-विष्टमिति। अस्तु, अश्वमेधयज्ञस्य वर्षत्रयोत्तरं परमचतुराणां निजसचिवानां संमत्या स द्वितीयं नगरं निवासयितुं व्यचारयत्। तदनुसारं संवत् १७८४ पौषवदि अष्टम्यां शनिवासरे (सन् १७२७ ता. २५ नवम्बर अथवा १८ नवम्बर) जयपुरनगरस्य शिलान्यासोऽभवत्। एतस्य नगरस्य निवासनार्थं न केवलं भारतस्यैव अपि तु दूरदूरवर्तिदेशान्तराणामपि नगरनिवेशशिल्पिनो निमन्त्रिता अभूवन्। सर्वैरपि शिल्पिभिः स्वस्वबुद्ध्या पूर्वं मानचित्राणि रचितानि। तेष्वेकं मानचित्रं सर्वसंमत्या स्थिरीकृत्य तदनुसारमिदं नगरमावासितमभूत्। राजमार्गा अतिविशाला अक्रियन्त, गृहाणां सविधतो विशिखाः (गली) स्थापिताः, येन वायुसंचारस्य प्रतिरोधो न भवेत्। राजमार्गाणामुभयपार्श्वे पंक्तिबद्धानि प्रायः समानाकाराणि विशालभवनान्यावासितानि। राजमार्गाणां मध्यतश्च चतुष्पथा निर्मिता येषु जलधारायन्त्राणां निवेशः संभवेत्। राजमार्गाणां समुचितस्थानेषु विशालानि देवमन्दिराणि, तथा नगरस्य मध्यतः सन्तोपि नगरात्पृथग्भूता इव महाविशाला राजप्रासादा निरमीयन्त। एतस्य नगरस्य निवेशने राजकोषतो बहुकोटिमुद्राणां व्ययोऽभवत्। नगरनिवेशक्रमे त्रीन् वारांश्च परिवर्तनान्यभूवन्।

इदं निवेशनैपुण्यं न किलैकस्य मस्तिष्कस्य कार्यम्। एतन्महाकार्यस्य संपादनार्थं महाराजेनैका समितिरेव निरमीयत। जयसिंहमहाराजस्य सचिवेष्वेको वङ्गदेशीयोप्यासीत्। तस्य लघुभ्राता विद्याधरनामकोऽभवत्। स तावदस्या मण्डल्याः प्रमुखोऽभूत्, परं सर्वतोप्युपरि महाराजस्य विलक्षणा प्रतिभैव कार्यं चकार। महाराजस्य नगरनिर्माणसम्बन्धि अद्भुतज्ञानं सर्वेपि दूरदेश्याः शिल्पिनो मुक्तकण्ठं प्रशंसन्ति। एतज्ज्ञानस्य प्रत्यक्षं प्रमाणमिदं नगरमेवास्ति।

स समयः केवलं राजपुत्रप्रदेश एव किं संपूर्णे भारतवर्ष एव युद्धाक्रमणादिभिर्घोरतरः समभवत्। महाराजो जयसिंहश्च मोगलसम्राजां राज्यरक्षकोऽभूत्। अत एव एतत्प्रदेशोपरि सर्वदैव विपक्षाक्रमणस्य भयमभवत्। तत एव महाराजेन येयं नवा राजधानी निर्मापिता तस्यां प्रारम्भादेव दुर्गाणां निर्माणम्, गोपुरेषु शतघ्न्यादीनां निवेशार्थं स्थानविशेषविरचनम्, नगरस्योपान्तेषु रक्षादुर्गाणां निवेशः, नगरगोपुराणां मुखभाग एव पुररक्षकतया प्रबलानां सामन्तानां संनिवेशः, नगरप्राकारस्य बाह्यतश्चूर्ण-पाषाणादितो निर्माणेपि नगरे अभ्यन्तरे बालुकामयस्य स्थापनं येन शतघ्नीगोलकः प्राकारं निर्भिद्य नगरे गन्तुं न शक्नुयात्, इत्येवंप्रायः सर्वप्रकारकः समरसंनाह एव कल्पितोऽभवत्। सर्वसारस्त्वयम्-- यथा साम्प्रतमिदं नगरं शिल्प-सौन्दर्य-वैभवादिमण्डितमनुभूयते तथा तस्मिन् समये शौर्यरसमयमेवालक्ष्यते स्म। अत एव श्रीजयसिंहमहाराजसंमानितैरस्मत्पूर्वजैः श्रीश्रीकृष्ण-भट्टकविकलानिधिभिः स्वचक्षुषोरग्रे निवेशिताया अस्या राजधान्या वीरतामयमेव वर्णनं कृतम्। यथा--

''नित्यज्यारूढचापा स्थिरतरवरधानुष्कता सद्ध्वजाढ्या
निःसानश्रीः समन्ताद्वशितजनमना व्योम्नि नग्नासिधारा।
प्रोदश्चच्छक्तिलीला मदगजगतियुग् जैत्रवाद्यानुनादा
जाग्रत्कामाधिराज्या जयति जयपुराख्या नवा राजधानी॥''

प्रोदञ्चन्ती शक्रेः (सामर्थ्यस्य, भगवत्याश्च) लीला यस्यां सा, ततश्च सर्वाण्यपि विशेषणानि नगर्यां भगवत्यां चान्वेष्यन्तीति किं वा मार्मिकेषु कथनेन। जाग्रती कामस्य अधिराजता यस्यां सा (भगवती)। जाग्रती'कामा' नाम्न्या नगर्याः अधिराजता यस्यां सा (नगरी), पूर्वं हि कामा (कामवन) स्थानाधीशो जयपुरे अधिराजोऽभवत्। इदानीमिदं स्थानं भरतपुरराज्यान्तर्गतमस्ति।

## * नगरस्थानानि *

### राजप्रासादः 'चन्द्रमहल'

(कवित्त)--दूरतो निरीक्ष्यहारिहाटकपताकायुतं
पीतरङ्गरञ्जितमुपरितले वीक्ष्यताम्
राजज्जालवातायन-वलभी-निषङ्गगृहं
विस्मयावहं यच्छिल्पवैभवे परीक्ष्यताम्।
मञ्जुनाथ मर्मरनिबद्धस्तम्भ-भूमितलं
भाति निस्तुलं यत्सप्तभूमिकं समीक्ष्यताम्
वैभवबहलमनियन्त्रितमहलमपि
सामन्ताभिगुप्त'चन्द्रमहल'मवेक्ष्यताम्॥६॥

दूरतोपि निरीक्षणीयाभिः सुन्दरसुवर्णपताकाभिर्युतम्। उपरितले ('ऊपर का खन')। पीतरङ्गेण रञ्जितम्। साम्प्रतं रङ्गाणां परिवृत्तिः कृता। राजन्तः शोभमानाः जालवातायनानि, वलभीगृहाः उपरिगृहाः, निषङ्गगृहाः संबद्धगृहाश्च, यस्मिन्। मर्मरपाषाणैः निबद्धाः स्तम्भा भूमितलाश्च यस्मिन्। निस्तुलम् अनुपमं यत् सप्तभूमिकं सप्ततलं भाति इति समीक्ष्यताम्। सप्ततलानां नामानि क्रमशः-- १. चन्द्रमन्दिरम्, प्रियतमनिवासः। २. सुखनिवासः। ३.रङ्गमन्दिरम्। ४. शोभानिवासः। ५. छविनिवासः। ६. श्रीनिवासः। ७. मुकुटमन्दिरम् (मुकुटमहल) इति। नीचैस्तलं चन्द्रमन्दिरं जयपुरस्थापकेन सवाईजयसिंहमहाराजेन, अन्यानि तु ईश्वरीसिंह-माधवसिंह-प्रतापसिंहैर्निर्मापितानि, रामसिंहमहाराजेन च सर्वेषां परिष्कारः कृतः। वैभव-बहलं प्रचुरवैभवम्। अप्रतिरुद्धान् महान् उत्सवान् लाति, नित्योत्सवमित्यर्थः। सामन्तैः अभिरक्षितम्, एतस्य हर्म्यस्य निरीक्षणाधिकृता भूम्यधिकारिणः सामन्ताः सन्तीति राजकीयनियमः सूचितः॥६॥

*** प्रियतमनिवासः ***

**चित्रिता चतुर्दिक् गुल्मगुम्फितगवाक्षशतै-**
**र्वल्गुवेश्यमाला व्यूढजाला वीक्षणीयासौ**
**राजकीयशस्त्रागारपार्श्वे हरिद्वातायने-**
**ऽहर्निशं प्रवृत्ता गुणिगीतिः श्रवणीयासौ।**
**नृत्यद्बर्हिचित्रचमत्कारं पुरो द्वारं वीक्ष्य**
**मध्ये विद्युदिद्धाऽऽलोकलेखा लक्षणीयासौ**
**शिल्पकलोल्लास-भूरिवैभवविलास-भृता**
**प्रियतमनिवासहर्म्यमालाऽऽलोकनीयासौ ॥७॥**

गुल्म-('बुर्ज़')मण्डितैः गवाक्ष-('झरोखा') शतैः चित्रायिता, चित्रे विलिख्य प्रकटितेव। व्यूढजाला धृतजाला ('जाली') सुन्दरहर्म्यमाला। राजकीयशस्त्रागारस्य 'सिलहखाना' पार्श्वे, हरिद्वातायने 'हरा बँगला' इति प्रसिद्धे। गुणिनां गानकलावतां गीतिः। तत्र हि समयपर्यायेण राजाश्रितानां गायकानां गानं सर्वदैव समभवत्। अधुना स्थानादिषु परिवर्तनं जातम्। नृत्यतो बर्हिणश्चित्रस्य चमत्कारो यस्मिन्। 'प्रीतमनिवासे'ति प्रसिद्धापि संस्कृते सा शुद्धं विलिखिता। अत्रापि वर्णवृद्धिः सह्या ॥७॥

*** श्रीगोविन्ददेवः ***

**संमुखमसङ्ख्यजलधारायन्त्रशोभितलं**
**गगनविचुम्बि चन्द्रमहलं न वीक्षसे**
**शीलय समन्तादेतमारामं सुखेन सखे**
**मन्दिरमखेदमिदं किं वा न समीक्षसे?।**
**राजहर्म्यमालामवलोकितुमुपागतोऽपि**
**जयपुरराजचन्द्रशालां न परीक्षसे?**
**वञ्चितोसि विन्दन्नपि वेलां भो वयस्य, दृशा**
**निर्जितारविन्दं न चेद्गोविन्दं निरीक्षसे ॥८॥**

असंख्यैः जलधारायन्त्रैः 'फुँहारे' शोभमानं तलं यस्य ईदृशं 'चन्द्रमहलं' संमुखं न वीक्षसे? अपि तु वीक्षसे एव। अखेदं यथा स्यात्तथा किं न समीक्षसे? अथवा अखेदं मन्दिरम्। पर्यन्ततः आरामः मध्ये चेदं मन्दिरमिति स्थानसंनिवेशो दर्शितः। राजहर्म्यमालां द्रष्टुमागतेन जनेन जयपुरराजस्य श्रीगोविन्दस्य चन्द्रशाला (उत्कृष्टगृहम्)अवश्यं परीक्षणीया। त्वं तु तां चन्द्रशालां न परिचिनोषि, आश्चर्यम्। प्राचीनरीत्यनुसारं जयपुरराज्यस्य राजा श्रीगोविन्ददेवः, जयपुरशासको नृपस्तु तस्य आमात्यः 'दीवानः'। अत एव राज्ञः शासनपत्रेषु 'दीवानवचनात्' इत्युल्लेखोऽद्यापि प्रचलति। वेलाम् दर्शनसमयं प्राप्नुवन्नपि यदि दृशा (नयनाभ्याम्) विजितकमलं गोविन्दं न वीक्षसे, तर्हि वञ्चितोसि ॥८॥

इयं प्रतिमा पूर्वं वृन्दावनस्थे मन्दिरे आसीत्। यवनसम्राजा औरङ्गजेबेन यदा मानसिंह-निर्मापितस्य तन्मदिरस्य उपरितलं शतघ्नीगोलकेन त्रोटितं तदा प्रतिमादिकं सर्वं तन्मन्दिराद-पसारितम्। पूर्वं सेयं गोविन्दमूर्तिः आम्बेरस्य घाटिकायां निर्मापिते मन्दिरे प्रतिष्ठिता। ततो जयपुरनगरस्य प्रतिष्ठापने सति जयपुरराज्यस्य राजा सन् भगवान् गोविन्दो राजहर्म्येष्वेवातिष्ठत्। सवाईजयसिंहमहाराजेन चेयं मूर्तिर्जयपुरे प्रतिष्ठापिता। एतस्या ध्यानादिकं मङ्गले गोविन्दवीथ्यां साहित्यवैभवस्य देवभावप्रकरणे च द्रष्टव्यम्।

## * 'सिरहड्योढ़ीबाजार' *

[चतुष्पटीमारभ्य नाटकशालापर्यन्तः स्थानसंनिवेशः]

**वामतो बहल'हवामहल'मवेक्ष्य ततो**
**दक्षिणतः शिक्षागृहमुन्नतमवेक्ष्यताम्**
**अभ्रंलिहराजमन्त्रिन्यायालयमेक्ष्य ततः**
**संस्कृतसुविद्यापाठशालासौ परीक्ष्यताम्।**
**मञ्जुनाथ राजहर्म्यगोपुरप्रवरमाप्य**
**कल्किमन्दिरस्थं भेरिभवनं समीक्ष्यताम्**
**जयपुरराजटङ्कशालासंमुखीना सखे**
**श्रीरामप्रकाशनाट्यशाला क्षणमीक्ष्यताम्॥९॥**

चतुष्पटीं पृष्ठे कृत्वा उत्तरमुखं गच्छता त्वया वामतः वामभागे बहलं विशदं हवामहलं वीक्ष्य। शिक्षागृहं 'कालेजियट हाईस्कूल'। राजमन्त्रिन्यायालयः-प्राचीन 'कौसिलभवनम्' अधुना तु 'चीफ़कोर्ट'। राजहर्म्यस्य गोपुरप्रवरम् प्रधानं गोपुरम् 'सिरह-ड्योढ़ी'। जयपुरराज्यस्य टङ्कशालायाः 'टकसाल' संमुखीना संमुखस्था॥९॥

## * 'हवामहलम्' *

**गगनविचुम्बि-चित्तहारि-चारुचूडायुतं**
**मौलिविनिरूढानेककेतनमुदीक्ष्यताम्**
**रुचिरकपाटपरियातातुलशोभाशालि-**
**वातायनजालमहो सस्पृहं समीक्ष्यताम्।**
**मञ्जुनाथ पाटलसुरङ्गसप्तखण्डमिदं**
**तुङ्गतया मन्ये मेरुखण्डमिवोत्प्रेक्ष्यतां**
**सततमवारितसमीरणप्रवाहवहं**
**नृपतिनिवास-हवामहलवेक्ष्यताम्॥**

चूडाशिखरदेश: मौलौ शिखरदेशे स्थापितानि अनेककेतनानि (ध्वजानि) यस्मिन्। रुचिकपाटै: परियातम् अतुलशोभाशालि वातायनजालं यस्य तत्। अवारितम् अप्रतिरुद्धं समीरणप्रवाहं वायुसंचारं बहति तादृशम्। नृपतिनिवासोचितम् उत्कृष्टा राजान: प्राघुणिका: सन्त: अस्मिन् तिष्ठन्तीति सूचितम्। उदयपुरस्य महाराणामहोदय: प्रायोऽस्मिन्नेव न्यवसत्।

नेदमेकं हर्म्यमपि तु तु हर्म्यमाला। एतस्या अग्रभागे महाविशालं प्राङ्गणम्। यत्र हि माधवसिंहमहाराजस्य (अर्वाचीनस्य) समये प्रायो ब्राह्मणभोजनादिको भूरिभोजनप्रसङ्गो निरवाह्यत। सेयं सौधमाला प्रतापसिंहमहाराजेन निर्मापिता।

*** रामप्रकाश 'टाकीज' (नाटकघर) ***

**श्रीमद्रामसिंहमहिपालकलाप्रेमबला-**
**त्पूर्वं यत्र नाट्यकलाऽखेलल्लसदिन्दिरे**
**भारते प्रशस्ततमनाट्यरङ्गमञ्चे व्यभा-**
**दिन्द्रसभा 'गैस'रुचिचञ्चच्चारुचन्दिरे।**
**संप्रति नवीनयुगरुच्या नारनाट्यस्थले**
**चित्रनाट्यमीक्षे चलज्जल्पच्चित्रबन्धुरे**
**तुङ्गतया विशदतया च परमन्दरेऽस्मिन्**
**सुन्दरे रमस्व नवनाट्यकलामन्दिरे॥**

लसदि.-- लसन्ती इन्दिरा (राजलक्ष्मी: शोभा वा) यत्र, तस्मिन् (नाट्यमन्दिरे) नाट्यकला अखेलत् पदे-पदे प्रकाशते स्मेत्यर्थ:। गैसरुचि.-गैसप्रकाशेन चमत्कुर्वन् चारु: चन्दिर: (चन्द्र इव) यस्मिन्, 'इन्द्रसभा' (इन्द्रस्य साक्षात् सभा, तन्नामकनाटकं च) व्यभात् विभाति स्म। चलज्जल्प.-- चलद्भि:, परस्परं संलपद्भिश्च चित्रैर्बन्धुरं (सुन्दरे)। परमन्दरे द्वितीये मन्दरे मन्दरपर्वतसदृशे॥

*** माधवविलास: ***

**राजमल्लतरलतडागप्रस्रवेण मही**
**मेदुरमहीरुहैर्महिष्ठाऽभूत्पुराऽद्भुतम्**
**राजोचितचारुचन्द्रशाला-जालवातायने**
**भूपभवनेऽस्मिन् यन्त्रपुत्रिकाभिराततम्।**
**संप्रति समर्हणीय 'मायुर्वेदकालेजेन'**
**मानमहीपाले यस्य चोन्नतिरनारतम्**
**माधवमहीपकृतन्यासमपि मानोद्धास-**
**माधवविलासमेनमासादय साम्प्रतम्॥**

यन्त्रपुत्रिका: पाषाणघटिता जलयन्त्रपुत्तलिका:। कृतन्यास.-- माधवमहीपेन कृत: शिलान्यासो यस्य। मानोद्धास.-- मानात् मानमहीपालात् उद्धास: समुन्नतिर्यस्य।

*** दुन्दुभिभवनम् 'नौबतखाना' ***

**संनिहितसाधुसौधगुल्मानि प्रतिध्वनयन्**
**ध्यनयन् गवाक्ष-गोपुराणामिदमन्तरम्**
**प्रसरदमन्दमरुद्वेगभरैर्भ्रान्त्वा भूरि**
**भूपभवनेषु भवन् भूयो मदमन्थरम्।**
**मञ्जुनाथ मानमेदिनीशजयघोषवहो**
**वदति समन्तादहोरात्रसमयान्तरम्**
**द्वेषिगणदेशे दिशन् भीतिमिव, दर्पभरा-**
**द्दन्ध्वनीति दीर्घं द्वारि दुन्दुभिरबन्धुरम्॥१०॥**

सौधनां गुल्मानि 'बुर्ज़'। गवाक्षाणां गोपुराणां च अन्तरं मध्यभागं ध्वनयन् गुञ्जयन्। प्रसरत: अमन्दमारुतस्य वेगभरै: परितो भ्रान्त्वा राजभवनेषु मदादिव मन्थरं यथा तथा भवन्। अह्न: रात्रेश्च समयान्तरालं वदति, अनेन राज्ञ: प्रबोध-शयन-स्नानादे: सूचनाय पञ्चवारान् दुन्दुभिध्वननं सूचितम्। भीतिमिव दिशन् भयमुत्पादयन्। अबन्धुरं नियतगत्या। दन्ध्वनीति पुन: पुनरतिशयेन नदति। अयमधिकारो यवनसम्राड्भि: प्रतिष्ठितमहाराजेभ्य एव व्यतीर्यत। यतो यतो राजानोऽगच्छन् सर्वदैव तै: साकं तदिदं दुन्दुभिवाद्यमगच्छत्। श्रूयते-सवाईजयसिंह-महाराजेन सोयमधिकारो निजकृपापात्राय रायमल्लाय (राजामलजी) अप्यदीयत, अग्रे त्वरुध्यत। दुन्दुभिभवने द्वे स्त: देशस्य राज्ञश्च, 'देश का' 'हजूर का'। राज्ञो दुन्दुभिभवनं कल्किमन्दिरसमीपे वर्तते॥१०॥

***'जलेब चौक' ***

[सम्राज्ञां यात्रोत्सवेषु शरीररक्षाप्रबन्धार्थमग्रत: पृष्ठे च कश्चिदवकाशोऽस्थाप्यत, अयं निर्मुक्तोऽवकाशो यवनभाषायां 'जलेब' उच्यते। तत्प्रबन्धका: 'जलेबदार' उच्यन्ते, येऽद्यापि नृपाश्रिता: सन्ति। प्रधानगोपुराग्रत:, अस्मिन्नङ्गणे सम्राडुचितस्य यात्राक्रमस्य सम्यक् स्थापनप्रबन्धो निर्धारितोस्तीति तथा नामनिर्देश: अधिकराणानां (कचहरी) स्थापनं तु श्रीरामसिंहमहाराजस्य समयेऽत्राभवत्]

**राज्यशासनोपयोगि-विविधविभागैर्भृतं**
**संभृतं समन्ताद्व्यवहारैरेव निर्भ्रमम्**
**अन्योन्याभियोगेष्वेव नि:शेषितवद्भ्यो धनं**
**कारयत्कचहरीति नाम हृदयङ्गमम्।**
**वृक्षतले लेख्यमानलेख्यं वादशीलैरथ**
**वाक्कीलैर्विलुप्यमानभूरिधनमश्रमम्**

**मदमवलेपि-नृणां शासनबलेन हर-**

**ज्जयति जलेबचौकचत्वरमनुत्तमम् ॥११ ॥**

विविधभागैः 'दीवानी-अदालत-फौज़दारी' आदिभिर्भृतम्। व्यवहाराः 'मुक़दमा' परस्पराभियोगेषु 'मुक़दमा'सु धनं समापितवद्भ्यो जनेभ्यः 'कचहरी' (कचान् केशान् हरतीति) नाम हृदयङ्गमम् मनोनिविष्टं कारयत्। वादशीलैः अभियोगं चालयद्भिर्जनैः वृक्षतले लेख्यमानाः 'अर्ज़ीदावा-मुराफ़ानविश्त' आदयो लेख्याः यस्मिन्। वाक़ीलैः ('वकील') विना परिश्रममेव अपह्रियमाणं बहुधनं यस्मिन् तत्। अवलेपिनां गर्विष्ठानां नृणां मदं शासनबलेन हरत् ॥११ ॥

*** ज्यौतिषयन्त्रशाला ***

**यन्त्रराजमादधाति गोलविषयेक्षितये**

**राशिवलयेन परिव्यक्तराशिमालासौ**

**द्योतय दिगंशानुन्नतांशान् रामयन्त्रमुखे**

**सम्राड्यन्त्रसंमुखे प्रकाशीकृतकालासौ।**

**श्रीमज्जयसिंहः स्वयमाविष्कुरुते स्म हि य-**

**ज्जयति जयप्रकाशयन्त्रात्सुविशालासौ**

**श्रीमज्जयसिंहदेवकीयकलाश्लाघनीय-**

**जयपुरराजकीयज्योतिर्यन्त्रशालाऽसौ ॥१२ ॥**

असौ (यन्त्रशाला) गोलविषयस्य ईक्षितये ईक्षणाय 'यन्त्रराज' नामकं यन्त्रम् आदधाति। 'राशिवलय'यन्त्रेण परिव्यक्ता प्रकटीकृता राशिमाला यया ईदृशी अस्ति। प्रकाशीकृतः कालः समयो यया। यत् ('जयप्रकाश'यन्त्रम्) स्वयं श्रीमान् जयसिंहमहाराजः आविष्कुरुते स्म तादृशाद् यन्त्रात् सुविशाला असौ जयति अन्ययन्त्रशालाभ्यः प्रशस्यते। यन्त्रादिति हेतौ पञ्चमी। अन्यानि यन्त्राणि ज्यौतिषशास्त्रानुसारं महाराजेन निर्मापितानि इदं यन्त्रं तु स्वयं महाराजेनैव स्वबुद्ध्या आविष्कृतमिति विजये कारणम्। जयसिंहदेवसंबन्धिन्या (गहादित्वाच्छः, देवस्य चेति कुक्) कलया निर्माणचातुर्येण श्लाघनीया। अत्र कतिपययन्त्राणामेव नामनिर्देशः कृतः। जिज्ञासुभिस्तद्विषयकं पुस्तकं यन्त्रशालाधिकृतेभ्यः प्राप्यम्। एवंविधा यन्त्रशाला जयसिंहमहाराजेन दिल्ली-काशी-उज्जयिनी-मथुरास्वपि निर्मापिताः, यासां जीर्णोद्धारोऽधुनैव जयपुरराज्येन कारितः ॥१२ ॥

*** 'कौंसिलभवनम्' (चीफ़कोर्ट) ***

**छप्पय**

**विशदसभाभवनेन भूरि वैभवमुद्धरते**

**गगनचुम्बिचूडाचयेन चेतश्चित्रयते।**

**प्राड्विवाकमुख्या हि यत्र वेत्रासननिष्ठाः**
**विमृशन्ति व्यवहारमद्यतननियमपटिष्ठाः।**
**जयनगरनीतिनिर्धारणे निध्यायानिशमग्रिमम्।**
**अपनीतियन्त्रणाभयहरं मन्त्रिमन्त्रणालयमिमम्॥१३॥**

विशदेन अतिविशालोन्नतेन सभाभवनेन (हॉल) वैभवं धारयति, तद्भवनं दृष्ट्वैव राजवैभवस्य परिचयो भवतीत्याशयः। चूडाचयेन शिखरसमूहेन। चित्रयते चित्रं विस्मितं करोति, तत्करोतीति णिच्। प्राड्विवाकमुख्याः 'चीफ़ जज'। अद्यतने सामयिके नियमे (ला, कानून) पटुतमाः। व्यवहारम् अभियोगं 'मुकदमा'। कुनीतेर्दुःखस्य भयहरम् इमं मन्त्रिमन्त्रणालयम् (पूर्वतनं कौंसिलभवनम्) जयपुरनीतिनिर्णये अग्रगण्यं निध्याय पश्य। लोट् मध्यमपुरुषैकवचनम्। इदं भवनं यद्धि नवीनं भवनम् 'नया महल' इत्यप्युच्यते श्रीरामसिंह-महाराजेन (अर्वाचीनेन) निर्मापितं किन्तु एतस्य पूर्तिः श्रीमाधवसिंहमहाराजस्य समयेऽभवत्। येन क्रमेणास्यारम्भोऽभवत्तेन क्रमेण समाप्तिर्न जाता। इदं निवासाय न शुभमिति शाकुनिकविचारेण अस्य निर्माणे तथाविधोत्साहो नाभवत्। परं तथापि जयपुरस्य प्रसिद्धप्रसिद्धभवनेषु विशेषोल्लेखनीयम्॥१३॥

*** राजकीयसंस्कृतपाठशाला (संस्कृतकालेज) ***

**रामचन्द्रमन्द्रिरमुपेत्य बहिरङ्गणतो**
**भागद्वयतोपि नीचैः श्रेणिर्दर्शनीयासौ**
**उन्नततलेऽथ न्याय-व्याकरण-साहित्यादि-**
**श्रेणिपरिश्रेणिर्मुखभागे लोकनीयासौ।**
**मञ्जुनाथ पार्श्वद्वयभागे पुनर्धर्मशास्त्र-**
**ज्यौतिष-वेदान्त-वैद्यकक्ष्या कलनीयासौ**
**वेदघोषपावितपुरःस्थचन्द्रशाला शास्त्र-**
**वैभवविशाला पाठशाला राजकीयासौ॥१४॥**

स्थानसंनिवेशो दर्श्यते-- बहिरङ्गणतः बहिरङ्गणे, सार्वविभक्तिकस्तसिः। द्वितीयतलस्य वामदक्षिणेति भागद्वयेपि नीचैः श्रेणिः प्रवेशिकाया निम्नश्रेणयः द्वितीयचतुर्थ्यादयः। ततः उन्नततले (तृतीयतले) मुखभागे द्वारप्रवेशस्यादिभागे। वेदघोषेण पवित्रीकृता पुरःस्था द्वारदेश-मौलावग्रिमा चन्द्रशाला (शिरोगृहम्) यस्याः सा। अयं स्थानसंनिवेशो ग्रन्थकर्तुः पठनकालिकः। अधुना परिवर्तनं जातम्।

*** उपवनरूपकम् ***

**एके वरसौरभसनाथा अपि रूप-रङ्ग-**
**गीतगुणगाथाः पाटलेवेति प्रतीक्ष्यताम्**

रूपमात्रसाराः सौरभेऽन्ये कार्णिकारा इव
केचिद् गन्धभाराः केतका इव समीक्ष्यताम्।
वन्ध्याः पुनः केचिद् द्वयहीनाः, क्षुपाश्छात्रा इमे
वृद्धाः कण्टकेद्धा बत रक्षावृतिरीक्ष्यताम्
नानाविधपण्डितमहीजमञ्जुमालोच्चितं
श्रीसंस्कृतपाठशालोपवनमवेक्ष्यताम्॥१५॥

एके वृक्षाः (पण्डिताः) वरेण सौरभेण सनाथा युक्ताः सन्तः रूपेण सुन्दरवर्णेनापि च गीतगुणगाथाः प्रशंसनीयाः। अत एव ते 'पाटला' ('गुलाब') इव इति प्रतीक्ष्यताम्। पाटलपुष्पं यथा सौगन्ध्ययुक्तं तथैव रूपरङ्गाभ्यामपि प्रशंसनीयं भवति। इमे पण्डिता अपि- यथा विद्यायां प्रशस्ताः तथा रूप- रङ्गाभ्यामपि दर्शनीयाः। अत एव उपवने 'गुलाब' स्थानीयाः। अन्ये रूपमात्रसाराः सौरभे तु कर्णिकारा इव शून्यप्रायाः। केचिद् गन्धं प्रचुरसुगन्धं बिभ्रति तादृशाः। अर्थात् अतिविद्या-गुणयुक्ताः। शरीरं तु कण्टकाचितम्। अत एव ते केतका इव सन्तीति समीक्ष्यताम्। सौगन्ध्यादिगुणाः शरीरसौष्ठवं चेति द्वयेन हीनाः केचिद् वन्ध्या एव। छात्राः क्षुपाः स्वल्पशाखका लघुवृक्षाः 'पौदे'। वृद्धास्तु कण्टकाढ्या रक्षावृतिः 'बाड'। इदानीं तु वृद्धा आन्ध्यादियुक्ताः सन्तो विश्रमं गृहीतवन्तः। पण्डिता एव महीजाः भूरुहाः तेषां मञ्जुमालया (समूहेन) उच्चितम्॥१५॥

*** प्राक्तनो 'महाराजाकालेजः' ***

आगरानिविष्टविश्वविद्यालयपाठ्यक्रमा-
दाङ्गलगिरायामुच्चशिक्षा यत्र लक्ष्यते
पाठितः प्रशस्तप्रज्ञपण्डितैः प्रकामं यत्र
प्रचुरः परीक्ष्यगणः प्रत्यब्दं परीक्ष्यते।
पार्श्व एवं यस्य 'हाईस्कूल' मवलोक्यतेऽथ
मध्ये मञ्जुनाथ मध्यकालेजः समीक्ष्यते
का लेखेन सिद्धिः कार्यकाले किल गत्वा यदि
मानमहाराजाश्रितकालेजो न वीक्ष्यते॥१६॥

मध्ये 'हाईस्कूल' 'डिग्री कालेज'योर्मध्ये 'मध्यकालेजः' 'इन्टरमीडियट कालेज'। अध्यापनकार्यकाले गत्वा यदि कालेजो न वीक्ष्यते तर्हि इयता लेखेन का सिद्धिः, न कापीत्यर्थः। अयं पुरातनो वृत्तान्तः। नवीननिर्मितकालेजभवनस्य तु वर्णनमुद्यानवीथ्यां द्रष्टव्यम्॥१६॥

*** हिन्दीसाहित्यपाठशाला ***

सो.- यत्र जनो निशि नित्यमभ्यस्यति हिन्दीमिमाम्।
इह 'हिन्दीसाहित्यपाठशालया' प्रीयताम्॥१७॥

'इमाम्' पदेन वर्तमानकालिकप्रचलितहिन्दीसाहित्यस्य निर्देशः। तथा च हिन्दीसाहित्ययसम्मेलनानुसारी पाठयक्रमः सूच्यते ॥१७॥

जहाँ पढ़ने वाले रात्रि को नित्य हिन्दीसाहित्य का अभ्यास करते हैं। इस 'हिन्दी साहित्य पाठशाला' को देखकर प्रसन्न होइये ॥१७॥

## * 'साँगानेरी चौपड़' *

## * कवित्त *

**कुत्रचित्कुसुममाल्यमण्डितमनोज्ञ-तनुः**
**कुत्रचित्सुवर्ण-रूप्य-भूषितवपुस्तटी**
**कुत्रचित्कनकतन्तुसन्ततवसनधरा**
**कुत्रचिल्लहरिरङ्गरञ्जितलसत्पटी।**
**मञ्जुनाथ नृत्यन्तीव सायं वाद्यतालवाशात्**
**लोककौतुकार्थं कक्षनिहितमहाघटी**
**निपुणनटीव लोकरञ्जनपटीयसीयं**
**शोभतेऽद्य साँगानेररुचिरचतुष्पटी ॥१८॥**

नटी कुत्रचित् कस्मिन्नपि प्रसङ्गे पुष्पमाल्यभूषितशरीरा भवति। इयं चतुष्पटी तु कुत्रचित् कस्मिन्नपि पार्श्वे मालाकारद्वारा विक्रीयमाणाभिः पुष्पमालिकाभिः शोभितशरीरा। एवं सर्वैर्विशेषणैः नटी- चतुष्पटयोः विविधरूपधारणसाम्यं बोध्यम्। नटी सुवर्ण-रजताभूषणैर्भूषितशरीरा, इयमपि विक्रीयमाणैः सुवर्णरजतैर्भूषितशरीरा। कनकतन्तवः : 'कलाबत्तू' (गोटा किनारी वा) तत्संततवसनधरा, उभयत्र साम्यम्। लहरिरङ्गेण रञ्जितः (लहरिया) लसन्त्यः पट्यो यस्याः सा नटी। ईदृश्यः पट्यः (विक्रीयमाणाः) यस्यां सा चतुष्पटी। पूर्वं सायंकाले राजनिदेशतो वाद्यं वाद्यते स्म। तत्तालक्रमानुसारं नृत्यन्तीव, उभयत्र साम्यम्। लोकानां कौतुकाय कक्षे घटीं निधाय नटी रज्जूपरि नृत्यति। चतुष्पट्यपि, कक्षे एकस्मिन् पार्श्वे निहिताः (विक्रयार्थम्) ताम्रपित्तलादेर्महाघट्यो यस्यामीदृशी ॥१८॥

## * रत्नवणिग्वीथी 'जौहरी बाजार' *

**अभ्रंलिहमौलिमञ्जुराजत्सौधसाधुतमा**
**पाटलसुरङ्गसमारक्तवेश्मवीथीयम्**
**मण्डितमहार्घ्यनवमण्डपिकाऽऽसन्दिगतैः**
**श्रेष्ठिजनैस्तुन्दिलैर्निरुद्धपण्यवीथीयम्।**
**मञ्जुनाथ चामीकरपुञ्जपुरुपिञ्जरिता**
**मञ्जुलमृगाक्षीरुद्धवातायनवीथीयम्**

**रत्नरुचिरोचितचिरत्नधनिवैकटिका**

**यत्नशतलभ्या रत्नघण्टापथवीथीयम् ॥१९ ॥**

अभ्रंलिहमौलयः (गगनचुम्बिशिखराः), मञ्जु यथा स्यात्तथा राजन्तो ये सौधाः तैः साधुतमा शोभनतमा। पाटलरङ्गेण रक्ता वेश्मपंक्तिर्यस्याः सा। मण्डिताः महार्घ्याश्च याः नवमण्डपिकाः (साइवानयुक्त तख्ते)। तासु आसन्दितगतैः ('गद्दी' स्थितैः)। सुवर्णराशिना पुरु (प्रचुरं यथा स्यात्तथा) पिञ्जरिता पीतवर्णीकृता। रत्नकान्त्या रोचिताः (शोभिताः) चिरत्नधनिनः (चिरकालाद्धनिकाः) वैकटिकाः (रत्नविक्रेतारः) यस्यां सा। रत्नघण्टापथो रत्नव्यापारस्य राजमार्गः, तस्य वीथी ॥१९ ॥

*** रत्नवीथ्याः स्थानसंनिवेशः ***

**उत्तरतो वस्त्रविक्रयापणपिनद्धा, ततो**

**दर्पणादिवस्तुव्यवसायिपङ्क्तिपथ्येयम्**

**मुक्तामणिमाणिक्यादियुक्ता, स्वर्ण-दुर्वर्णादि-**

**'गोटक'विपृक्ता द्रव्यदानाऽऽदानतथ्येयम्।**

**मञ्जुनाथ द्विदलादिधान्यधामधन्या, फल-**

**शाक-शालंमन्या वरवाहनविमथ्येयम्**

**याचन्नैकनैकटिकावेष्टितविपणिपथा**

**भाति भूरि वैकटिकाऽऽकीर्णराजरथ्येयम् ॥२० ॥**

उत्तरतः उत्तरदिशमारभ्य (चतुष्पटीतः सांगानेरगोपुरान्तः) स्थानसंनिवेश-पूर्वं वस्त्रविक्रयापणैः (बजाज) पिनद्धा संबद्धा। दर्पणादिवस्तुव्यवसायिनः (स्टेशनरी सामान के सौदागर) तेषां पंक्त्या पथ्या शोभिता। ततोग्रे मुक्तादिरत्नव्यापारिभिर्युक्ता। (तत्संमुखस्थे वामभागे च) स्वर्ण-रजतादिगोटकैः (गोटा किनारी) संयुक्ता। 'दुर्वर्ण रजतं रूप्य'मित्यमरः। ततः, धनस्य दानादानविषये तथ्या सत्या, अर्थात् 'हुंडी-पत्री' व्यापारपरैः 'साहूकारै'र्युक्ता। ततो द्विदल-('दाल') आदिधान्यानां धाम ('दाल की तथा नाज की मंडी') तेन धन्या। ततः फलानां शाकानां च शालाम् (गृहम्) आत्मानं मन्यते तादृशी, अर्थात् 'सब्जी मण्डी' 'फ्रूट मार्केट' युक्ता। शालां मन्यते शालंमन्या, 'खित्यनव्ययस्येति ह्रस्वः'। श्रेष्ठैर्वाहनैर्विमथ्या अवगाह्या। याचद्भिः अनेकैः नैकटिकैः (भिक्षुभिः) आवेष्टितो विपणिपथो यस्याः। राजरथ्या राजमार्गः ॥२० ॥

*** धन्वन्तर्यौषधालयः ***

**रोगिणो निरीक्ष्यन्तेऽत्र वैद्यैः शास्त्रमर्मानुगै-**

**र्भैषजनिर्माणमङ्गनेऽस्मिन् सुपरीक्ष्यताम्**

**चतुरचिकित्सकैश्चिकित्सितोऽनुशास्त्रकम-**

**मातुरगणोयमातुरालये निरीक्ष्यताम्।**

स्थायिधनराशिना स्थिरीकृतः प्रजानां हितो

लक्ष्मीरामस्वामियशःसंमितः समीक्ष्यताम्

रोगसरिन्मग्ने जने तन्वन् तरितथ्यतुलां

धन्वन्तरिभव्यभेषजालयोऽयमीक्ष्यताम् ॥२१ ॥

अस्मिन्नङ्गने इति चित्रादिषु स्थाननिर्देशार्थम्। अनुशास्त्रक्रमम् आयुर्वेदशास्त्र-क्रमानुसारम्। यशःसंमितः यशःसमानः। तरेः नौकायाः तथ्यां सत्यां तुलनां प्रकटयन्, रुग्णजनान् रोगनद्या उत्तारयन्नित्यर्थः ॥२१ ॥

* त्रिपोलियाराजमार्गः *

[ त्रिपोलियाभिमुखतः उभयपार्श्वयोः स्थानसंनिवेशः ]

**वामतो विशालराजमन्दुरानुकूलीकृता**

**पार्श्वे स्वर्गशूली धराधीशाऽधर्षणीयासौ**

**दक्षिणतो देवमन्दिराणां पुण्यपङ्क्तिरियं**

**श्रेणी सुन्दराणामापणानां स्पर्शनीयासौ।**

**मञ्जुनाथ तलिनत्रिपोलियाभिमुखमेत्य**

**मार्गाणां मनोज्ञता महत्ता मर्शनीयासौ**

**वैभवभरेण कृतराजमनःक्षोभा सखे**

**जयपुरराजपथशोभा दर्शनीयासौ ॥२१ ( क ) ॥**

वामभागे राजमन्दुरा राज्ञोऽश्वशाला 'आतिश'। तस्याः पार्श्वे धराधीशैरपि अधर्षणीया अनभिभवनीया स्वर्गशूली 'ईसर लाट'। इयं हि जयनगरप्रतिष्ठापकस्य श्रीजयसिंहमहाराजस्य तनयेन श्रीईश्वरीसिंहदेवेन निर्मापिता। अस्या विषये बह्व्यः किंवदन्त्यो विश्रुताः। त्रिपोलियागोपुरस्य दक्षिणपार्श्वे नीलमणि-व्रजराजविहार्यादिमन्दिराणां पक्तिः। तलिनं विरलं सुन्दरमिति यावत्। मर्शनीया विचारणीया ॥२१ ॥(क)

*** स्वर्गशूली ***

**तुङ्गतया तारापथमेव परिरभ्य स्थिता**

**काञ्चनकलशचारुचूडा बत राजते**

**मध्ये प्रतिखण्डमेव लोहितदृषद्भिः कृता**

**शिल्पभृता कट्टहरश्रेणी भूरि भासते।**

मञ्जुनाथ देवैः सह मन्त्रणार्थमीश्वरेण
कारितेव, यत्र रविरुचयोऽप्युदासते
मेरुशिखराणामपि धूलीकृतदर्पभरा
सेयं स्वर्गशूली स्वर्गशूलीव प्रकाशते॥२२॥

काञ्चनकलशयुक्ता चारुचूड़ा (मौलिदेशः) यस्याः सा। लोहितपाषाणैर्निर्मिता, शिल्पेन कारुकार्येण पूरिता, कट्टहरश्रेणिः 'कटहरा' पंक्ति प्रतिखण्डं प्रत्येकतले भासते। ईश्वरः सृष्टेः पालनविषये देवैः सह यथा मन्त्रणां करोति, तथा ईश्वरेण ईश्वरसिंहमहाराजेन स्वर्गीयाणां वृत्तान्तं परिज्ञातुं देवैः सह मन्त्रणायै इयं कारितेव। इयदुन्नता यत्र गमने सूर्यकिरणा अपि उदासीनास्तटस्था भवन्ति। धूलीकृतः तुच्छीकृतः उन्नततातायाः गर्वभराय या सा। स्वर्गस्य कृते शूलीव। इयदुन्नता यदस्याः कलशकोटिः स्वर्गं स्पृशति। ततश्च एतस्या उपरि स्वर्गः शूलीप्रोत इव दृश्यत इत्यर्थः। अथवा स्वर्गा स्वर्गता (स्वरुपपदाद् गमेर्डः) स्वर्गपर्यन्तं शूलीव शूलाकारेव स्थिता, अत्युन्नतेति यावत्। किं वा- अद्यावधि औन्नत्ये सौन्दर्ये च स्वर्ग उपमानमासीत्, किन्तु अनया तस्य स गुणोऽपहृतः। अत एव स्वर्गस्य हृदये शूलीव व्यथयतीत्यर्थः॥२२॥

### * हनुमद्विशिखा *

**सवैया**

कुहचिद्बहुमोदक-मोहनथालमिलज्जलवल्लिचयाभिमुखा
कुहचिच्च चतुर्गुणिलड्डुभरैः कृतलोकचतुर्गुणिताक्षिसुखा।
बहुगन्धभरैः परितो भरिता सततोत्थितधूममिलत्परिखा
शतचुल्लिचये ज्वलदग्निशिखा द्विशिखानुगता हनुमद्विशिखा॥

मोदक-मोहनथालाभ्यां मिलन् यो जलवल्लिचयः 'जलेबि'समूहः सः अभिमुखो यस्याम्। अथवा तस्याभिमुखा। मोदकादिव्यञ्जनैर्युक्तेत्यर्थः। चतुर्गुणिलड्डुः चौगुनीमोदकः। कृतं लोकानाम् चतुर्गुणितम् (अत्यधिकम्) अक्षिसुखं यया। व्यञ्जनानां बहुभिः सुगन्धभरैर्भरिता। रथ्यानालिकासु क्लिद्यतः अन्नादेर्विजातीयगन्धोपि 'बहुगन्धभरैः' पदेन सूच्यते। सततोत्थितो यो धूमः तेन मिलन्ती सम्बध्यमाना परिखा परिधिर्यस्याः, निरन्तरधूमायित-पर्यन्तभागेत्यर्थः। शतम् अनेका याः चुल्लयः 'चूल्हे' 'भट्टी' तासां समूहे ज्वलन्त्यः अग्निशिखाः यस्यां सा। द्वयोः शिखयोः (भागयोः) अनुगता विभक्ता, पार्श्वद्वयेपि कान्दविकानामापणैर्युक्तेति भावः॥२३॥

### * विशालविशिखा "चौड़ा रास्ता" *

**कवित्त**

त्रितलत्रिपोलियापुरस्तात्पुस्तकालयतः
परमप्रशस्ता 'बैङ्क'शाला सुप्रकाशते

अग्रे चास्य दामोदरमन्दिराग्रभागे भव्य-

विश्वेश्वर-शिखरबन्ध-मन्दिराण्यवासते।

मध्ये मञ्जुनाथपूर्वजानां कवितल्लजानां

सेयं पट्टवीथी भट्टवीथी भूरि भासते

पर्यन्ते करालसिंहपञ्जरपरीता, शाल-

शोभिता विशाल-वरविशिखा विराजते ॥२४॥

त्रितलस्य त्रिपोलियागोपुरस्य पुरस्तात् सम्मुखभागे, पुस्तकालयतः पुस्तकालये। सार्वविभक्तिकस्तसिः। बैङ्कशाला 'इम्पीरियल बैङ्क'। दामोदरमन्दिरस्य अग्रभागे, अर्थात् इतोऽप्यग्रे दक्षिणे। अवासते अवतिष्ठन्ते। कविश्रेष्ठानां पट्टवीथी-प्रधानवीथी, पट्टशिष्य इतिवत्। दानपट्टे लिखिता वीथी वा। शालैर्वृक्षैः शोभिता। विशाला वरा च विशिखा। कराल-शाल-विशालेति प्रासः ॥२४॥

### * अजमेरी-गणगौरीरथ्ये *

[ ब्रह्मपुरीमार्गादारभ्य अजमेरीगोपुरपर्यन्तः स्थानसंनिवेशः ]

ब्रह्मपुरीमार्गादुपयाहि गणगौरीद्वारि

प्राप्तं यद्धि नूनं गणगौरीगुणगेयताम्

चतुर्दिक् चतुर्भिर्देवमन्दिरैरुपेताऽन्तरे

वाटिकासमेताऽम्बरचतुष्पटिकेयताम्।

कोणे कोट्टपालीं शिक्ष्यमाणां बालिकालीमेक्ष्य

चित्रकलाशाली शिल्पविद्यालयोऽप्येयतां

वायुसेवनार्थं भ्रमेरीप्ससि सुखं चेत्सखे

नूनमजमेरीगुण्यगोपुरमुपेयताम् ॥२५॥

यत् गणगौरीद्वारम् ('गनगौरी दरवाजा') गणगौर्याः गुणेन गेयतां ख्यातिं प्राप्तम्, गणगौर्याः मेलके श्रीगणगौर्यास्तत्र गमनेन तस्य द्वारस्य तन्नाम्ना प्रसिद्धिरभूदित्याशयः। चतुर्दिक् चतसृषु दिक्षु। चतुर्भिर्देवमन्दिरैः सीताराम-रूपचतुर्भुजादीनां मन्दिरैः उपेता युक्ता। अन्तरे मध्यभागे च, वाटिकासमेता। सम्प्रति नवाबमहोदयस्य मन्त्रित्वे पूर्वतनकुण्डवेदिकायां पुष्पवृक्षा दूर्वापट्टिकाश्च रोपिता इति सूच्यते। अम्बरचतुष्पटिका "आँबेरी चौपड़" ईयताम् प्राप्यताम्। कोट्टपाली "कोतवाली"। शिक्ष्यमाणां अध्याप्यमानां बालिकापङ्क्तिम्-आ-ईक्ष्य। बालिकाविद्यालयं 'सेंट्रल गर्ल्स स्कूल' दृष्ट्वेत्यर्थः। शिल्पविद्यालयः 'स्कूल आफ् आटर्स्' अपि-आ-ईयताम् आगम्यताम् वायुसेवनार्थम् भ्रमेः भ्रमणस्य सुखं चेत् ईप्ससि वाञ्छसि। गुण्यं गुणयुक्तम्। उपेयताम् उपगम्यताम्। वायुसेवनाय अजमेरीगोपुराद् बहिः रामनिवासारामे गम्यतामित्याशयः। 'भ्रमेरी' 'अजमेरी'ति प्रासः ॥२५॥

## * चन्द्रपोलराजमार्गः *

[ चतुष्पटीमारभ्य चन्द्रपोलगोपुरपर्यन्तः स्थानसंनिवेशः ]

अम्बरचतुष्पटीमतीत्य पश्चिमायां दिशि
दीनानाथमन्दिरमवेक्ष्य मोदमानय
दृष्ट्वा तिलकादिमन्दिराणि, राजमातुरिदं
रामचन्द्रमन्दिरममन्दमवलोकय।
मञ्जुनाथ 'चन्द्रपोल'गोपुरसमीपे सखे
सिद्धपीठदर्शनसुखेन सुकृतं जय
अविरतधूपधूमसौरभसुभगतमं
मारुतिमनोज्ञमहामन्दिरमुदञ्चय ॥२६ ॥

'तिलकमन्दिरं' हि रामानुजवैष्णवसंप्रदायस्यैकं मन्दिरम्। अत्र हि भित्तौ महाविशालं रामानुजसंप्रदायपरिगृहीतं तिलकं लिखितमिति तिलकमन्दिरनाम्ना व्यपदेशो जातः। पूर्वं राजमातुः, इदानीं राज्ञः पितामह्याः (दादाजी साहिबा श्रीधीरावतजी-निर्मापितं) रामचन्द्रमन्दिरम्। सुकृतं पुण्यं जय वशीकुरु अर्जयेत्यर्थः। धूपधूमस्य सौरभेण सुभगतमं महत् मन्दिरम् उपगच्छ। अस्मिन् सिद्धपीठे अविरतं रामायणपाठ-जपादिकं शतशो ब्राह्मणाः कुर्वन्ति। सर्वदैवेदं मन्दिरं पाठध्वनिना मुखरितमेव प्राप्यते। मनोरथार्थिनां जनानां प्रायः समूह एव विलोक्यते। सेयं सिद्धमूर्तिः कदा केन स्थापितेति इतिहासमार्गतो न निश्चीयते। जनेषु प्रसिद्धं यत्'आम्बेरस्य शिलामयी, जयपुरस्यायं हनूमान्, सांगानेरग्रामस्य च 'साँगादेवः' प्राक्तनेन मानसिंहमहाराजेन आनीताः' इति। यद्यपि तिसृणामेतासां देवतानामेककालेनाऽऽनयनम् ऐतिहासिका नानुमोदन्ते-तथापि दोहापद्यमिदं बहोः कालाच्छ्रुणुमः --

'साँगानेर को साँगो बाबो जयपुर को हनुमान।
आम्बेर की सिल्लादेबी ल्यायो राजा मान॥'

## * पुराणवसतिः 'पुरानी बसती' *

बालानन्दमन्दिरसमीपाद्यज्ञशालामाप्य
सिंहदुर्गहर्म्यमाला प्राङ् निर्वर्णनीयासौ
तदनु च गोपीनाथदर्शनं विधाय सखे
नानाविधकौतुकभूर्भूयोऽभ्यर्णनीयासौ।
प्रवरपुरोहितानां भूतिर्भविता ते स्फुटं
मञ्जुनाथकविता गृहेऽस्याकर्णनीयासौ

**काममप्रमाणदृश्यपूरितपुराणस्थला**
**संप्रति पुराणवसतिर्मे वर्णनीयाऽसौ ॥२७॥**

सिंहदुर्गस्य नाहरगढस्य हर्म्यमाला प्राक् पूर्वं निर्वर्णनीया दृश्या। न चेद्राजाज्ञा तर्हि यज्ञशालासकाशाद् दूरत एव विलोक्या। नानाविधकौतुकानां भूः स्थानम् 'बारह भाइयों का अखाडा' अभ्यर्णनीया समीपगता करणीया। अभ्यर्णं करोति अभ्यर्णयति ततः अनीयर्। प्रवरपुरोहिताः 'बड़े पुरोहित' रामप्रतापजीप्रभृतयः। तेषां वैभवम् महाविशालं भवनम् आरामादि च ते स्फुटं भविता भविष्यति लुट्।'नागरपाड़ा' स्थाने मञ्जुनाथगृहे अस्य कविता श्रवणीया। अपरिमाणैः दृश्यैः पूरितानि प्राचीनस्थलानि यस्याः सा। प्राचीनैतिहासिकस्थानयुक्तेत्यर्थः। प्रमाण-पुराण-पुराणेति प्रासः॥२७॥

*'नाहरगढ़'*

**आरोहः सुदीर्घो यस्य वाजिरथगम्यो भाति**
**रम्योद्यानशाली यस्य सौधो रमयेत्कविम्**
**सोपानावबद्धो यतो ज्यायान् जलटङ्को भाति**
**वरणविटङ्को यस्य चूर्णयेत्पतत्पविम्।**
**मञ्जुनाथ मीनाजातिरक्ष्यो धनकोषो महान्**
**तुङ्गतया यत्र श्रमदोषो भजते रविम्**
**अन्यदेशदुर्गद्युतिमाहरसि किं वा वृथा**
**नाहरगढ़स्य समुदाहर दृढच्छविम्॥२८॥**

आरोहः (घाटी, चढाई)। इयदुन्नतो दीर्घोपि आरोहे तादृशः सुबद्धो, विशालः, चक्रभ्रमणेन न्यूनीकृतारोहश्च मार्गोस्ति यस्मिन् राज्ञो वाजिरथः (बग्गी) सुखेन गच्छेदित्यर्थः। यस्य (दुर्गस्य) राजनिवासोचितः प्रासादः समन्तात् मनोहरेणोपवनेन वेष्टितः, यस्य शोभया कविरपि मनसि रमते इति भावः। जलटङ्कः जलाशयः 'टाँका'। यस्य वरणविटङ्कः प्राकारशिखरं तथा दृढं यथा तदुपरि यदि शत्रुप्रेरितः पविः (वज्रम्) अपि पतेत्तर्हि सोयं विटङ्कस्तमपि चूर्णयेत् न तु स्वयं भिद्येतेत्यर्थः। उच्चतायाः कारणात् तदुपरि निजकिरणान् प्रेषयन् सूर्योपि श्रान्तो भवतीति श्रमदोषो रविं भजते। आहरसि संगृह्णासि। यत्र यत्र दुर्गाणां दृढतायाः प्रसङ्गो भवेत्तत्र तत्र नाहरगढस्य दृढच्छविम् उदाहर उदाहरणरूपेण उपस्थापयेत्याशयः।

## संक्षिप्तेतिवृत्तम्

इदं दुर्गं जयपुरप्रतिष्ठापकेन सवाईश्रीजयसिंहमहाराजेन निर्मापितम्। अस्मिन् स्थाने नाहरसिंहनामकस्य 'भोमिया'ख्यदेवयोनिविशेषस्य पूर्वं निवासोऽभवत्। जयपुरराजवंशे नाहरसिंहनामा कश्चन पूर्वजः समभवत् यो हि देहत्यागोत्तरं दिव्ययोनिः 'भौमिया' अभवत्। स हि आत्मनो निवासस्थाने दुर्गनिर्माणात्कुपितः सन् तत्कार्ये विघ्नं चकार। सम्मिलिताः सर्वेपि स्थपतयः समग्रं दिनं यावत् यां दुर्गभित्तिं निरमान् रात्रेरनन्तरं प्रातरेव सा चूर्णीभूता प्राप्यत। एतत्प्रबन्धाय नानोपायान् कृत्वापि विफलीभूतः श्रीजयसिंहमहाराजो महामान्त्रिकं श्रीपौण्डरीक-

महाभागं प्रार्थयत्। एष हि मन्त्रबलेन तं भूमिस्वामिनं संतोष्य निजवशे च कृत्वा तत्स्थानं त्याजयामास। प्रतिज्ञानुसारं नाहरसिंहभूस्वामिनो मन्दिरं घाटोद्यानस्य मार्गे निर्मापितम्, तत्र च नैवेद्यस्य ज्योतिषः ('जोत') च प्रबन्धो राजद्वाराऽक्रियत, योद्यापि प्रचलति। एतस्य दुर्गस्य नाम 'सुदर्शनगढम्' इति। एतस्माद्दुर्गादारभ्य 'आम्बेर'दुर्गपर्य्यन्तं पर्वतमौलौ वाजिरथगम्योऽनुद्घातश्च विशालो मार्गोऽस्ति।

अस्मिन् दुर्गे यानि राजहर्म्याणि सन्ति तेषां वृद्धिः परिष्कारश्च श्रीरामसिंहमहाराजेन (अर्वाचीनेन) कृतः। दुर्गस्य मध्यतो महान् जलटङ्कोस्ति यस्य जलेन तद्दुर्गवासिनो 'मीना' गणा जीवन्ति, राजहर्म्यस्य विशालमुपवनं च सिच्यते। दुर्गस्योपरि मीनाजातेरेव निवासोस्ति। एषैव जातिरेतद्दुर्गस्य रक्षणेऽअधिकृता। दुर्गमध्ये यः किल महान् धनकोषोस्ति तस्यापि रक्षायै इयमेव सर्वाधिकारिणी। उच्चपदाधिकारी राजकर्मचार्यपि विशेषावश्यकतां विना अस्मिन्दुर्गे गन्तुमनुमतिं न लभते। द्वारसमीपे भैरवस्यैकं स्थानमस्ति, रविवारे नैवेद्यसमर्पणाय तद्दर्शनाय च गमनमात्रस्याज्ञास्ति। मीनाजातेर्गृहे कश्चिदुत्सवो ब्राह्मणभोजनादिप्रसङ्ग-श्चद्भवेत्तर्हि दुर्गाध्यक्षस्याज्ञां प्राप्य गृहस्वामी निमन्त्रितान् दुर्गाभ्यन्तरे नयति।

*** ब्रह्मपुरी ***

**दुर्गमगणेशदुर्गसीमन्ताभिमण्डिता या**
**दाक्षिणात्यभूसुरनिवासैरभिरोच्यासौ**
**उच्छृङ्खलं खेलतां च रङ्गस्थलगायकानां**
**होलाभिनये विशङ्कगीतिर्न विमोच्यासौ।**
**यत्राभवन् रत्नाकर-पौण्डरीकमुख्याः पुरा**
**जीर्णगृहोद्देशैस्तदभिख्याऽधुनाऽऽलोच्यासौ**
**पूर्वपुरुषाणां यशोनिर्झरीप्रकाशकरी**
**ब्रह्मपुरी सम्प्रति पुराणपुरी प्रोच्यासौ ॥२९॥**

दुर्गमं यत् गणेशदुर्गम् 'गणेशगढ़', तदेव सीमन्तः केशपाशस्तेन अभिमण्डिता, गणेशदुर्गस्याधस्तादुपनिविष्टेत्यर्थः। रङ्गस्थलम् 'अखाड़ा' तद्गायकानाम्। विशङ्का निर्मर्यादा। ब्रह्मपुर्याम् द्वे गीतिरङ्गस्थले 'छोटा अखाड़ा' 'बड़ा अखाड़ा' स्तः। होलिकोपरि तत्र सगीतिकोऽभिनयो भवति, यस्मिन् अश्लीलतास्पर्शिनी उद्दामशृङ्गारगीतिर्व्यङ्ग्यगीतयश्च ('फैल') गीयन्ते। सा गीतिरपि तत्स्थानपरिचयार्थं न विमोच्या। महाराष्ट्रब्राह्मणो रत्नाकरपौण्डरीकः श्रीजयसिंहमहाराजस्य (जयपुरनिर्मातुः) समयेऽभवत्। एष महाविद्वान् मान्त्रिकः सिद्धपुरुषाश्चासीत्। महाराजेन योऽश्वमेधयज्ञः कृतोऽभूत्तस्मिन् दाक्षिणात्यानामेव प्राधान्यमासीत्। बहवो वेदपारगा दक्षिणदेशतः ससम्मानमाहूय यज्ञे निमन्त्रिताः। पौण्डरीकरत्नाकरोऽश्वमेधयज्ञे सर्वप्रमुखोऽभवत्। अनेन जयसिंहमहाराजाय निजसिद्धताया भूयान्परिचयो दत्तः। एष महाराजोप्यमुं गुरुरिति गौरवेण सम्मानयामास। पौण्डरीकेण महाराजस्य यशःप्रख्यातये 'जयसिंहकल्पद्रुम' नामा व्रततिथिनिर्णयात्मको महान् धर्मशास्त्रग्रन्थो निर्मितः। यदा हि महाराजेन

जयपुरनगरं प्रतिष्ठापितं तदा ब्रह्मपुर्यां सर्वप्रथमं श्रीरत्नाकरपौण्डरीकोऽधिष्ठापितो भूयसी च विभूतिः प्रत्ता। पौण्डरीकस्य प्राचीनगृह-मतिविशालं सुन्दरोपवनसहितं राजमल्लतडागस्योपर्यद्यापि द्रष्टुं शक्यते यद्धि सम्प्रति जीर्णतां गतम्। किन्तु अस्मिन् यत्किल स्थापत्यकार्यम्, यादृशी च विशालता, यच्च वैभवमस्ति तद्दर्शनेन तत्प्रभावो राजोपमितविभूतिश्च सुस्पष्टमनुमातुं शक्यते। श्रूयते- आम्बेरस्य जयगढदुर्गे रत्नाकरसागराख्यो जलवन्धः श्रीरत्नाकरपौण्डरीकस्मारक एवास्तीति।

जयसिंहमहाराजस्य परमादरभाजनं सम्राड्जगन्नाथनामको महाराष्ट्र-ब्राह्मणोपि पूर्वं ब्रह्मपुर्यामेव प्रतिष्ठापितः। अयमपि महामान्त्रिको विद्वान् ज्यौतिषशास्त्रेऽद्वितीयपण्डितोऽभूत्। जयसिंहमहाराजस्य समये सोऽयं रेखागणितस्यैकं ग्रन्थं निर्ममौ। एष 'अरवी' भाषाया अपि परमविद्वानासीत्। एष ग्रन्थोऽरबीभाषात एवानूदित इति ऐतिहासिका वदन्ति। एवमेव अस्य महाभागस्य 'सिद्धान्तकौस्तुभ-सम्राट्सिद्धान्त' नामकौ ज्यौतिषग्रन्थावपि प्रसिद्धावभूताम्। जयपुरराजकीयज्यौतिषयन्त्रशालायां 'सम्राड्यन्त्र' नामकं समयसूचकं यन्त्रमनेनैवाविष्कृतमिति बहूनां कथनम्। अस्तु, एवंविधा असाधारणपुरुषाः पूर्वं ब्रह्मपुर्यां न्यवसन् किन्तु अधुना तदभिख्या तत्कीर्तिः 'अभिख्या नाम-शोभयोः' जीर्णगृहाणामुद्देशैः निवेशैः आलोच्या अनुमेया। पुराणा पुरी, प्रत्यहं तद्गृहाणां निवासिनां च क्षीयमाणत्वात्।

## संक्षिप्तेतिवृत्तम्

जयसिंहमहाराजेन यदा जयपुरनगरं प्रतिष्ठापितं तदा ये ये ब्राह्मणश्रेष्ठा अश्वमेधार्थ-माहूतास्तेषु ये सुप्रसिद्धा गुणिनोऽभवन् महाराजस्यास्य च पूजनीयाः समभवन् तान् सर्वान् ससमादरं निवास्य तदुपजीविनस्तत्सार्थीयांश्च पुरुषानपि तत्रैव निवेश्य ब्रह्मपुरीनाम्ना सेयं वसतिः पृथगेव निर्मिता।

जयसिंहमहाराजेन संमानितैरस्मत्पूर्वजैः श्रीकृष्णभट्टकविकलानिधिभिर्जयसिंहतनयस्य श्रीईश्वरीसिंहमहाराजस्य यशोवर्णनार्थं निर्मिते 'ईश्वरविलास' महाकाव्ये जयसिंह-महाराजेन तत्समक्षं प्रतिष्ठापिताया ब्रह्मपुर्या वर्णनमुपलभ्यते। आसीत्तस्मिन्नपि समये ब्रह्मपुर्या एष एव स्थानसन्निवेशः। अभूत्तदापि तस्याः शिखरदेशे 'गणेशगढ' दुर्गम्। ब्रह्मपुर्या ये ये ब्राह्मणा निवासिता अभूवंस्ते सर्वेपि कयाचिद्विद्यया गुणैश्च प्रभावशालिनः, अत एव राजसंमानिता आसन्। ऐतेषु सर्वतोधिका दाक्षिणात्यास्ततोऽवशिष्टा गुर्जरा अभवन् सर्वेप्येते वैदिका आहिताग्न-यश्चासन्। प्रतिसवनमेतेषां भवनेषु अग्निहोत्राण्यभवन्। यथा हि तद्वर्णनम् --

**'येन ब्रह्मपुरी कृताऽतिधवलैः कैलासशैलोपमै-**
**र्विप्राणां भवनैः सदा समुदयत्सम्पद्विलासाञ्चितैः।**
**प्रत्यागारमुरुप्रकारहवनैर्यत्राग्निहोत्राण्यभु-**
**र्लीलादत्तचतुःपुमर्थपटलीजातादराणि स्फुटम्।**
**श्रियं धत्ते यस्यामधिगिरिशिरः श्रीगणपते-**
**र्गृहं दूराद्दृश्यं सुखचितमणीभाभिररुणम्।**

**ध्रुवं तस्या एव क्षितिपतिरमण्याः सुरुचिरे**
**ललाटे सिन्दूरैः कलितमिव सौभाग्यतिलकम्॥'**

ब्रह्मपुर्यां यथा स्मार्तानां वैदिकानां च निवासोऽभवत्तथैव सेयं वसतिर्वैष्णवानामपि वैभवैः सुसमृद्धाऽभवत्। एतस्या उत्तरपश्चिमदिशि वैष्णवब्राह्मणानां राजसंमानितानां गोस्वामिनां च निवासोऽभवत् शुद्धाद्वैतसंप्रदायिवैष्णवानां पूज्येषु सप्तसु स्वरूपेष्वन्यतमः श्रीगोकुलनाथ-देवोप्यत्रातिष्ठत्। यन्निवाससाक्षि 'गोकुलद्वारा' 'गोकुलनाथवापिका' चेति स्थानद्वयमद्याप्यवतिष्ठते। यत्किञ्चिदस्तु, इयं वसतिः कस्मिन्नपि समयेऽतिसमृद्धा गहना चाभूदिति नास्ति संदेहः। एतस्यां हि राजसंमानितानां ब्राह्मणानां शिबिका (पालकी)- संमानवाहीनि सप्त स्थानान्यासन्निति ब्रह्मपुरीस्था वृद्धा अद्यापि कथयन्ति।

* * *

## युरोपयुद्धे देशपरिस्थितिः

**हस्तगतमूल्येनाऽपि नोपलब्धमन्नं जनैः**
**परितो विपन्नं दीनवृन्दं क्षुधयाऽऽहतम्**
**द्रव्यशालिनोपि मिष्टमाश्नन् शासकाज्ञयैव**
**स्निग्धं वस्तु, दुग्धं बत लभ्यं भाग्यसंगतम्।**
**वशमुपनीता हन्त नित्यनवाऽऽतङ्कैः प्रजा**
**रोगाक्रान्तरङ्कैरात्मजीवनं समापितम्**
**दुर्भिक्षप्रकोपतोपि घोरतराऽऽटोपवहं**
**लोपमेव कुर्यात्किं युरोपयुद्धमुद्धतम्॥**

प्रचुरधान्योत्पत्तावपि त्रिचतुःप्रस्थमितमन्नमेकमुद्राया अलभ्यत। कलकत्तादिस्थानेषु तु ततोपि दुर्लभम्। अतएव परःशता दीनजनाः प्रत्यहं नगरस्य स्थानस्थानेषु मृताः प्राप्यन्त नगररक्षाप्रबन्धधिकृतैः। मिष्टमाश्नन् शर्करागुडादिनिर्मितं भोज्यमभुञ्जत, यतोहि सर्वमिदं वस्तु राजनियमायत्तम् (कंट्रोल)। स्निग्धं घृत-तैल-पाचितं पक्वान्नम् यतो हि घृतम् एकमुद्रायाः पाद-सार्द्धपाद ('पाव' 'डेढ़पाव') मितमलभ्यत। तैलं चतुर्दश 'छटांक' मितम्। यत्र हि 'दुग्धस्य नद्यः' प्रावहन् तत्र तत् एकमुद्रायाः द्विप्रस्थाऽऽसन्नमासाद्यत। भाग्यसंगतं भाग्यलिखितम्, यदि भाग्ये लिखितं स्यात्तदैव तावन्महर्घं तत् प्राप्येतेत्याशयः। वशमुप.--अन्नस्य भयानकमहर्घता वस्त्राणां दुष्प्राप्यता, देशे भृति ('मजदूरी') कार्याणां राजतन्त्रनिषिद्धतया जीविकाऽप्राप्तिः, इत्यादिनानाविधैर्भयैर्देशजना आत्मवशेऽक्रियन्त येन बलात्ते युद्धसेनायां नामलेखपूर्वं प्राविशन्। रोगाऽक्रान्तै रङ्कैर्दीनैः। तस्मिन्नेव काले देशे स्थाने-स्थाने 'मलेरिया'प्रभृतयो रोगाः प्रावर्तन्त येन बहवो जना निजजीवितमेव विजहुः। आटोपः आतङ्कः आडम्बरं वा। युरोपयुद्धं जर्मनैः प्रवर्तितं ख्रिष्टीय १९४०-४४ आदिवत्सरेषु प्रचलत् साम्प्रतिकं युद्धम्। (१९३९-४५)।

**सो. - क्रान्तिमये समयेऽद्य तान्तिरनुक्षणमीक्ष्यते।**
**क्लान्तिमिमां विनिवेद्य शान्तिमयतु मनुजः क्व वै॥**

तान्तिः खेदश्चिन्ता च। क्लान्तिम् अवसादं श्रमम्। क्व (पुरुषे) विनिवेद्य मनुजः शान्तिम् अयतु प्राप्नोतु।

* * *

## जयपुरस्य कायकल्पः

**राजमार्गमध्येऽभवन् यत्र भूरिभोजनानि**
**तत्र धान्यकष्टे सभाऽऽयोजनानि वीक्षेऽहम्**
**उष्णीषाऽङ्गरक्षिकादि जित्वा नव्यवेषोऽभवत्**
**भाषामात्रशेषो मत्स्यदेशोऽस्तीत्युदीक्षेऽहम्।**
**स्वैरं सिनेमोपवने नक्तं नरनार्यो भ्रम-**
**न्त्यन्यभ्रमं तन्वते ते मार्गाः, संनिरीक्षेऽहम्**
**धर्मे सविकल्पमप्यनल्पगृहशिल्पमिमं**
**जयपुरकायकल्पमल्पदिनैरीक्षेऽहम्॥**

भूरिभोजनानि महामहत्यो भोजनपङ्क्तयः 'हेडा' 'ज्यौनार'। धान्यकष्टे. भोजनपङ्क्तेः का कथा धान्यस्यैव कष्टे समापतिते तेषु तेषु रथ्यास्थानेषु सार्वजनिकसभानामायोजनानि पश्यामि, यद्धि श्रीमाधवेन्द्रराज्यकालिकजनानां दृष्टौ नवीना वार्ता। भाषामात्र. - नव्यवेषेण गुर्जर-वङ्गादिदेशवासिनां भ्रमो भवति पर्र पौरोपवनादिषु भ्रमतां तेषां मिथः संलापं श्रुत्वा पश्चात्प्रतीयते यद् शेखावाटी-जयपुरप्रान्त-वासिन एवैते। ततश्च सोयं मत्स्यदेशः (जयपुरप्राञ्चलः) भाषामात्रमेव शेषो यस्याऽस्ति तादृशः साम्प्रतमित्याशयः। सिनेमो. - सिनेमासु रामनिवासाद्युपवने च, समाहारद्वन्द्वः। अन्यभ्रमं. - नानाविध-विशालभवनैरलंकृतान् नानामहामार्गान् दृष्ट्वा कलकत्ता-बम्बई प्रभृतीनामन्येषां नगराणां भ्रमो भवतीत्यहं समालोचये। धर्मे सविकल्प.-धर्मानुष्ठानादिषु नानासंकल्पविकल्पाः संभवन्ति परम् अनल्पानि गृहशिल्पानि यस्मिन् तथाविधं वर्तमानं जयपुरम्। 'बिल्डिङ्ग'निर्माणे नानाविधाः शोभासामग्र्यश्च प्रचलिता इत्यर्थः।

**सो. - नवसमाजमभिपद्य नवनवरुचिरभिवर्द्धिता।**
**पश्यत नवयुगमद्य किं किं नवनवमीक्षयेत्॥**

नवीनं समाजं प्राप्य। अद्य नव युगं किं कि नवं कौतुकं दर्शयेत्।

* * *

# राजवीथी

*** महाराजाधिराजः श्रीमान् माधवसिंहदेवः ***

**कवित्त**

**भास्वद्वंशवारिजविकासनसहस्त्रकरो**
**नित्यनिर्भरोद्यत्कीर्तिकुमुदः सुखायते।**
**मान्येष्वद्य राजावतराजन्येषु रत्नसमो**
**मन्ये महीपालमञ्जुमघवा विभासते।**
**राजज्जयपत्तनधरित्रीभाललेखामिल-**
**त्सिन्दूराग्रयरेखारुचितेजाः संप्रकाशते**
**सामन्तकमौलितटोदञ्चत्पादपीठपुटो**
**माधवमहीन्द्रमौलिमुकुटो विराजते॥ १॥**

भानुवंशरूपस्य वारिजस्य विकासने सहस्त्रकरः सूर्यः। कुमुदश्चन्द्रः, नित्यं निर्भरं यथा स्यात्तथा उद्यन् उदयं प्राप्नुवन् कीर्तिरूपश्चन्द्रो यस्ये दृशोऽसौ, सुखायते सुखकरो भवति। चन्द्रो नित्यं निर्भरं (पूर्णम्) च नोदेतीति चन्द्रात्कीर्तिचन्द्रे विशेषः। महीपालानां मञ्जुः मघवा इन्द्रः विभासते इति मन्ये। राजन्त्यां जयपुरधरणीभाललेखायां मिलन्ती [तत्र लग्नेत्यर्थः], या सिन्दूराग्रयरेखा तद्वद्रुचिशालि तेजो यस्य सः। ललाटे सिन्दूरमेव सौभाग्यवत्याः सर्वस्वम्। ततश्च जयपुरधरण्या भालपट्टे माधवेन्द्रस्य तेजः सौभाग्यसिन्दूरायितमित्याशयः। सामन्तानां मौलितटे उदञ्चन् (उद्गच्छन् विजृम्भमाणः) पादपीठस्य पुटः (मध्यः) यस्य सः। माधवः महीन्द्राणां मौलिमुकुट इवेति माधवमहीन्द्रमौलिमुकुटः॥ १॥

**सिंहावलोकनम्**

**राजतेजसोद्यद्दिव्यदीप्त्या दिननाथसमं**
**यमुपनमन्तो नेह सामन्ता उदासते**
**दासते ह्यदभ्रधनराशिं प्रजापक्षे वसन्**
**षट्पञ्चाशदब्ददीर्घदुर्भिक्षे समानते।**
**माऽऽनतेन येन गङ्गागोपालोपसेवाविधौ**
**भागवतसंविधौ च दत्तं वित्तमायते**
**मायतेषु सर्वेष्ववनीपमण्डलेषु रवि-**
**र्माधवमहीपमणिमण्डनो विराजते॥ २॥**

राजतेजसा उद्यन्ती या दिव्या (अलौकिकी) दीप्तिस्तया (हेतुः) सूर्यसमं यं (माधवेन्द्रम्) उपनमन्तः उपतिष्ठमानाः (सेवामानाः) सामन्ताः इह न उदासते, उदासीनं न भवन्ति, तेजोवश्याः सदा सेवन्त इत्यर्थः। षट्पञ्चाशब्दस्य (१९५६ संवत्) दीर्घदुर्भिक्षे समानते प्राप्ते सति प्रजापक्षे तिष्ठन् यः अदभ्रम् अनल्पं धनराशिं दासते ददाति। 'दासृ दाने'। अस्य वृत्तं चरित्रसंग्रहे अग्रे द्रष्टव्यम्। मा लक्ष्मीः तयापि आनतेन नम्रेण येन गङ्गायाः श्रीगोपालस्य च सेवाविधौ। विस्तीर्णे, सर्वदा प्रचलनशीले इत्यर्थः। भागवतस्य संविधौ संविधाने पाठादिष्विति यावत्। वित्तं धनं दत्तम्। मया लक्ष्म्या आयतेषु महत्सु राजमण्डलेषु सूर्यायितः। माधवो महीपमणिमण्डन इव, माधवमहीपमणिमण्डनः। महीपमणीन् राजश्रेष्ठान् यो मण्डयति, अर्थात् अनेनैव सर्वेषां राज्ञां शोभेत्याशयः। 'मायत' इति शरणवाचको जयपुरभाषाशब्दोपि ॥ २ ॥

**लन्दननगर्यामुपगच्छन् धर्मधुर्यो यो हि**
**मृत्तिकामपि स्म निजदेशादेव संहिनोति**
**इङ्गलेण्डमण्डलेप्यखण्डनियमस्य यस्य**
**सर्वतः प्रशस्यधर्मदुन्दुभिर्दिवं धिनोति।**
**जर्मनैर्निबद्धे बत यूरोपीययुद्धे धनं**
**दत्त्वा निजागारात्प्रजासंकटं स्म यो धुनोति**
**सोयं धर्म-धैर्य-दया-दाक्षिण्यातिपुण्यमना**
**मान्यजनाधीशो माधवेशो मे मुदं तनोति ॥ ३ ॥**

सम्राजो राज्याभिषेकाय लन्दननगर्यां गच्छन् यो मृत्तिकामपि निजदेशादेव संहिनोति प्रहिणोति स्म। अखण्डनियमस्य अक्षुण्णमर्यादाव्रतस्य यस्य (माधवेन्द्रस्य) सर्वतः प्रशंसनीयो धर्मविजयदुन्दुभिः ('धर्म का डंका') दिवं धिनोति प्रीणयति। स्वर्गपर्यन्तं यशोविश्रुति-र्जातेत्यर्थः। माधवेन्द्रस्य 'इङ्गलेण्डयात्रा' अग्रे द्रष्टव्या। युरोपयुद्धे निजकोषाद्धनं दत्वा युद्धार्थं मनुष्यप्रेषणनिमित्तं संकटं धुनोति स्म दूरयति स्म। अस्यापि वृत्तमग्रे द्रष्टव्यम्। धर्मादिभिः अतिपुण्यं मनो यस्य। मान्यो जनाधीशो राजा ॥ ३ ॥

प्रसङ्गात्तत्सामयिकी सम्राड्विजयप्रार्थना

**संकुलसमरभूविचेष्टमानजर्मनीश-**
**दुर्मदवरूथिनीं निबर्हय निरस्तभय**
**निखिलधरातलविलङ्घनविलासशील-**
**मर्जय सुकीर्तिचयमर्दितसपत्नचय।**
**भूमितलभूषण युरोपपरिपोषण ते**
**जायतामनन्तसुखमायताऽभिन्द्यनय!**

**एवं राजभक्ता ननु नित्यमुपयुक्ताशिषः**
**प्रार्थयामहेऽद्य बत बृटिशनरेश जय ॥ ४ ॥**

संकुलायां नीरन्ध्रायां समरभूमौ, विचेष्टमानां जर्मनीशस्य दुर्मदां वरूथिनीं सेनाम्। निबर्हय पराजयस्व। अर्दिता: पीड़िता: सपत्नचया: येन तत्संबुद्धिः। संपूर्णपृथ्वीभ्रमणशीलं कीर्तिपुञ्जं अर्जय। आयत: अभिनन्द्यश्च नय: (नीति:) यस्य तत्संबु.। ते अनन्तसुखं जायताम्।

**प्रसङ्ग से जर्मनयुद्ध के समय सम्राट् के लिये विजयप्रार्थना -**

# श्रीमन्माधवसिंहदेवस्य

## * चरित्रसंग्रहः *

जयपुरनरेन्द्रः श्रीमान् माधवसिंहदेवः 'ईसरदा' भूमिपतीनां 'राजावत' राजन्यानां माननीये वंशे अष्टादशोत्तरैकोनविंशतिशततमे विक्रमीयाब्दे (१९१८ सं.) भाद्रपदकृष्णनवम्याम् [अगस्तमासस्य ३१ तमतारिकायां १८६१ तमे ख्रिष्टीयवत्सरे] कायमसिंहेतिनाम्ना जन्म जग्राह। विद्या-कलानामुन्नतिसम्पादनेन जयपुरराष्ट्रस्य सुभृशं परिष्कारके श्रीश्रीरामसिंहदेवे देवलोक-मुपगते, तदिच्छानुसारमयं १८८० तमे ख्रिष्टीयवत्सरे सितम्बरमासस्य ऊनत्रिंश्यां तारिकायां जयपुरराज्यस्य राजसिंहासनमलंचकार। वर्तमानसमये श्रीमन्माधवेन्द्रसदृशो धर्ममर्यादापरिपालकः परमेश्वरस्यानन्यभक्तो राजभक्तिशाली च नरेश्वरोऽत्यन्तं विरल एवावालोक्येत। महाराजस्य राजभक्तिं राजप्रबन्धपाटवं चावलोक्य सुप्रसन्नेन भारतराजतन्त्रेण (भारत गवर्नमैण्ट) महाराजाय समये समये सम्मानसूचिका बह्व्यः पदव्यो वितीर्णाः।

## सम्मानप्राप्तिः

अधिकारप्राप्तेः षड्वर्षेष्वेव व्यतीतेषु सुप्रबन्धनतुष्टेन भारतशासकेन श्रीमते 'जी. सी. एस्. आई.' इति पदवी प्रादीयत। दुर्भिक्षसमये भूरिभूरिव्ययं विधाय अन्नादिद्वारा निजप्रजाः संरक्षिताः। एवं भारतवर्षीयाणामनाथानां सहायतायै एककालं षोडशलक्षमुद्राः प्रदाय सर्वप्रथमम-नेनैव राजमौलिमाणिक्येन सोयं धनराशिः [इण्डियन पीपिल्स फेमीन फण्ड] स्थापितः। एतदुपरि संतुष्टेन राजतन्त्रेण 'जी. सी. आई. ई.' इति पदवी व्यतीर्यत। १९०३ तमे ख्रिष्टाब्दे देहलीराज्याभिषेकोत्सवासरे 'जी. सी. वी. ओ.' इत्युच्चतमं पदकं प्रादीयत। १९०४ तमे ख्रिष्टसंवत्सरे देहलीराजसभाया द्वितीयावसरे त्रयोदशतमराजपुत्रसैन्यस्य 'कर्नल' पदेन श्रीमानल-ङ्कृतोऽभूत्। १९०८ तमवर्षे श्रीमतः शिक्षाविषयकमौदार्यं गुणग्राहकतां चावलोक्य 'एडिन्वरा' विश्वविद्यालयेन स्वदेशमधिवसत एवाऽस्मै 'एल. एल. डी.' पदकमुपदीकृतम्। १९११ तमवर्षे देहलीराज्यभिषेकस्यावसरे 'मेजर जनरल' इति पदकमुपदीयते स्म श्रीमते। यूरोपयुद्धे बहुधा कृतसाहाय्यायास्मै महाराजाय संतुष्टेन राजतन्त्रेण 'जी. वी. ई.' इति पदवी प्रादायि। १८९७ तमवर्षे 'चित्राल' समरे भारतराजस्य सहायतार्थं 'ट्रेन्सपोर्ट कोर' नाम्नीमात्मनोऽश्वसेनां संप्रेष्य भूरिवीरतां प्राकाशयदिति भारतेश्वरः सम्मानसूचकौ द्वौ तोपध्वनी प्रावर्द्धयत्। [सप्तदशस्थाने

एकोनविंशतयोऽभवन्] 'टीरा' युद्धे पुनः कृतसहाय्यस्यास्य सम्मानसूचकौ द्वौ तोपध्वनी पुनः प्रावर्द्धयेत राजतन्त्रेण। १९२० तमेवर्षे बृटिशसैन्यस्य लैफ्टिनैन्ट जनरल- (ऑनरेरी) पदेन सम्मानि-तोऽभून्महाराजः।

## अभिरुचितकार्याणि

जयपुरनरेन्द्रेण श्लाघनीये निजजीवने येषु येषु कार्येषु मुक्तहस्तं धनव्ययो विहितस्तेनानुमीयते यन्निम्नलिखितेषु चतुर्षु विषयेषु श्रीमतः सुमहन्मनःप्रसक्तिरासीत्।

### प्रथमः [ धर्मानुष्ठानं दीनानां सहायता च ]

महाराजः सुप्रसिद्धो धर्ममर्यादापालक आसीत्। भगवान् गोपालो भगवती जाह्नवी चास्य प्रधानतया इष्टदेवावभूताम्। प्रातरुत्थितो गोदर्शनं विधाय ततोऽन्यकार्येषु प्रसज्यति स्म। सर्वदा गङ्गाजलमपिबत्। वत्सरस्य भूयांसो मासा हरिद्वारे व्यतीयुः, यत्र हि नरेन्द्रतया भोगप्रसक्तोऽप्ययं तीर्थनियमेनावसत्। परोलक्षमुद्राणां व्ययेन वृन्दावने वरसानुस्थले ( बरसाना) च भगवतः श्रीगोपालस्य मन्दिरं निर्मापितं यद्धि राजोचितशिल्पकलानैपुण्यं प्रकटयन्नरेन्द्रस्यास्य धर्मरुचिस्मारकं वर्वर्ति। गङ्गावतारस्थाने [गङ्गोत्तरी] पि भूरिव्ययेनैकं मन्दिरं निरमाप्यत, यत्र स्थापनाय रत्नजटिताभरणैः सहिता श्रीगङ्गामूर्तिर्लक्षमुद्राश्च 'टेहरी' नरेन्द्राय टिकेन्द्रजङ्गाय [५ जुलाई १९२५] प्राहीयन्त। संपूर्णव्ययस्तु सार्द्धं मुद्रालक्षद्वयमभूत्। जयपुरराजप्रासादेष्वपि निजोपास्यस्य श्रीगोपालस्य भगवत्याः श्रीगङ्गायाश्च कृते सुन्दरं मन्दिरद्वयं निरमायि।

१९१६ तमे ख्रिष्टाब्दे कृषेरुन्नत्यर्थं हरिद्वारनिकटे नरोरास्थाने गङ्गाया जलबन्ध एको (Narora Ganges Band) निरमाप्यत भारतराजतन्त्रेण। परमधार्मिको गङ्गाभक्तः श्रीमाननेन हरिद्वारस्य हरिपादुकास्थाने जलप्रवाहावरोधमाशङ्कमानस्तत्प्रतीकारार्थं हरिद्वारे हिन्दुनृपतीनामेकां सभां सङ्घटयामास, यत्र पटियाला-बीकानेर-अलवर-बनारस-दरभङ्गादीनां राजानो मदनमोहन-मालवीयप्रभृतयश्च हिन्दुनेतारः सममिलन्। तत्र महाराजस्य विशिष्टानुभाव-वशाद्भारतराजतन्त्रेण तदिदं स्थिरीकृतं यत् हरिद्वारे स्वाभाविको जाह्नवीप्रवाहः पादुकापर्यन्तं नावरुद्धो भवेदिति। अस्मिन्कार्ये भूरिव्ययं विदधता जयपुरेन्द्रेण धार्मिकसमाजे महती कीर्तिरक्षय्यं पुण्यं चाधिगतम्।

महाराजस्य शासनकाले प्रतिवर्षं वरणं विधाय भागवतरामायण -- गङ्गालहर्यादीनां पाठाः, राजकीयशिवमन्दिरेष्वभिषेकाः, अन्यान्यानि च धार्मिकानुष्ठानानि ससमारोहमकार्यन्त। समाप्तौ प्रतिवर्षं ब्राह्मणभोजनस्य स समारोहः समभूद्येन प्रवहन्तीव पुण्यनदी लोकैरवालोक्यत। प्रत्यहं जायमानानि गोदानेच्छाभोजनस्वर्णमुद्रादानादीनि तु नियतान्येव परं नरेशस्य नाभूदीदृशो वत्सरो यस्मिन्परःसहस्रमुद्राभिः पुण्यकार्यं किञ्चन्न विशेषरूपेणाक्रियत। प्रसिद्धतीर्थेषु स्वयं वा कर्मचारिणो वा संप्रेष्य भूरिधनव्ययेन बहूनि पुण्यकार्याण्यकारयत्। महाराजस्य शासनकाले एकाशीतिरग्निहोत्राणि सायं प्रातरजायन्त येषु राजदत्तजीविका वैदिकब्राह्मणाः श्रौताग्निषु मन्त्रब्रह्मणा हविरर्पयन्तः पवित्रयन्ति स्म राष्ट्रस्य वातावरणम्।

देशव्यापिदुर्भिक्षसमये न केवलमात्मनो राज्यस्यैव अपि तु भारतवर्षमात्रस्य दीनानां सहायतार्थमेकवारं षोडशलक्षमुद्राः प्रदाय स्थायिधनराशिमयमेव महाराजोऽस्थापयत्। इतोऽग्रेपि कति वारानत्र भूरिधनमदात्। साम्प्रतमस्मिन्धनराशौ केवलं महाराजवितीर्णमेव धनं पञ्चविंशति-लक्षमुद्रापरिमितमद्यापि वर्वर्ति। एतदतिरिक्तेष्वन्यान्येष्वपि पुण्यकार्येषु महाराजेन भूरि धनं वितीर्णं यस्य संख्या अष्टाविंशतिलक्षमुद्रापरिमिताऽस्ति। किमितोऽधिकं भवेत् यज्जयपुरराज्ये राज्योत्थद्रव्यस्य तृतीयो भागः [कोटिपरिमितः] पुण्यकार्येषु व्ययितो भवतीति नियमो महाराजस्य समयेऽक्षुण्णः प्राचरत्।

धर्ममर्यादापालनस्य विश्वविदितं महाराजस्य कार्यम् 'इङ्गलेण्डयात्रा'ऽस्ति, यस्याः संक्षिप्तवृत्तान्तश्चरित्रस्यान्ते विलोक्येत।

## द्वितीयः [ विद्याप्रचारो गुणिनां सम्मानश्च ]

राज्यसिंहासनमधिष्ठायैव श्रीमता माधवेन्द्रेण शिल्पकलादीनामुन्नत्यर्थं 'कौंसिलभवने' एका महती प्रदर्शिन्यक्रियत। यस्यां वस्त्राणाम्, विविधधातुनिर्मितानां पात्राणाम्, नानाविध-भूषणानाम्, रत्नानाम्, विविधानां प्राचीनशस्त्रास्त्राणाम्, पाषाणलाक्षा-काष्ठादिनिर्मितानां नानाविध-मूर्तीनाम्, अन्यान्येषां च वस्तूनां दशसहस्रानुमिताः प्रकाराः समगृह्यन्त। एतेषां वस्तूनामानायनस्य स्थापनस्य पुनः प्रत्यावर्तनस्य च समीचीना व्यवस्थाऽक्रियत। तद्व्ययश्च राजकोषाददीयत।

एतत्प्रदर्शिन्या विलोकनार्थं सार्द्धाष्टशतं गौराङ्गाः कति लक्षाणि च देशीयलोकाः समगच्छन्त। द्विशताधिकेभ्यः शिल्पिभ्यो महामूल्यानि पारितोषिकाण्यदीयन्त। सर्वतोऽधिका च दूरदर्शिता श्रीमतो महाराजस्यानेनानुमीयते यत् भूमण्डलस्य दूरदूरप्रान्तेभ्यो लोकोत्तराणि यानि वस्तूनि बहुव्ययाच्छिल्पिभिरानीयन्त तानि सर्वाण्येव प्रायो जयपुरराज्येनाऽक्रीयन्त। एतद्द्वारा च विचित्रवस्तुसंग्रहालयः (म्यूजियम) रामनिवासारामे स्थापितोऽभवत् यो हि प्रसिद्ध-प्रसिद्धेष्वे-तादृशसंग्रहालयेष्वन्यतमः। एषा प्रदर्शिनी १९३९ तमविक्रमवत्सरस्य पौषशुक्लनवम्या-मुदघाट्यत। अस्यैव वर्षस्य भाद्रमासे राज्यशासनस्य सर्वाधिकारः श्रीमते प्रादीयत। शासनाधिका-रप्राप्तेश्चतुर्मासाभ्यन्तर एवैतादृशं महाकार्यं समपाद्यत महाराजेनेति को वा नाभिनन्देद्धृदयेन।

शिक्षायाः कला-विज्ञानादीनां च यादृशः प्रबन्धः जयपुरराज्ये नैतादृशोऽन्यराज्येष्व-वलोक्येत। 'महाराजाकालेजे' उच्चतमां राजभाषाशिक्षां दूरदूरागता वैदेशिका अपि निःशुल्कमेव लभन्ते। योग्येभ्यश्छात्रेभ्यो मासिकवृत्तिरपि प्रदीयते राज्यतः। वर्तमानशिक्षानिमित्तम्, उच्चविद्यालयः माध्यमिकशिक्षालयः आरम्भिकशिक्षालयाश्च राष्ट्रस्य प्रान्ते प्रान्ते वर्तन्ते यत्र निराबाधं सर्वेपि शिक्ष्यन्ते। बालिकाविद्यालयः, शिल्पकला-शिक्षालयश्चापि (स्कूल आफ् आर्ट्स्) भूरिभूरिध-नव्ययेन राज्यात्परिचाल्यते। राजकीय-संस्कृतकालेजे नेपालादिदूरदूरदेशेभ्योप्यागताः संस्कृतस्यो-च्चतमां शिक्षामधिगच्छन्ति शिक्षार्थिनः। अत्र हि चतुर्णामपि वेदानां तदङ्गानां च नियमानुसारिणी शिक्षा प्रदीयते। सर्वसाधारणस्य कृते महाविशालः पुस्तकालयोपि राजत एव स्थापितोस्ति येनापरिमितं लाभमधिगच्छन्ति लोकाः।

राजकुमाराणां शिक्षानिमित्तमपि 'मेयो कॉलेजे' भूरिभूरिधनं समये समये प्रादीयत महाराजेन। संप्रति प्रतिवर्ष षड्लक्षमुद्रापरिमितं धनं शिक्षाकार्ये व्ययते। न केवलं निजराज्यस्यैव शिक्षणार्थमपि तु अन्यान्येष्वपि भारतस्य प्रान्तेषु शिक्षाकार्यस्य कृते वितीर्णमस्ति महाराजेन धनम्, यस्य संख्या ६९४२३३) मुद्रापरिमितास्ति। १९१२ तमे खिृष्टाब्दे जनवरीमासस्य २४-२५-२६ तारिकासु दरभङ्गानरेशः, श्रीमान् मालवीयश्च यदा हिन्दुविश्वविद्यालयस्य कृते द्रव्यसंग्रहार्थमागच्छतां तदा ससंमानं पञ्चलक्षमुद्राः प्रादीयन्त श्रीमता।

जयपुर-काशी-दिल्ल्यादिस्थानेषु महाराजश्रीजयसिंहदेवेन विश्वविश्रुता याः किल ज्योतिर्यन्त्रशालाः (आब्ज़रवेटरीज़) निर्मापितास्तासां सर्वासामेव जीर्णोद्धारः पुनरकार्यत महाराजेन।

## तृतीयः [ सहानुभूतिः भारतराजस्य हितैषिता च ]

श्रीमान् माधवेन्द्रः सनातनधर्मानुसारं राजशक्तिमीश्वरविभूतिं मन्यते स्म। अत एवायमाजन्म सत्यो राजभक्तः समभवत्। सम्राजः सभाजनावसरे अतितमां विनयेनायं व्यवाहरदिति बहवो विरुद्धां टिप्पणीमकुर्वन् परं ते महाराजस्य गभीरतममाशयं नीतिपाटवं च नांशतोऽप्यविदन्निति वक्तव्यं भवेत्। अनेन हि चित्राल-टीरादियुद्धेषु बहुवारान् भूयसी धनसहायता विहिता। 'ट्रान्सपोर्ट कोर' नाम्नी सैन्यशाखैव पृथक् राजसहायतायै निजराज्ये परिचालिता। युद्धाद्यवसरेषु महाराजेन याऽऽर्थिकसहायताक्रियत तत्संख्या १६६७४१७ परिमितास्ति।

## चतुर्थः [ प्रजानां सौख्यसाधनं तासां परिष्कारश्च ]

प्रजानां हितकार्याण्यपि सर्वतो विश्रुतानि महाराजस्य। लोकानां सौख्यार्थं स्थाने-स्थाने जलाशयाः परिष्कृतमार्गाः ('सड़क') प्रकाशप्रबन्धाश्च राजतो विहिता यस्य किञ्चिदपि शुल्कं प्रजातो न गृह्यते। सर्वत्रैव नगरपरिष्कारिणी समितिः (म्यूनिसिपल कमेटी) प्रजानां करादेव परिचलन्ती दृष्टा, परं माधवेन्द्रेण तस्या अपि व्ययो राजकोषादेवादायि। प्रजानां नैरोग्यार्थं प्रान्ते प्रान्ते चिकित्सालयाः स्थापिता यत्र निःशुल्कं चिकित्सन्ते सुयोग्या भिषजः। 'मेयो हॉस्पिटल' नामकः प्रसिद्धश्चिकित्सालयो लक्षलक्षमुद्राभिः परिचाल्यते यत्र नेत्रादिचिकित्सां दूरदूरतोप्यागता रोगिणो निःशुल्कमेव कारयन्ति।

घट्टगोपुरस्यान्नसत्रं दीनानां हितमुपलक्ष्य श्रीमतैव प्रचारितं यत्र सार्द्धत्रिशतं दीनाः प्रत्यहं भोजनमधिगच्छन्ति, अशक्ताश्च गृह एव तत्परिमितमन्नम् (पेटिया)।

वर्तमाने यूरोपमहासमरे वीराणां बाहुबलप्रदर्शनस्य नासीत्प्रायोऽवसरः। एतद्धि यन्त्राणां युद्धमासीत् यत्राऽलक्षितो यन्त्रगोलकोऽकस्माद् बहून् संहरति स्म। अस्मिन् युद्धे मनुष्याणा-मावश्यकता यदा हि महाराजस्य सविधे प्राकाश्यत भारतेश्वरेण, तदा तदर्थं भूरिलक्षमुद्रा एव व्यतारीन्महाराजो न पुनरेवंविधे यन्त्रयुद्धे निजप्रजाया आकालिकं होममन्वमन्यत। प्रजाहितकार्येषु महाराजेन सार्द्धकोटिमुद्राः प्रादीयन्तेति संहत्य जानीमः।

## आयवृद्धेरायोजनानि

महाराजेन निजशासनकाले न केवलं दानवीरतैव प्रदर्शिता प्रत्युत आय-वृद्धेरप्यायो-जनानि बहूनि सङ्घटितानि। रामगढादीनां सुप्रसिद्धा विशालजलबन्धाः श्रीमतैव कारिता येषां कुल्याभिर्बहुक्रोशपर्यन्तं कृषिः सम्पद्यते। शेखावाटीप्रान्ते माधवपुरप्रान्ते च राज़व्ययेन बाष्पयानं प्रचारितं यस्माद्धि प्रतिवर्षं द्वादशत्रयोदशलक्षमुद्रा उत्तिष्ठन्ति। राजकीयपत्रप्रेषणायाः (डाकखाना) स्थितिरपि नूतनरूपेण श्रीमतैव परिष्कृता यस्मात् प्रतिवर्ष लाभो भवति। श्रीमतः शासनकाले राजकोषीयो वार्षिक आयः (ख़ालसा) एककोटिपरिमितः समभवत्।

## गौरवसंवर्द्धनम्

जयपुरधराधीशानां यात्रोत्सवाः ('सवारी') राजसभाश्च अपूर्वा एव समभवन्निति जानीयुः प्रत्यक्षदर्शिनो लोकाः। महाराजश्रीजयसिंहदेवेन (द्वितीयेन) महाभारते वाल्मीकीय-रामायणादिषु च वर्णितानि प्राचीनानि यानासनानि निर्मापितानि। माधवेन्द्रस्य समयपर्यन्तं तेषां परिपाटी तथैवाऽभवत्। राजसभास्तादृश्यः समभवन् यत्र राजा साक्षादिन्द्र एव प्रतीतोभवत्। हस्तिनामश्वानामुष्ट्राणां वृषभाणां च नानाप्रकाराणि तत्तादृशानि यानान्यासन् यानि दृष्ट्वा लोकस्य हृदि राजगौरवमङ्कितं भवेत्। ध्वजाः पताकाः हस्तिगता दुन्दुभयो महासनम् (अम्बारी) मत्स्याकारा नरेन्द्रसज्जाः ('माही मरातिब') च राजराजेन्द्रगौरव-मस्मारयन्। श्री माधवेन्द्रेण हस्तिनामपूर्वो रथ (इन्द्रविमानम्) स्वर्णादिसामग्र्या तथा निर्मापितो यत्र हि तलद्वये सान्तःपुरो राजा तिष्ठन्निन्द्र एव प्रतीयेत। बाष्पयानस्येन्द्रविमान-नामकाः सज्जितशकटाः (सैलून) तादृशा निर्मापिता येषु सवेगं प्रचलत्स्वेव राजसभादिकानि सर्वाण्येव कार्याणि ससमारोहं संभवेयुः, अन्तःपुरादीनां च यत्र पृथक् पृथक् निवेशो भवेत्।

## प्राचीनमर्यादायामाग्रहः

माधवसिंहदेवस्तादृशलोकेष्वासीत् ये हि मन्यन्ते यत्प्राचीनैर्महर्षिभी राजर्षिभिश्च याः प्रथाः स्वीकृता अवश्यं तासु किञ्चिद्रहस्यं गुणश्चास्ति। ते ह्यस्मत्तो बहुतरं प्रभावसंपन्ना आसन्निति। अत एव प्राचीनरीतिनीतीरुन्मूल्य नवीनानां तासां प्रचारे नाभूत्तस्य मतम्। सर्वदा स हि देशीयवेषमेवाधारत्। राजोचितमुष्णीषं प्रावारकं चैव परिधृत्य प्रासादाद् बहिराजगाम। महामूल्यैर्बृहदश्वैर्वाहितं राजरथं विहाय न मरुत्तर-(मोटर)-शकटादिषु तत्प्रवृत्तिरभूत्। प्रत्युत ये सामन्ता एवंविधविचारा आसन्न तेभ्यो महाराजः प्रासीदत्। तस्यैवायमासीद्धेतुर्यदेतत्प्रभाव-वशाज्जयपुरराज्ये नवीनयुगप्रभावो नाममात्रायैव तत्काले प्राविशत्। नवीनान्दोलनैस्तत्संबन्धिनीभिः सभासमितिभिश्च न कश्चन स्थायी उपकारः संभवेत् प्रत्युत शान्तप्रायासु प्रजासु या निजनिजकर्म-स्वेकतानता प्रचलिता तत्र केवलं बुद्धिभेदजननमात्रं भवेत्। अत एव निजप्रजास्वीदृशान्विचारान्ना-भिरोचयामास महाराजः।

जयपुरराज्यस्य शासनसूत्रे प्रबन्धादिपरिवर्तनविषयेऽपि महाराजस्य विचाराः प्रायः प्राक्तनप्रथामेवान्वगच्छन्। राज्यस्य परिष्करणे आदर्शायितैः श्रीरामसिंहदेवैर्यः किल राज्यप्रबन्धो

विचार्य प्रचारितस्तत्र प्रबलावश्यकतायामेव परिवर्तनं विधेयमन्यथा मज्जीवने तु तन्निर्वाह एव मत्कर्तव्यमित्यासीन्महाराजस्याभिप्रायः। अत एव ये परिवारा राजसेवायामद्यावधि प्रवृत्तास्तेषां पुत्रपौत्रादिष्वेव तत्कार्यभारं यावच्छक्यं समर्पितवान्न प्रायो नवीनेषु। अनेन बहवस्तदिदमध्यस्यन्ति यन्महाराजेन निजशासने न कश्चिन्नवीनपरिष्कारः कृत इति। किन्तु केनचिदुद्यानाध्यक्षेण निजारामे प्राचीनान्फलवतस्तरून्सावधानं परिषिच्य नवीना यदि नारोपितास्तर्हि किं वा तस्य वैगुण्यम्? फलप्रसुवः सहस्रं सहकारतरून्समुन्मूल्य बहिर्दर्शनमात्रसुखानां लक्षलक्षाणामपि नवीननिर्गन्धक्षुपाणामारोपणं न सर्वेषामेव मते चातुर्यं परिगण्येत। महाराजश्रीरामसिंहदेवस्य समयादेवानुवृत्तं बहूनामधिकरणानाम् ('कचहरी') कार्यं प्रायो यवनलिप्यामेवाभवन्महाराजस्य समयेऽपि। परं श्रीमानधिकरणस्य सर्वाणि कार्याणि हिन्दीभाषायामेवाभिरोचयामास मानसे, स्वयं च निजमातृभाषायामेवाकारयत्। कलकत्तानगरे मरुनिवासिव्यवसायिनां समितौ ('मारवाडी एसोसियेशन') अभिनन्दनस्योत्तरे श्रीमन्महाराजेन स्पष्टमेवाज्ञप्तमासीत् यन्मम राज्ये हिन्दीभाषाया न कश्चित्प्रतिरोधः।

महाराजो राजोचितस्वरूपसंरक्षस्य भूरि पक्षपाती समभूत्। नरेन्द्रे यदा काचिदतिशयिता शक्तिः परिगण्यते तदा तदनुरूपस्वरूपेणैव धरणीन्द्रैर्वर्तितव्यमित्यासीत्तस्य हृदयम्। अत एवास्य देशान्तरयात्रा राजोचितसमारोहेणैव समभवत्। निजधर्ममर्यादानुवर्तनं तु हृदयपरिस्यूतमासीदेव। स्थालीपुलाकन्यायेन महाराजस्य यात्रावृत्तावबोधनार्थं 'इङ्गलेण्डयात्राम्' किञ्चिचद्विस्तृत्याधस्तादवतारयामि --

## जयपुरनरेन्द्रस्य 'इङ्गलेण्डयात्रा'

भारतसम्राजः श्रीमतः सप्तम-एड्वर्डमहोदयस्य (१९०२ तमख्रिष्टीयवत्सरे जूनमासस्य षड्विंश्यां तारिकायां भाविनि) साम्राज्यसिंहासनाधिरोहमहोत्सवे समवेतुं भारतराजतन्त्रस्य कार्यालयात्ससम्मानमामन्त्रणपत्रम् (१९०१ तमख्रिष्टीयवत्सरे अक्टूबरमासस्य सप्तमतारिकायाम्) जयपुरपुरन्दरस्य श्रीमाधवेन्द्रस्य सविधे प्रापत्। तदुपरि महाराजोचित-सम्भारेण यात्रां चिकीर्षुरेष धरणीन्द्रः समुद्रयात्रां कृत्वा प्रत्यन्तप्रस्थानविषये धार्मिकमर्यादया सङ्कुचन् धर्मसभाप्रधानपण्डितानाहूय सम्मतिं जग्राह। तैर्व्यवस्था दत्ता यन्महाराजः प्रत्यहमुपास्यदेवस्य भगवतः श्रीगोपालस्य महाप्रसादं गृह्णात्येव। ततश्च तस्यैव भगवतः सह नयने तत्रापि च पूर्ववत्तत्प्रसादोपयोगे न किञ्चिदवद्यं भवेत्। भगवच्चरणारविन्दसम्बन्धे कथंकारमपावित्र्यं स्पृशेदिति। परं धर्माधर्मविचारमकिञ्चिद् गणयद्भिर्वैदेशिकजनैः क्षुण्णे अपावनपदार्थैरशुचीकृते जलयाने भगवन्मूर्तेर्नयनं कथमिवोचितमासीत्। अत एवेदृशः पोतः पर्यन्वेष्यते स्म यस्मिन्न केनचिद्यात्रा कृता भवेत्। बहुव्ययं विधाय 'टाम सकुक कम्पनी' द्वारा 'एस्. एस्. ओलिम्पिआ' नामको नवीनतमः पोतस्तदभिलषितं पूर्णद्रव्यं प्रदाय निजायत्तः कृतोऽभूत् यस्य तलं नाद्यावधि जलस्तरेण स्पृष्टमभूत्। आत्मनो मनोरथानुसारमिमं सज्जीकर्तुं जयपुरराजकीयाः पुरुषा मोहमयीं प्राहीयन्त, यैरतिशीघ्रं जयपुरपुरन्दरस्येच्छानुसारमयं परिष्कृतश्चालङ्कृतश्च।

इयद्दूरयात्रायासीमव्ययात्तायामपि महाराजेन सह गामिनां लोकानां संख्या सार्द्धशतानुमिताऽभूत्। येषु चौमूपतिः श्रीदेवीसिंहः, सीकरनरेशः श्रीमाधवसिंहः, सेनापतिः श्रीहरिसिंहः, एतत्प्रभृतयः सामन्ताः, पण्डितेषु विद्यावाचस्पतिश्रीमधुसूदनशर्माणः, सचिवेषु संसारचन्द्रसेनप्रमुखाः, डाक्टरेषु दलजङ्गसिंहादयः, गौराङ्गेषु कर्नल सर एस्. एस्. जेकबप्रभृतयः, परिजनेषु खवासबालाबख्शप्रभृतयः, श्रेष्ठिषु रामनाथप्रमुखास्तावदुल्लेखार्हाः। महाराजस्य सेवकानामेव संख्या शतोत्तरा समजायत। रायबहादुरो धनपतिरायस्तु स्वाभिलषितान्सेवकानादाय बहोः कालत्पूर्वमेव महाराजाज्ञया लण्डनमगच्छत्, येन हि तत्र गत्वा महाराजस्येच्छानुसारं सर्वापि व्यवहारसामग्री पूर्वत एव सज्जीक्रियेत।

महापोतेऽस्मिन् सर्वेषामेव सहगामिनां कृते स्वरूपरूपानुसारं सुप्रबन्धः कृतोऽभूत्। षण्महानसा निरमीयन्त यत्र जातिनियमानुसारं पृथक् पृथग् भोजननिर्माणव्यवस्था भवेत्। स्नानागारेभ्यः पृथङ् महाविशाल एकः कुण्डो निरमीयत यो हि भारतादेव जलेनापूर्यत। महाराजस्याज्ञानुसारं बहवः कर्मचारिणः केवलमेतदर्थमेव मुम्बई प्राहीयन्त यत्ते गत्वा महाविशालस्यास्य जलयानस्य प्रक्षाल्य पावनीकरणस्य प्रबन्धं कुर्युः। एभिः सह पञ्चविंशतिब्राह्मणाः केवलं वारियानस्य प्रक्षालनार्थमेव जयपुरात्प्रहिता अभूवन्। श्रीमतो महाराजाधिराजस्य अन्येषां च सहयायिनां कृते पानार्थं श्रीगङ्गाजलस्य तावान् प्रबन्धः पूर्वत एव कृतोऽभूत् येन हि षण्मासपर्यन्तं तत्पर्याप्तं भवेत्। भोज्यवस्तूनि तन्दुल-गोधूम चूर्ण-घृतप्रभृतीनि पूर्णमात्रायां सह समभ्रियन्त येन प्रत्यन्ते तत्संग्रहस्य नावश्यकता भवेत्। फल-शाकप्रभृतीनि तु प्रतिसप्ताहं पवित्रतया सह भारतादेव प्रहीयेरन्निति विशेषप्रबन्धः पूर्वत एवाक्रियत। प्रतिदिनव्यवहारार्थमावश्यकं सर्वमपि वस्तुजातं षण्मासपर्यन्तं सर्वेषामपि जनानां कृते पर्याप्तं भवेत्तावत्किल निजनगरादेव सह नीयते स्म। किं बहुना, हस्तप्रक्षालनार्थं मृत्तिकापि भारतादेव समगृह्यतेत्यत्र नास्त्यतिशयोक्तिः। अस्य वारियानस्य स्वामिभिः प्रतिज्ञापत्रमलिख्यत यद् यावन्महाराजस्यानेन यात्रा भविष्यति न तावत् हिन्दुधर्मविरुद्धं वस्तु जलयानचालकैः कप्तानप्रभृतिभिरपि व्यवह्रियेत।

श्रीमतो जयपुरेन्द्रस्य रत्नाभूषणान्येव केवलं त्रिंशल्लक्षमुद्रामूल्यान्यासन्नस्यां यात्रायाम्। सम्राजे उपहरणीयानि महामूल्यवस्तूनि त्वेभ्यः पृथक्। एतेषामाभूषणानां पञ्चचत्वा-रिंशत्सहस्रमाङ्गलमुद्राः (पाउण्ड) तु केवलं संरक्षणशुल्कमेव (बीमा) अदीयत। नियतव्ययादतिरिक्ताः पञ्चदशलक्षमुद्राः टामसकुककम्पनीसविधे एतदर्थं न्यधीयन्त यन्मार्गे आवश्यकतायां ताः संगृह्येरन्।

मईमासस्य (१९०२) पञ्चमतारिकायां जयपुरनरेन्द्रस्याज्ञया स्वाधीनीकृतं प्रथमं विशेषवाष्पयानम् ('स्पेशल ट्रेन') जयपुरात्प्राचलत् यस्मिन्नष्टौ बृहच्छकट्यः केवलं यात्रोपकरणस्य भारेणाऽऽपूर्णा आसन्। अष्टमतारिकायां द्वितीयं विशेषबाष्पयानं प्रास्थित, यस्मिन्हि सीकरनरेशचौमूपतिप्रभृतयः सपरिजना मोहमयीमगच्छन्। नवमतारिकायां तु रात्रावेकादशवादनावसरे श्रीश्रीमान् जयपुरधरापतिः सपरिकरो विशेषबाष्पयानेन मोहमयीं प्रति प्रास्थित। इतः पूर्वमष्टवादनवेलायां राजहर्म्यमालायाः प्रधानगोपुरतः (सिरेह ड्योढी) श्रीमान् जयपुरेन्द्रो

राजसज्जया नगरमध्यतो भूत्वा प्रत्यन्तयात्रायै प्रस्थितोऽभवत्। सिंहदुर्गात्पञ्च-विंशतितोपध्वनयो घोरतरगर्जनया महीमहेन्द्रस्य प्रस्थानमङ्गलमसूचयन् लोकेभ्यः। आबालवृद्धवनितं सर्वेपि पौराः श्रीमन्माधवेन्द्रदर्शनार्थं राजमार्गे समवेताः समभवन्। सुदूरयात्रायै गच्छन्तं निजस्वामिनमालोक्य सर्वेषां चक्षूंषि बाष्पजलाकुलान्यभूवन्। प्रजावत्सलः श्रीमान् माधवेन्द्रोप्युच्छ्वसितहृदयः समभूत्।

मध्ये अहमदाबादादिनगरेषु स्वागतस्वीकारेण तत्तदधिपतीन्सनाथयन्नेप १२ तारिकायां मोहमयीमवाप्तवान्। चरणेन मोहमयीभूमिं स्पृशत्येव घोरतरतोपध्वनिभिर्महाराजस्य स्वागतम-सूच्यत नगरे। बाष्पशकटेरवमोचनस्थान एव महाराजस्वागतार्थमुत्कण्ठितानां भूस्वामिनां नगर-श्रेष्ठिनामन्येषां च राजतन्त्राधिकारिणां सुमहान्समवायोभवत्। तत्रैव तत्तेषां विशिष्टपुरुषाणामुपायनानि स्वीकृत्य महता समारोहेण श्रीमान् जयपुरेन्द्रः 'अपोलो बन्दरम्' अगच्छत्। समुद्रतटोपरि महाराजदर्शनार्थमुत्कण्ठितानां लोकानां पूर्वत एव महान्समारोह आसीत्। क्षात्रतेजसा दुर्द्धर्षमनोरमां महाराजस्य मूर्तिमवलोक्यैव दूरदूरदेशवासिनामपि लोकानां मुखात्स्वत एव जयध्वनयो निरगच्छन्। सुशिक्षितमपि मोहमयीनगरं महाराजस्य दर्शनात्तथोत्कण्ठितमभूद् यथा तरङ्गकलक-लाकुलमपि सागरतटमिदं हर्षकोलाहलाद्-द्विगुणतरकलकलमवालोक्यत।

तद्देशीयपण्डितैः समर्पितानि संमानपत्राणि स्वीकृत्य श्रीमान् जयनगरेन्द्रः समुद्रपूजन-मकरोत्। एतस्य धार्मिकसमारम्भस्य साधनार्थमेव बहवः पण्डिताः कर्मकाण्डिनः पुण्यविभागा-धिकारिणश्च जयपुरात्प्राहीयन्त। पूजार्थमेतत्समुद्रतटं प्रक्षाल्य पवित्रीकृतमभूद्राजपुरुषैः। बृटिशाधि-कृतमपि अपोलोतटं महाराजप्रतापेन स्वाधिकृतमिवावलोक्यते स्म। तस्मिन्समये समस्तमपि तदेतत्तटं वन्दनमालिकाभिः कदलीस्तम्भैश्च मण्डितमभूत्। सोपानश्रेणी पूजोपकरणैर्भरिताभवत्। समुद्रार्थमुपायनीकरिष्यमाणानां सुवर्णरजतकलशानां पङ्क्तिभिरेषा सोपानपङ्क्तिरालोकितेवाभूत्। आसीत्सोपानश्रेणिषु राजकीयः प्रबन्धः, परं तदुपरितने सुविशाले तटप्रदेशे नगरवासिनां सुमहन्मेलकमभूत्, ये हि तटभित्तिष्वान-मितपूर्वकायाः सोत्कण्ठमिममभूतपूर्वं धार्मिकसमारोह-मवलोकयन्तो न तृप्यन्ति स्म। बहवो धनिकनागरास्तु बाष्पनौकाः (आगबोट) समधिरुह्य समुद्रतस्तदेतद्दृश्यमवलोकयन्ति स्म।

सुवर्णसूचीकार्यखचितां महामूल्यां मखमलनिर्मितां बृहदासन्दीमास्थाय अमात्या-दिभिर्धार्मिकैः सदस्यैश्च परिवृतः समुद्रमर्चयन् सपरिकरो महाराजः कौतुकिभिर्नागरैः सबहुमानं छायाचित्रेष्वङ्कितोऽभूत्। प्रात्यहिकमिदं वृत्तं स्थानीयेषु दैनिकपत्रेषु ससंमानं प्राकाश्यत। श्रूयते, सेयं समुद्रपूजा तेनैव विधिनाऽक्रियत येन हि महाराजस्य वंशधरो भगवान् श्रीरामचन्द्रः करोति स्म। अस्यां हि सुवर्णरजतमयाः कलशाः, महामूल्यानां मौक्तिकानां मालाः, महार्हाणि कौशेयानि च नदनदीपतये भगवते सागरायोपाह्रियन्त। पूजोत्तरमुत्तिष्ठता महाराजेन यदा हि स्वहस्तेन समुद्रस्य नीराजनं व्यधीयत तद्धि दृश्यमद्भुतमेवाभूत्। सर्वेप्यवलोकितारो विस्मयेन च भक्त्या च हर्षेण च गौरवेण चाक्रान्ता इवाभवन्। श्रद्धालूनां नयनेभ्यः प्रेमाश्रु प्रावहत्। न कोपि तदेतद् दृश्यमवलोकयंस्तृप्यति स्म। एतदनन्तरं शास्त्रीयपद्धत्या वारियानस्यापि शोधनं पूजनं चाक्रियत। ततस्तु मङ्गलविधानोत्तरं पूर्वं भगवान् श्रीगोपालस्तदनन्तरं च श्रीमान् महाराजस्तमिमं महापोतमधिरुह्य लण्डननगरार्थं प्रस्थानमकरोत्।

मध्ये विविधान्देशानधिगच्छन् नानादृश्यानि चावलोकयन् महाराजो जूनमासस्य तृतीयतारिकायामिङ्ग्लेण्डस्य डोवरनामकं तटं प्राप्नोत्। तत्र हि सम्राट्प्रहिता वैदेशिकसामन्ता अन्ये च राजाधिकारिणो महाराजस्य स्वागतार्थं पूर्वत एवोपस्थिता आसन्। भूमितले चरणन्यासं कुर्वत्येव महाराजे रणपोतेभ्यस्तोपध्वनयोऽभूवन्। राजकीयाधिकारिभिः समर्पितं सम्मानपत्रं स्वीकृत्य श्रीमान् महाराजो बाष्पयानेन लन्दननगरं प्रति यात्रामकरोत्। महाराजस्य बाष्पयानाधिरोहोपि इङ्ग्लेण्डवासिनां सुमहोत्सवायाभूत्। असंख्याता भारग्रन्थयो रेलशकटीषु स्थाप्यन्ते स्म, याभिस्तदेतत्तटं व्याप्तमिवाभूत्। नानावर्णानि महामूल्यवस्त्राणि धारयन्तो महाराजस्य परिजना वैदेशिकानां हर्षं च विस्मयं चाजनयन्।

सम्राजा ससंमानमेष महाराजो 'मोरेलॉज' नामके स्थाने ससमारोहमस्थाप्यत। श्रीमतो जयपुरेन्द्रस्य माननीयमहाराजोचितं वेषं क्षत्रियोचितां प्राचीनमर्यादां नरेन्द्रोचितमात्मगौरवं राष्ट्रपतिसमुचितं परिकरसम्भारं चावलोक्य सर्वेपि तद्देशीयाः प्रभावाभिभूता इवासन्। सम्राजास्य गौरवानुसारं नैजानि चत्वारि यानानि राजसेवायामाज्ञप्तानि यानि नेतरेण पूर्वमुपलब्धानि। निवासाद्बहिर्निर्गत एवास्मिन्नरेन्द्रे सर्वेपि सम्भ्रान्ता नागरा एनं विलोकयितुमौत्सुक्यमावहन्ति स्म। सर्वकार्येषु सर्वतः पूर्वं भगवतो गोपालस्यैव सादरप्रत्यवेक्षणम्, मृत्तकापर्यन्तानां नित्योपयोगिवस्तूनामियद्दूरपर्यन्तमानयनम्, इत्यादिभारतीयमर्यादामभिवीक्ष्य तत्रत्यैः समाचारपत्रैर्यः किल सम्मानः प्रकाशितस्तस्य सारमधस्तात् प्रकाशयामि --

(ता. ५ जून 'मॉर्निङ्ग पोस्ट') 'अनया यूरोपयात्रया महाराजेन सर्वेष्वयमादर्शः स्थापितो यन्माननीया महाराजा इत्थं निजधर्ममनुरुन्धन्ति, इत्यादि'।

('ग्रेट थॉट्स' २ जून) 'श्रीमान् महाराजो दीनानां रक्षार्थं भूरि भूरि धनं दत्तवानिति बहोः कालाच्छृणुमः। सत्यं त्वेतद्, यत्सिंहासनाधिरोहादेव श्रीमानुदारतायै प्रसिद्धोस्ति, इत्यादि।'

('क्रानिकल' २३ मई) 'अस्मिन्देशे परःसहस्रा भारतीयाः समागताः परं नैतादृशोऽद्यावधि समायातो यः किल धर्मपालने एतावद्दृढो भवेत्। स एव भारतीयः प्रशस्यते यो हि धर्ममर्यादामनुसरति। अयं नरेन्द्रः परमबुद्धिमान् प्रजाहितैषी च।'

देवमूर्तेर्लण्डननगरे एवं समारोहेण नयनं नाभूत्पूर्वम्। अत एव मूर्तिपूजाविरोधिभिर्मिश्नरीमहोदयैः प्रतिमापूजाविरोधे प्रकाशिताः केचिदालोचनालेखाः पत्रेषु। परं तस्मिन्समये प्रेमानन्दभारतीनामकः स्वामी लण्डनमेवाध्यवात्सीत्। स हि तेषां लेखानां समुचितां प्रत्यालोचनामपि पत्रेषु प्रकाशयामास। तत्सारमधो निर्दिशामि --

('वैस्टमिंस्टर' ता. २८ जून) 'ब्रिटानियानिवासिनः साम्प्रतं धर्मविषये आत्मन औदार्यं सर्वत्र घोषयन्ति। सम्प्रति न तादृशः समयो यत्खिृष्टमतानुयायिभ्योऽन्ये घृणादृष्ट्या विलोक्येरन्। भारतीयसभ्यताविषये मैक्स्मूलरप्रभृतिभिर्बहुतरं परिज्ञातम्। वेदोपनिषद्गीतादीनामनुवादा इङ्ग्लिशभाषायामप्यभूवन् येषां बहुतरः समादारोऽस्ति। भगवतः श्रीकृष्णस्य कियन्माहात्म्यमिति गीतापरिशीलकाः परिचिनुयुः। तुलसीचन्दनादिभिर्मूर्तेः पूजनं तु सुदृढो

मानसिकविश्वासः। ख्रिष्टमतावलम्बिनोपि मूर्तिपूजातस्तावत्कालं न मुक्ताः सन्ति यावत्ते स्वमान्यानां मूर्तेश्चित्राणां क्रासचिह्नस्य च पुरतो मस्तकं नामयन्ति। सर्वेष्वपि देशेषु निजनिजानुसार-मुपासनायाः पृथक् प्रथक्प्रकारा भवन्ति। जलद्वारा 'बैप्तिस्मा'- रीतेर्निर्वहणम्, काष्ठनिर्मितक्रा-सचिह्नस्य सम्मुखे जानुपातनपुरस्सरं प्रार्थनाप्रक्रिया, राज्याभिषेकसमये जैतूनतैलाभ्यङ्गादयोपि तादृशा एवोपासनाप्रकाराः सन्ति यादृशा भारतीयादीनां पुष्पादिभिर्देवार्चनादयः, इत्यादि'।

२६ जूनदिवसे संपादनीयतया पूर्वतो नियतः सम्राजो राज्याभिषेकमहोत्सवस्तस्या-स्वास्थ्यवशात्स्थगितोऽभवत्। तत्प्रतीक्षायां सार्द्धमासपर्यन्तं तावद्भिः परिकरैस्तादृशेन च स्वदेशीयवस्तुव्रतेन सह श्रीमतो महाराजस्य तद्देशे निवासः पुनरधिकं प्रवृद्धोऽभवत्। तत्प्रान्तीय-दर्शनीयवस्तुविलोकनकौतुकेन सोयं समयो यथाकथंचिदतिवाहितोऽभवत्। ततो नीरोगतां गते तस्मिन् १९०२ तमख्रिस्टीयवत्सरस्य नवम्यामगस्तमासतारिकायां सोयं साम्राज्यसिंहासनाधिरोह-महोत्सवः समभून्नियतः। संमाननीयनिजसामन्तैः सहितः श्रीमान्महाराजस्तदेतस्मिन्महोत्सवे समवेतोऽभवत्। अनिर्वचनीयया शोभासंपदा परमेण च साम्राज्यगौरवेण सह सोयमुत्सवो यथारीति समपाद्यत। अथ द्वादश्यां तारिकायां श्रीमान् सम्राट्महोदयः समागमार्थं श्रीमज्जयपुरनेरन्द्रं ससमादरमामन्त्रयत। श्रीमन्महाराजेन संगतः सम्राट् परमं प्रमोदं प्राकाशयत्। भारतयात्रायां पूर्वावलोकितस्य जयपुरनगरस्य शोभाम्, तत्र कृतां मृगेन्द्रस्य मृगयां च भूरि भूरि प्राशंसत्। श्रीमान् महाराजो रत्नच्छटाविच्छुरितमपूर्वमेकं खड्गं सम्राजे उपाहरत्, यस्य मूल्यं सार्द्धलक्षमुद्राप-रिमितमासीत्। दमिश्कदेशीयलोहेन निर्मितो यश्च पूगफलपृथुलैर्महामूल्यैर्हीरकैर्जटितोऽभवत्। सम्राडेतस्य प्रस्फुरन्तीं द्युतिमालोक्य परममाह्लादितोऽभवत्। सादरमवदच्च यदहं श्व एव साम्राज्यसेनासंनाहे खड्गरत्नमिदमुप-योक्ष्यामि। सम्राण्महिष्यपि सादरमवादीत्-यद्भवदुपायनी-कृतेषु महार्घरत्नजटितेषु पात्रेषु प्रत्यहमहं पेयमुपगृह्णामि।

एतदनन्तरं दशभिर्दिनैरवशिष्टान्यपि दर्शनीयस्थानान्यवालोकयन्नरेन्द्रः। अस्मिन्नेवावसरे कन्दुकक्रीडायाम् ('क्रिकेट') विश्वविश्रुताय श्रीरणजित्सिंहाय (वर्तमानजामनगरराजाय) सहस्रं 'पाउण्ड' मुद्रा विततार।

अथ द्वादश्यां तारिकायां सम्राजा सादरं विसर्जितः श्रीमान् परिजनेन सह विशेषबाष्प-यानम् (स्पेशल ट्रेन) अधिरुह्य लन्दननगरात्प्रातिष्ठित। इतः पूर्वं कतिचिद्दिनेभ्यः पूर्वत एवं कियन्तश्चन प्रतिष्ठिता राजकर्मचारिणो भारतं प्रति प्रहिता अभूवन्, येषु केचन मार्गे विश्रमिष्यतो महाराजस्येच्छानुकूलं प्रबन्धम् अन्ये च मोहमय्यां पूर्ववत्समुद्रपूजना-दिसामग्रीं च सङ्घटयेयुरिति।

चतुर्विंश्यां तारिकायां निजदेशं प्रति मङ्गलप्रस्थानाय स्वायत्तीकृतं 'एस्. एस्. ओलम्पिआ' पोतमध्यारोहत्। समुद्रयानेन निजदेशं गच्छतः श्रीमज्जयनगरेन्द्रस्य शुभजन्मोत्स-वदिवसोपि सप्तविंश्यां तारिकायामेतन्मध्य एवाजगाम। प्रातस्त एव स हि महापोतो नानावर्णाभिः पताकाभिरामण्डितोऽभवत्। मध्ये च पञ्चरङ्गाङ्कितो महाविशाल एको विजयध्वजः समारोप्यत येन पोतस्य शोभैवान्यादृशी समलक्ष्यत। सर्वेषां पोतकर्मचारिणामखिलानां च राजपरिजनानां

कृते तस्मिन्दिने भोजनस्य विशेष-प्रबन्धोऽक्रियत। सहचरैः सामन्तैरमात्यादिभिश्चाखिलैर्जयनगर-महेन्द्राय माधवेन्द्राय उपायनान्यदीयन्त। श्रीमान्महाराजस्तद्दिननियमानुसारं भगवतः श्रीगोपालस्य मन्दिरे त्रयश्चत्वारिंशत्सुवर्णमुद्रा उपजहार। उत्सवोपलक्ष्ये च पोतपरिचालकाय महामूल्यमेकं घटिकायन्त्रं विततार यस्मिन्नरेन्द्रस्य नामाङ्कितमासीत्। गानवाद्यादिहर्षसमारम्भैरहोरात्रोऽयमहो अविदितयाममयासीत्।

सितम्बरमासस्य अष्टमतारिकायामकस्मात् सामुद्रिक उपप्लवः समुपातिष्ठत। पर्वताकाराः कल्लोलाः सवेगमाघ्नन् पोतम्। सायं चैकेन महता तरङ्गेण पोतस्य महानेकः काष्ठदण्डोऽभज्यत। वायुवेगाप्लावितं जलं पोतेऽभरत्। सर्वेपि जना भयव्याकुलाः समभवन्। प्रत्येकक्षणे पोतस्य समुद्रसमाधिरनुमितोऽभवत्। भगवतो गोपालस्य सुदृढः सेवकः श्रीमान् महाराजो यद्यपि न किञ्चिदभैषीत्, परं प्रजावत्सलोऽसौ परिकरस्य क्लेशाद्विषण्णो दिनद्वयं यावन्न भोज्यमप्यासेवत। अस्तु, श्रीमतः पुण्यप्रतापाद्भगवतो गोपालस्य चानुग्रहात्तृतीयदिने विमलं दिनमभवत्। यथापूर्वं प्रासीदद्भगवान्नदनदीपतिः।

सितम्बरमासस्य द्वादशतारिकायां मोहमयीं प्रापन्महाराजः। तटसमीपं प्राप्तवत्येव पोते मोहमयीदुर्गात्सम्मानसूचकास्तोपध्वनयो द्विगुणतरमगर्जन्। पूर्ववन्नियमानुसारं समुद्रपूजनादि विधाय जयपुरात्समायातैर्बहुतरैः सामन्तैरभिनन्दितः श्रीमान् विशेषबाष्पयानेन जयपुरं प्रातिष्ठत। सामन्तैः सादरमभिवन्दितः प्रजाभिश्च सहर्षमभिनन्दितः श्रीमान् चतुर्दशतारिकायां ससमारोहमाससाद जयपुरनगरम्। अथ अक्टूबरस्य चतुर्थ्यां तारिकायां राजसज्जाभिः सज्जितः श्रीमान् जयपुरधरणीन्द्रः करीन्द्रमास्थाय राजोपकरणैरभिमण्डितो जयजयशब्दैः प्रजाभिरभिवर्द्धितः शुभमुहूर्ते नगरप्रवेशमकार्षीत्। तद्दिनस्य प्रजानामुत्साहो नगरस्य शोभासन्निवेशश्चापूर्व एवाभवदिति नाऽसौ मे वाचां गोचरः। अस्तु, श्रीमतो महाराजस्य सानन्दप्रत्यावर्तनमङ्गलार्थं ये किल ब्राह्मणा वरण-पूजा-पाठादि राजनिदेशतोऽकुर्वन् तैः सानन्दमाशीःपुष्पहारास्तद्दिन एव समार्प्यन्त जयनगरेन्द्राय।

*** श्रीमन्माधवेन्द्रस्य जन्मोत्सवः ***

**मङ्गलमृदङ्गरवमुखरितहर्म्यमाला**
**पश्यतां नवं नवं तनोति नयनोत्सवम्**
**मञ्जुलकुसुम्भरागरञ्जितवसनविभा**
**वीक्षते समस्तसभा पटु नटनोत्सवम्।**
**मण्डितमहार्हहेमसिंहासनराजमान-**
**माधवमहीन्द्रमणिरेति सकलोत्सवम्**
**भाद्रपदकृष्णनवनवमी समीरयते**
**जयनगरेन्द्रवरजननमहोत्सवम्॥५॥**

मृदङ्गरवेण मुखरिता राजहर्म्यमाला पश्यतां जनानां नवनवं नेत्रोत्सवं करोति। परितो राजसौधमाला सर्वतः प्रसाधितेत्यर्थः। कुसुम्भरागेण रञ्जितानां वसनानां विभा (शोभा) यस्याः ईदृशी, कौसुम्भवस्त्रधारिणीत्यर्थः। राजसभा संमुखे जायमानं वेषवामादीनां नृत्यं पश्यतीत्यर्थः। हेमसिंहासने राजमानो माधवनरेन्द्रवरः सकलविधमुत्सवम् एति प्राप्नोति। भादपदकृष्णनवमी जयनगरेन्द्र-श्रेष्ठस्य जन्मोत्सवं समीरयते अस्मभ्यं प्रापयतीत्यर्थः। तद्दिनजायमानदृश्यस्य दिग्दर्शनम्॥ ५॥

*** श्रीमन्माधवेन्द्रस्य जन्मोत्सवः ***

**राजद्राजवैभवविभासुरसकलनृप-**
**मण्डलविमलमणिकुण्डलवरायसे**
**सम्पद्भोगभाजन-महाजनसुरीतिनीति-**
**निपुणनरेन्द्रमौलिमालातरलायसे।**
**देशवरभारतपुरातननरेशकुल-**
**कीर्तिकथाकौमुदीचकासदलिकायसे**
**कच्छवंशवारिजदिनेश नृपमण्डलेश**
**माधवनरेश भूमिभालतिलकायसे॥ ६॥**

राजमानेन राजवैभवेन विभासुरस्य (दीप्तिशालिनः) सकलमण्डलस्य विमलमणि-कुण्डलवर इव आचरसि। कुण्डलवरशब्दादाचारार्थे क्यङ् एवं सर्वत्र। राजमण्डलस्य शोभासंपत्त्यर्थं त्वं कुण्डलस्थानीयोऽसीत्यर्थः। राजसंपत्त्युपभोगस्य भाजनभूताः, महाजनानां सुरीतिनीतिषु निपुणाश्च ये नरेन्द्रमौलयः (नृपश्रेष्ठाः) तेषां मालायाः तरल इव मध्यमणिरिवाचरसि। 'तरलो हारमध्यगः' अमरः। भारतस्य पुरातननरेशकुलानां या कीर्तिकथारूपा कौमुदी तया चकासत् अलिकं (ललाटम्) यस्य तादृश इवाचरसि। प्राचीनराज-वंशप्रथितया कीर्तिचन्द्रिकया ते भालं देदीप्यमानमित्यर्थः। त्वं भारतप्रसिद्धराजवंशेषु कीर्तिशाल्यसीति यावत्। भूमेः सौभाग्यसूचकस्त्वं सिन्दूरबिन्दुरसीति भावः॥६॥

*** श्रीमन्माधवेन्द्रस्य जन्मोत्सवः ***

**राकारजनीशरुचिराजत्कीर्तिरोचिरये!**
**सा का हरिदस्ति ? यतो नैव समादीयसे**
**कोऽसौ कविपुङ्गवोऽस्ति येन सर्वसंमानित-**
**मेदिनीन्द्रमालामौलिदेशे न निधीयसे।**
**मञ्जुनाथ निःसमदयालुतागुणेन मनाक्**
**जयपुरनगरराजपीठे समुदीयसे**
**माननीयमञ्जुमहिपालमौलिमध्यमणे!**
**श्रीमाधवसिंह धर्मवीरगणे गीयसे॥ ७॥**

अये! पूर्णिमाचन्द्ररुचिवत् राजमानं कीर्तिरोचिः (कीर्तिप्रकाशः) यस्य तत्सम्बुद्धौ। 'रोचिः शोचिरुभे क्लीबे' अमरः। सा कीदृशी हरित् (दिक्) अस्ति यतो यस्यां न समादीयसे, अभ्यर्थनया नाभ्युपगम्यसे। मेदिनीन्द्रमालाया राजश्रेण्याः मौलिदेशे, सर्वश्रेष्ठस्थाने इत्यर्थः। समुदीयसे, उज्जृम्भसे। महिपालानां मौलेः मध्यमणिस्थानीय! धर्मवीरसमूहे त्वं जनैः कीर्त्यसे ॥७॥

**केरलकलिङ्गकच्छकेकयसुकुन्तलेषु**
**केलिमाकलय्य कामरूपानभ्युपागता**
**सिन्धुसिन्धुवारसुह्मसिंहलसुसंगतासौ**
**सौगतसुराष्ट्रस्त्रुघ्नसाकेतानुपानता।**
**मञ्जुनाथ मालवमलयमहाराष्ट्रमद्र-**
**मत्स्यमेरुकच्छमरुमुरलानुसंगता**
**श्रीमज्जयनगनरेन्द्र! नैकधामिनी ते**
**कुमुदकलाच्छकीर्तिकामिनी मनोमता॥ ८॥**

सिन्ध्वादिभिः सुसंगता मिलिता। सौगतादीन् उपानता प्राप्ता। न एकं धाम यस्याः अर्थात् नानादेशभ्रमणशीला, ते कुमुदकलावत् अच्छा स्वच्छा कीर्तिरूपा कामिनी सर्वेषां मनोमतास्ति। इयं कीर्तिरूपा कामिनी सर्वानुपसरति, नैकत्र गृहं बद्ध्वा वसति, सर्वेषां च मनोहरणं कुरुते इति महिलाजन-विरुद्धचेष्टया यद्यपि निन्दा वाच्या, परं ते कीर्तिर्दिग्दिगन्त-विश्रान्ता। आकर्षकतावशात्स्थानात्स्थानान्तरेषु लोकैः प्रख्यायते। सर्वे च तां श्रुत्वा मनसि मोदन्ते इति वर्ण्यस्य महाप्रभावत्वं ध्वन्यते। राजविषया रतिश्च चरमं व्यङ्ग्यम्॥ ८॥

**वङ्गैरभिसंगता कलिङ्गैः किल कीलिताऽसा-**
**वङ्गैः परिरभ्य परामाभामभिपद्यते**
**कोसलेषु केलिं कलयित्वा गता कुन्तलेषु**
**साभिलाषं सिंहलेषु सेयं प्रतिपद्यते।**
**मञ्जुनाथ मूर्च्छन्ती मदान्धमगधानां पथि**
**मञ्जुमालवानां मार्गमध्यादवपद्यते**
**हंहो जयनगरनरेश नित्यनव्या तव**
**कीर्तिकथाकान्ता श्रियं भव्यामुपपद्यते॥ ९॥**

वङ्गैः (देशैः) अभिसंगता मिलिता। कीलिता अवरुद्धा, तत्र ते कीर्तिः सुस्थिरेति व्यङ्ग्यम्। अङ्गदेशैः सह परिरभ्य आलिङ्ग्य परां आभाम् (शोभाम्) प्राप्नोति। तत्र ते विशेषेण ख्यातिरिति ध्वनिः। शौर्यमदमत्तानां मगधानां मार्गे मूर्च्छन्ती सर्वत्र व्याप्नुवन्ती। मालवानां च मार्गमध्यादेव अवपद्यते परावर्तते। कीर्तिकथारूपा कान्ता प्रशंसनीयां शोभां प्राप्नोति। अनेकैः

सह संगतिः, परिरंभः, केलिः, उपगमः, मधुमत्तानां सहवासे मूर्च्छनादिकं कान्ताजनस्य पक्षे अशोभनम्, परमेतच्चित्रम् (हंहोपदद्योत्यम्) यत् एवंसत्तायामपि कीर्तिकथारूपा कान्ता शोभामेव प्राप्नोति न जनैर्वचनीयताम्। किञ्च-एवंचरित्रायाः शीघ्रमेव यौवनापगमात्पुराणता भवति, परं सेयं कान्ता तु नित्यनव्या!! कीर्तिर्व्यापकत्वम्, नानाविषयकतया नित्योपबृंहितत्त्वं च व्यज्यते। वर्ण्यस्य नानादेशेषु ख्यातत्वम् अनेकविषयेषु प्रशंसनीयत्वं च चरमं व्यङ्ग्यम्॥९॥

**आशिषः**

**विलसदतन्द्रचन्द्रचन्द्रिकानुकारिणीयं**
**कीर्तिकान्तकामिनी ते गाहते दिगन्तरम्**
**राजद्राजललक्ष्मीलास्यलीलया ललिततम!**
**तव तु सुधर्मकर्म मण्डति हृदन्तरम्।**
**विबुधविमण्डिते सुधर्माऽऽस्थानपण्डितेऽस्मि-**
**न्निन्द्रे माधवेन्द्रे वापि दृश्यते किमन्तरम्**
**कच्छकुलकैरवकलानिधिविलासधर**
**माधवनरेन्द्रवर विहर निरन्तरम्॥ १०॥**

विलसन् अतन्द्रः (प्रोज्जृम्भमाणः) यश्चन्द्रस्तस्य चन्द्रिकाया अनुकारिणी ते कीर्तिरूपा कान्ता (मञ्जुला) कामिनी दिगन्तं व्याप्नोति। राजन्त्याः राजलक्ष्म्याः या लास्यलीला सर्वदा त्वत्सविधे नृत्यम् तया अत्यन्तसुन्दर! तव हृदयदेशं सुधर्मस्य कर्म कर्तव्यं मण्डयति। सर्वदा लक्ष्मीविलासशाल्यपि हृदये धर्मकार्याय स्थानं ददासीत्यर्थः। मण्डतीत्यत्र इदित्वाद्वैकल्पिको णिच्। इन्द्रो विबुधैर्देवैर्मण्डितः सुधर्मायास्तन्नाम्न्याः सभाया आस्थाने च पण्डितः। माधवेन्द्रस्तु विबुधैः पण्डितैर्मण्डितः, सुधर्मस्य आस्थाने अनुष्ठाने पण्डितः। अथवा सुधर्मास्थानं धर्मसभा तस्याः पण्डितः। कच्छकुलरूपस्य कैरवस्य कृते कलानिधेर्विलासधारिन्!॥ १०॥

**पूर्वं भानुवंशसूतसगरनरेन्द्रसुत-**
**मुक्तये भगीरथ आनिन्ये गाङ्गशम्बरम्**
**संप्रति करालकलिकालपरिखिद्यमान-**
**निखिलजनानामपि पावनाय निर्भरम्।**
**तस्मिन्नेव वंशे लब्धजन्मा पुण्यकर्मा यो हि**
**हरिपदगङ्गाबन्धमुद्दधार सादरम्**
**धार्मिकधुरन्धर-धरेशकुलमौलिरेष**
**माधवनरेश इह नन्दतु निरन्तरम्॥ ११॥**

भानुवंशे सूतानां सगरनरेन्द्रस्य सुतानां मुक्तये भगीरथः पूर्वं गाङ्गं शम्बरं जलम् आनिन्ये भूमौ आनिनाय। संप्रति कलिना खिद्यमानानां सकलजनानां निर्भरं पावनाय, तस्मिन्नेव वंशे (भानुवंशे) लब्धजन्मा यः (माधवेन्द्रः) हरिपदगङ्गाया बन्धं जलावरोधम् उद्‌दधार अपनिनाय। स एष धार्मिकेषु धुरन्धरस्य भूमिपतिकुलस्य मौलिभूतः माधवनरेशो नन्दतु। भानुवंशजेन भगीरथेन पूर्वं गङ्गा यथा आनीता। तथैव भानुवंशजेन अनेनापि बन्धमपनीय हरिपादुकास्थाने गङ्गा आनीता। 'नरोडा बन्ध' कथा सूच्यते (Narora Ganges Band) ॥ ११ ॥

**सो. - जय जय राजदनूप-जयपुरपरिपालनपटो।**
**श्रीमन्माधवभूप भानुवंशवारिधिविधो! ॥ १२ ॥**

राजतः अनूपस्य जयपुरस्य पालने पटो! ॥१२ ॥

**दो. - भानुवंशभव्योपवन-कलितकल्पतरुरूप।**
**वर्षकोटिमव मेदिनीं श्रीमन्माधवभूप ॥ १३ ॥**

भानुवंशरूपे भव्योपवने कलितं कल्पतरोः रूपं येन। वर्षकोटिं यावत् मेदिनीम् अव ॥१३ ॥

**जयनगरीसीमन्तमणि - माधवसिंहमहीप।**
**जय जय सकलसुनृपसदसि भानुवंशमणिदीप ॥ १४ ॥**

जयनगरीसीमन्ते (केशपाशे) सौभाग्यमणिरूप! सीमन्तमणिपदेन सह माधव-सिंहपदस्य कर्मधारयः। सकलानां सुन्दरनृपाणां सदसि जय जय ॥ १४ ॥

**श्रीमद्‌दिनकरकुलजलधिशारदशशधररूप।**
**जय जयपुरपालनपटो श्रीमन्माधवभूप ॥ १५ ॥**

दिनकरकुलरूपस्य जलधेः कृते शारदचन्द्रस्वरूप! ॥ १५ ॥

* श्रीमन्माधवेन्द्रस्य गुणस्मरणम् *

**राजते स्म राजद्राजतेजोद्युतिरम्या यस्य**
**मूर्तिर्दुर्विदम्या सर्वसद्भिः स्वतः संमान्या**
**कुत्राप्यभूद्यात्रा राजसज्जासहकारेणैव**
**यस्य हरिद्वारे सक्तिरासीत्काचिदेवान्या।**
**शिञ्जितैरगुञ्जन्नित्यमन्तःपुरमाला यस्य**
**सुकृते विशाला रुचिरासीन्नयसामान्या**
**राजतया विविधविलाससुखसेवेऽप्यभू-**
**न्माधवेन्द्रदेवे कापि राजश्रीरसामान्या ॥ १६ ॥**

राजन्ती या राजतेजसो द्युतिः (शोभा) तया रम्या यस्य (माधवेन्द्रस्य) मूर्तिः क्षात्रतेजोवशात् परिणाहमाहात्म्याच्च दुर्विदम्या अनभिभवनीया, अत एव सर्वसज्जनैः स्वत एव संमाननीया राजते स्म। अलौकिकतेजोवशात् वपुःपरिणाहाच्च कश्चिदसामान्यः पुरुष इति स्वतः प्रतीयते स्मेति भावः। राजसज्जा राजोचितसंभारस्तत्सहकारेण। महासमारोहेणैव यस्य यात्राऽभवदित्यर्थः। काचिदन्यैव इतरेषु भूपेष्वलभ्यैव आसक्तिरासीत्। यस्य अन्तःपुरमालाः शिञ्जितैः सुन्दरीणां भूषणझणत्कारैः अगुञ्जन्। सुन्दरीसौख्य-विलासमसेवतेत्यर्थः। एवं सत्यपि सुकृते धर्मे नयसामान्या नीतिसहकृता रुचिः प्रीतिरासीत्। सुकृतमपि न नीतिमुल्लङ्घ्यासेवतेति 'नयसामान्या' पदस्याकूतम्। राजतया राजभावात् विविधविलाससुखं सेवते इति विविधविलाससुखसेवः, कर्मण्यण्॥१६॥

**राजोचितमुष्णीषं दधार मौलिदेशे सदा**
**देशोचितवेषे वर्तनेऽस्य रुचिरीक्षिता**
**मोटरमपास्य सदा वाजिरथगामी बभौ**
**नव्यविभामीलितेन नाऽतुष्यन्महीक्षिता।**
**भागवतपाठ-वरणादौ दृढश्रद्धाऽभव-**
**द्धूमजलयानादौ च शान्तिः पूर्वमीक्षिता**
**श्रीमन्माधवेन्द्रमहिपाले नव्यकालेऽप्यहो**
**प्रायः प्रत्नकालेक्षिता रीतिः प्रतिवीक्षिता॥ १७॥**

निजदेशस्य उचितो यो वेषः वर्तनं व्यवहारः तस्मिन् रुचिर्दृष्टा। नव्य-'न्यू लाइट' तया मीलितेन कुण्ठीकृतेन महीक्षिता भूस्वामिना न अतुष्यत्। ये सामन्तादयो वैदेशिक-वेषव्यवहारानन्वगच्छन् न तेभ्योऽप्रीयतेत्यर्थः। महीं क्षियतीति महीक्षित्, क्विप्। वरणं जप-पाठादौ ब्राह्मणानां नियतीकरणम्। धूमयानम् बाष्पशकटिः जलयानं पोतः 'जहाज'। एतदादीनामारोहणकाले पूर्वं शास्त्रोदिता शान्तिः (स्वस्त्ययनम्) ईक्षिता। एतद्वृत्तान्तश्चरित्रे विलोकनीयः। नवीनेप्यस्मिन् काले, माधवेन्द्रविषये (माधवेन्द्रान्तः) प्रत्नकाले प्राचीनसमये ईक्षिता दृष्टा रीतिर्मर्यादा वीक्षिता। नवीनेप्यस्मिन् युगे स हि पुरातनकाले दृष्टया मर्यादया व्यवाहरदित्यर्थः॥ १७॥

## * श्रीयुवराजमहोदयस्य दत्तकसंस्कारः *

**दो. - 'ईसरदा-सरदार'कुल 'मोरमुकुट'मभिवीक्ष्य।**
**स हि युवराजमवातनोन्निभृतं मनसि परीक्ष्य॥ १८॥**

'ईसरदा' स्थानस्य यत् 'सरदार' कुलं भूस्वामिवंशः तस्य मयूरमुकुटायितम् (शिरोमणिम्) अभिवीक्ष्य। युवराजस्य पूर्वकालिकं 'मोरमुकुटसिंह' इति नामापि। तं च बहुकालं यावत् गुप्तरूपेण मनसि परीक्ष्य, तस्य गुणदोषान् प्रच्छन्नरूपेण सम्यक्परीक्ष्येत्यर्थः। स (माधवेन्द्रः) युवराजम् चकार।

[परमगभीराशयः श्रीमाधवेन्द्रो बहोः कालात्पूर्वमेव मनसि युवराजं स्थिरीचकार, परं नानाविधैर्नैतिककारणैः सर्वेषु तत्प्रकटीकरणं नोचितं मेने। १९१६ तमे ख्रिष्टीयवत्सरे अप्रेलमासस्य

प्रथमतारिकायां सम्राट्प्रतिनिधिर्लार्डहार्डिङ्गमहोदयो मोहमयीं गच्छन् मध्येमार्गं माधवपुरेपि विशश्राम। तत्र श्रीमान्माधवेन्द्रो 'विमानभवने' फलभोजनार्थं तं न्यमन्त्रयत्। तदवसरे निजनामाङ्कितलाक्षामुद्रया मुद्रितमेखमेकं पत्रपुटकं तस्मै समर्पयन्नवदत् यत् समुचितावसरप्राप्तिपर्यन्तमिदमेवमेव सुरक्षितं तिष्ठेदिति। आसीदेतस्मिन्नुत्तराधिकारिणो नाम निर्दिष्टम्। एतावत्कालं भाविनो युवराजस्य गुणागुणौ निभृतं परीक्षते स्म। अनन्तरं तु निजस्यास्वास्थ्यं प्रजानामौत्सुक्यं चावलोक्य अधिककालमेतद्रहस्यगोपनमनुचितं मन्वानो १९२१ तमवत्सरे मार्चमासस्य चतुर्विंशतितारिकायां शुभमहूर्ते शास्त्रीयविधिना युवराजमिमं जग्राह। नियमानुसारं चास्य 'मानसिंह' इति नाम निरदिश्यत] ॥ १८ ॥

**प्रजासु सुमहान् महोत्सवः**

**प्रतिध्वनिता द्यौरद्य दुन्दुभिनिनादभरै-**
**रिन्दुभिरिवेदं तमो दीपैर्विनिरस्यते**
**चञ्चति चतुर्दिक् प्रकटासौ मञ्जुमोदघटा**
**नृत्यन्ती नटाली पौरलोकैः परिशस्यते।**
**मञ्जुनाथ मोदभरमत्तमानसेन भृशं**
**महितमहोत्सवेऽत्र सुयशः प्रशस्यते**
**राजमानमाननीयमण्ड विराजमान!**
**श्रीमद्युवराज-मानसिंहसहितस्य ते॥ १९॥**

द्यौः आकाशम्। इन्दुभिरिव (महाप्रकाशशालिभिः) विद्युद्दीपैः इदं तमः निरस्यते। चञ्चति प्रचलति। नट्यश्च नटाश्च नटाः तेषां आली पङ्क्तिः। तृतीयचतुर्थचरणयोरेकवाक्ये-ऽन्वयः। हि राजसम्मानरूपेण माननीयेन मण्डने विराजमान हे मञ्जुनाथ हे श्रेष्ठस्वामिन् (माधवेन्द्र!) अत्र महोत्सवे मोदभरमत्तेन मानसेन श्रीमद्युवराज-मानसिंहसहितस्य ते सुयशः प्रशस्यते ॥१९॥

**द्योतन्ते दिशासु जयघोषा माधवेन्द्रमणे-**
**रखिलदिगन्ते कापि कौमुदी विडम्ब्यते**
**विजयपताका-चारुतोरण-वराभरणैः**
**सा काचन लक्ष्मीरद्य पुरमवलम्बते।**
**मञ्जुनाथ मानसे न माति मञ्जुमोदो नृणां**
**वैदुषीविनोदो वरकविषु विजृम्भते**
**श्रीमद्युवराजमानसिंहमहिमानमाप्य**
**गरिमानुगोयं हर्षजडिमा विजृम्भते॥ २०॥**

माधवेन्द्रो मणिरिवेति माधवेन्द्रमणिस्तस्य। अखिलदिगन्ते सर्वत इत्यर्थ:। कापि अनिर्वचनीया कौमुदी विडम्ब्यते अध:क्रियते। महाप्रदीपानां प्रकाशस्याग्रे चन्द्रिकापि धिक्क्रियत इति भाव:। वराभरणै: वरै: श्रेष्ठैराभरणै:। अवलम्बते आश्रयति। नृणां मानसे मञ्जुमोदो न माति। श्रेष्ठकविषु इमं महोत्सव-मधिकृत्य वैदुष्यविनोदो विजृम्भते। कवय: कवितावैदुष्यं प्रकाशयन्तीत्यर्थ:। 'जभी जृभि' गात्रविनामे। मानसिंहसकाशात् महत्त्वम् आ-आप्य गरिम्णानुगतोयं हर्षजनितो जडिमाऽद्य विजृम्भते। आनन्दातिरेकेण सर्वे जडीभूता इवेत्यर्थ:। 'महिमा' 'गरिमा' 'जडिमा' इति त्रयाणामेकत्र समावेशश्चमत्कार:। किञ्च स्वशक्तिमुल्लङ्घ्यापि हर्षातिरेकवशात् कतिपयमासपर्यन्तं सर्वेषामेव प्रजाजनानां व्ययाधिक्यसाध्यस्य महोत्सवस्य प्रवाहरूपेण निर्वाहो जडतैवेति केषांचिदाकूतम्॥ २०॥

**विश्वग्विततासौ तव धर्मदयादक्षिणता**
**कासौ वा प्रजास्ति याभिनन्दति न ते सदा**
**किं बहुना पारेपारावारमपि सुप्रथिता**
**ते वै सदाचारिता सा सुकृतिसुखप्रदा।**
**मञ्जुनाथ हंहो नरनाथ भूरिवर्द्धसेऽद्य**
**श्रीमद्युवराजेनार्थयामो धृतसंमदा**
**राममञ्जुमालामणिमाधवेश महाराज**
**रञ्जय धरित्रीं युवराजमण्डितो मुदा॥ २१॥**

या प्रजा ते तव (त्वाम्) नभिनन्दति असौ का? अपि तु सर्वैव अभिनन्दति। तवेति शेषे षष्ठी। पारेपारावारम् समुद्रपारे इङ्गलेण्डादिषु तव सदाचारिता प्रसिद्धा। महाराजस्येङ्गलेण्डयात्रा द्रष्टव्या। हे नरनाथ अद्य युवराजेन भूरि वर्द्धसे, अत एव धृतसम्पदा वयम् अर्थयामो यत्-'राज्ञां' मञ्जुर्या माला (समूह:) तस्या मणिस्थानीय हे माधवेश महाराज युवराजभूषितस्त्वं पृथिवीं प्रीणय॥ २१॥

**दो. - चिरंजीव जय जय सदा रविकुलकीर्तिनिकेत।**
**महाराज माधवमहिप, श्रीयुवराजसमेत॥ २२॥**

* * *

## वर्तमानमहाराजः श्रीमान्मानसिंहदेवः

**दो. - सुकृतैस्तस्मिन्नमरतां गते स्वर्गिसौख्याय।**
**श्रीमान्मानमहीपतिर्जयपुरराज्यमियाय॥ २३॥**

तस्मिन् (श्रीमाधवेन्द्रे) निजपुण्यैरमरतां प्राप्ते (देवलोकं गते सति) [एकोना-शीत्यधिकैकोन-विंशतिशततमे वैक्रमवत्सरे १९७९ आश्विनकृष्णप्रतिपदि] मृत्वाप्यमरत्व-प्राप्तिर्विशेष:। प्रकृते विक्रमवर्षे आश्विनकृष्णद्वादश्यां मानमहाराजो जयपुरस्य राज्यम् इयाय प्राप॥ २३॥

सो. - सिंहासनमध्यास स हि समुचितसंभारतः।
कर्णे कलयामास विजयध्वनिममृतध्वनिम्॥ २४॥

स मानसिंहमहीपतिः राजोचितसम्भारेण (छत्र-चामरादिशोभाबन्दिमागधादिजयध्वनिसामन्ताद्युपायनादिना) अध्यास अध्यासांचक्रे। अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्। अस्यतेर्वा, धातूनामनेकार्थत्वात्। स (महीपतिः) बन्द्यादिकृतं जयध्वनिं राजभक्तानां कर्णे अमृतायितं ध्वनिं कलयामास। किञ्च 'अमृतध्वनि'च्छन्दोप्यग्रेतनं सूच्यते॥ २४॥

अमृतध्वनि

चञ्चच्चन्दिरविमलकुलकीर्तिविमञ्जुलरूप।
राज सदा सुखसम्पदा राजज्जयपुरभूप॥
राजज्जयपुररज्यज्जनभर सज्जजयकर।
सिध्यद्धिषण विशुध्यद्धरणिविबुध्यद्धृतिधर॥
विच्छच्छलपरिगच्छच्छमलसदच्छच्छविकिर।
न्यञ्चच्चपलमुदञ्चच्चरितसुचञ्चच्चन्दिर॥२५॥

चञ्चत् (राजत्) चन्दिरवत् (चन्द्रवत्) विमला या कुलकीर्तिः तया मञ्जुलरूप! हे राजज्जयपुरस्य भूप सदा सुखसंपन्त्या राज। अग्रे जयपुरभूपस्य संबोधनानि-- राजत् जयपुरं यस्मात्तत्संबुद्धौ। अनुरज्यन्तः जनभरा येन। शस्त्रादिसज्जया सज्जतां (न तु निःशस्त्राणाम्) वैरिणां जयकर। सिध्यन्ती धिषणा (बुद्धि) यस्य। खलाद्यपनयनेन विशुध्यन्ती या धरणिस्तस्याः विबुध्यन्तीम् (प्रस्फुरन्तीम्) धृतिम् (धैर्यम्) धरति सम्पादयति तत्संबु.। रक्षकं त्वामासाद्य पृथिव्या धृतिर्भवतीत्यर्थः। विच्छच्छलम् (गच्छत् छलं यस्मादेवं यथा स्यात्तथा, निष्कपटमित्यर्थः) गच्छत् शमलम् (मलम्) यस्याः सकाशात् एवंविधां सदच्छाम् (अतिनिर्मलाम्) छविं शोभां किरति प्रसारयति तादृश। न्यञ्चच्चपलम् न्यञ्चन्तः नीचीभवन्तः चपला यत्रैवं यथा स्यात्तथा, उदञ्चत् उदीयमानं चरित्रमेव चञ्चन् शोभामानश्चन्द्रो यस्य, हे चन्द्रावदातचरित्र! इत्याशयः॥ २५॥

युध्यद्धरिमुखगर्जनातर्जितशत्रुसमूह ।
मानभूप संवर्द्धसे धृष्यद्ध्वजिनीव्यूह॥
धृष्यद्ध्वजमुपरुष्यत्सुभटविशुष्यद्धृतिकर।
कुप्यद्धरिहयदृप्यद्वलचयतृप्यद्भुजभर॥
धावद्भयपविरावध्वनिमनुधावद्धृतसुख।
क्रुध्यद्वलभरविध्यद्विशिखनियुध्यद्धरिमुख॥ २६॥

युध्यन् यो हरिः (सिंहः) तस्येव मुखगर्जनया हे तर्जितशत्रुसमूह! अत एव धृष्यन् प्रगल्भीभवन् ध्वजिनीव्यूहः (सैन्यसमूहः) यस्य तादृश हे मानभूप! त्वं संवर्द्धसे। अग्रे मानभूपस्य विशेषणानि-- धृष्यद्ध्वजम् (प्रगल्भीभवन् [अधृष्यतां गच्छन्] ध्वजो यत्रैवं यथा स्यात्तथा) उपरुष्यताम् (अभिभवेन

क्रोधं कुर्वताम्) सुभटानां विशुष्यन्तीं धृतिं करोति तत्संबु.। स्वस्य जयध्वजं निर्भयं रक्षन् अन्येषां सुभटानां धैर्यं त्वं विशेषयसीत्याशयः। कुप्यद्हरिहयस्येव (इन्द्रस्येव) दृप्यतां शत्रूणां बलचयेन तृप्यन् भुजभरो यस्य तादृश! दर्पिणां वैरिणां बलभरं प्राप्यैव तव भुजसारस्तृप्यतीति भावः। धावतां हयपानाम् (अश्वपतीनाम्) विरावध्वनिम् अनुधावन् तथा धृतसुखश्च तत्संबुद्धौ। धावतामश्वारोहाणां नादमाकर्ण्य तान् अनुधावसि तेनैव च त्वं सुखं यासि, वीरभावात्, इत्याशयः। क्रुध्यद्बलभरे (सैन्यसमूहे) विध्यद्विशिखः (शरीरं विध्यन् बाणो यस्य, बाणविद्धशरीर इत्यर्थः) अत एव क्रोधातिशयेन नियुध्यन् यो हरिः (सिंहः) तस्य मुखमिव मुखं यस्य तत्संबु. ॥२६॥

**गुञ्जज्जवधरधनुरुरसि धरन् युद्धरभसेन।**
**मानभूप विद्योतसे तर्जज्जवनहयेन॥**
**तर्जज्जवभृतसर्जज्ज्वलनसुगर्जज्जनहर।**
**खर्जज्जयभरमर्जज्जनचयसज्जज्जयकर॥**
**मज्जज्जरणसलज्जज्ज्वलितविरज्यज्जयभर।**
**खञ्जज्जननविमुञ्जज्जनगणगुञ्जज्जवधर॥२७॥**

गुञ्जत् (शब्दायमानम्) जवधरं च धनुः युद्धरभसेन उरसि धरन् हे मानभूप! शत्रून् तर्जता जवनेन (जवयुक्तेन) हयेन विद्योतसे। मानभूपस्य विशेषणानि परस्परं तर्जताम्, पलायनाय जवभृतानां तथा सर्जज्ज्वलनानाम् [सर्जन् पीडाम् अर्जयन् ज्वलनो येषां कृते तेषाम्, हृदये पराजयाग्निना पीडितानामित्यर्थः 'अर्ज षर्ज' अर्जने।] अत एव (क्रोधेन) गर्जतां 'शत्रु'जनानां संहर्तः! खर्जज्जयभरं खर्जन्तं शत्रून् व्यथयन्तं जयभरम् अर्जतो जनचयस्य सज्जं जयं करोति तादृश! यैर्बहुषु युद्धेषु प्रशंसनीयो विजयः प्राप्तस्तेषामपि वीराणां सज्जम् (स्वयं प्राप्तम्) जयं त्वं करोषीति तात्पर्यम्। 'खर्ज पूजने च' चाद् व्यथने। मज्जतां स्वयं पिपतिषतां भटानां जरणात् (पराजयादिति यावत्) सलज्जाः क्रोधेन ज्वलिताः, अत एव विरज्यन्तो ये प्रतिपक्षाः तेषां विजयं भरति सम्पादयति तादृश! खञ्जत् पराजयेन विफलीभवत् जननं जन्म येषाम्, अत एव विमुञ्जतां क्रोधेन चीत्कारशब्दं कुर्वतां जनगणानां मध्ये गुञ्जन्तं जवं धरति तादृश! 'गज' आरभ्य 'मुजि' पर्यन्ताः शब्दार्थाः। अत्र जवं धरतीत्यादिविग्रहप्रदर्शनं भावार्थसूचनमात्रं न वास्तवो विग्रहः। 'कर्मण्यण्' भयात्॥ २७॥

**भास्वत्कुलधरधरणिपतिमण्डन मानमहीप।**
**जय जयपुरपालनचतुर उद्यद्दिनमणिदीप॥**
**उद्यद्दिनमनुयुध्यद्रिपुदलबुध्यद्बलभर।**
**तिर्यग्भ्रकुटिविनिर्यद्विशिखविजीर्यद्रिपुहर॥**
**भ्राजद्विभवविराजज्जयपुरराजद्युतिकर।**
**शश्वद्रुचिरविवस्वद्रुचिकरभास्वत्कुलधर॥२८॥**

भास्वतः सूर्यस्य वंशधरा ये धरणिपतयस्तेषां मण्डनभूत! उद्यन्तं दिनमणिं सूर्यं दीपयति स्वकीर्तिप्रसारणात् अधिकाधिकं प्रकाशयति तादृश हे मानमहीप त्वं जय। अग्रे मानमहीपस्य संबोधनानि

उद्यत् दिनम् अनुदिनोदयम् अनुलक्ष्य युध्यति रिपुदले प्रबुध्यन् (उद्दीप्यमानः) बलभरो यस्य तत्संबु.। सायंकाले परिश्रान्ते शत्रुदले सर्वस्यैव पराक्रमः संभवेत् परं दिनारम्भ एव नवोत्साहे शत्रुदले तवैव पराक्रमः प्रबुध्यत इति शौर्यातिशयो द्योत्यते। तिर्यग्भ्रकुटिरेव विनिर्गच्छन् विशिखः (बाणः) तद्द्वारा विजीर्यतां जीर्णत्वं प्राप्नुवतां रिपूणां हर नाशक! तव कुटिला भ्रकुटिरेव बाणो भूत्वा रिपुसंहारे कारणं भवतीत्ययाशयः। भ्राजद्विभवानाम् (सर्वोत्कृष्टवैभवानाम्) जयपुरराजानां द्युतिकर स्वकीर्त्या शोभाकारक! शश्वद्रुचिरं सदा मनोहरं विवस्वद्वत् (सूर्यवत्) रुचिकरं (कान्तिकरम्) यद् भास्वत्कुलं तस्य धर धारक!॥ २८॥*

**श्रीमन्मानमहीन्द्रस्य प्रथमो विवाहमहोत्सवः।**

**[माघ सं. १९८०]**

**प्रासादेषु भासन्ते पताकाः पञ्चरङ्गयुता**
**राकाकान्तिजित्वरः प्रकाशो लाति चेतोयम्**
**नृत्यगीतवादित्रैः प्रतिध्वनिताशेषदिशो**
**भाति जनितामोदोऽद्य नृपतिनिकेतोयम्।**
**मञ्जुनाथ मोदोन्मदमातनु कवित्वभरं**
**वैदुषीविनोदो वर्ण्यवैभवसमेतोयम्**
**जयनगरेन्द्रराजलक्ष्मीपरिणाहमयो**
**मङ्गलविवाहसमारोहः समुपेतोयम्॥ २९॥**

अयं प्रकाशः चेतो लाति गृह्णाति। जनितहर्षः अयं नृपतिनिकेतः (प्रासादः) भाति। मोदेन उन्मदं यथा स्यात्तथा कवित्वभरं कविताप्रवाहम् 'कवित्त'समूहं वा आतनु विचय। वर्ण्यवैभवेन सहितोयं वैदुष्यस्य प्रमोदसमय उपस्थितः। वैदुष्यविनोदार्थं कविता क्रियते परं सर्वत्र वर्णनीयवैभवं नोपलभ्यते। अत्र तु स्वयं जयपुरेन्द्रस्य विवाहः, अत एव लोकोत्तरो वर्ण्यविभवः समुपस्थितोस्तीति भावः। राजलक्ष्म्याः परिणाहः अतिशयस्–तन्मयः॥२९॥

**निर्घोषन्ति दशसु दिशासु राजदुन्दुभयो**
**भाति जनराजिर्विजयोन्मदमुपागता**
**मङ्गलकलश–वरवन्दनीयमालादिभि–**
**र्जाता हर्म्यशालास्वपि सपदि सरागता।**
**मञ्जुनाथ वर्णय महोत्सवमिहोत्सवतो**
**भागधेयतोऽद्य धन्यघटिका समागता**
**जाने राजलक्ष्मीप्रणयेर्ष्यावशा सेयं स्वतः**
**स्थाने महाराज गृहलक्ष्मीः समुपागता॥ ३०॥**

विजयोन्मदं महाराजस्य विजयेन प्रमोदम् उपागता जनपङ्क्तिः वरवन्दनीयमाला-श्रेष्ठा वन्दनमाला तदादिभिः। लोकेषु यथा सरागता (सानुरागता) तथा हर्म्यमालास्वपि सरागता कुसुम्भरञ्जित-वस्त्रधारणात् सरङ्गता जाता। इह उत्सवतः हर्षेण सह उत्सवं वर्णय। यतो भाग्येन सेयं धन्या घटिका 'धन्य घड़ी' आगता। अहं मन्ये यत् राजलक्ष्म्याः प्रणयेर्ष्यावशा सेयं गृहलक्ष्मीः स्वतः समागता इति स्थाने उचितमेव। भवता पूर्वं जयपुरस्य राजलक्ष्मीरधिगता ततश्च पूर्वोपलब्धायां राजलक्ष्म्यामेव मा भूदेकान्तप्रणय इतीर्ष्यावशाद् गृहलक्ष्मीः (महाराज्ञी) सरभसमुपागतेत्याशयः॥ ३०॥

**विवाहोपलक्ष्ये जायमाना राजसभा 'दरबार'**

**हैमोत्तन्तुसंततकुसुम्भवरवस्त्रधराः**
**सामन्ताः सरागमिह संसदि समासते**
**स्वर्णरूप्यमण्डितमहार्हराजदण्डधरो**
**बन्दिनिकरोऽसौ स्तुतिपाठकः प्रकाशते।**
**मञ्जुनाथ मञ्जुरत्नशेखरसुशोभिशिराः**
**श्रीमज्जयपत्तनधरापतिरुपास्यते**
**हेमहृदयंगमविहङ्गमसनाथो ननु**
**जङ्गमनवीनकल्पशाखी प्रतिभासते॥ ३१॥**

हैमैः स्वर्णमयैः उत्कृष्टतन्तुभिः ('कलाबत्तू') संततानां कुसुम्भरञ्जतवस्त्राणां धारकाः सामन्ताः सरागं यथा तथा अस्यां राजसभायाम् आसते तिष्ठन्ति। रञ्जितवस्त्रधारणात् सरागाः (सानुरागाः) इत्युत्प्रेक्षणम्। महार्हाणां राजदण्डानाम् ('आसा' 'चोब') धारकः। रत्नशेखरेण ['सेहरा'] सुशोभि शिरो यस्य सः। मस्तके धृतशेखरं मानभूपं कल्पवृक्षत्वेनोत्प्रेक्षते-- हेममयेन हृदयंगमेन (मनोहरेण) पक्षिणा सनाथो ननु (मन्ये) जङ्गमः कश्चन कल्पपादपः प्रकाशत इति। स्वर्णशेखरो मौलिस्थितहेम-पक्षिस्थानीयः, श्रीमन्मानसिंहस्तु कल्पवृक्षस्थानीय इत्याशयः॥३१॥

विवाहोत्सवस्यैकं पद्यं 'चित्रवीथ्याम्' चतुर्विंशति-
तममप्यवलोकनीयम्।

**वैवाहिकसम्बन्धाज्जोधपुरस्य प्रशंसा**

**आसन् यत्र दुर्गादाससदृशाः प्रवीरा नृपा**
**नीतिरणधीरा अपि पण्डितैः सुसंमता**
**मोगलमहीपतीनां भारताधिकारे मना-**
**गासीन्मारवारे राजलक्ष्मीर्नयसंगता।**
**मञ्जुनाथ माननीयजयपुरपूर्वनृपैः**
**श्लाघनीयवैवाहिकसंबन्धे समादृता**

भारतेतिहासे कीर्तिविन्यासेन मन्यामहे
जोधपुरराजधानी धन्या सेयमुन्नता ॥ ३२ ॥

रणे निपुणा अपि धर्मपालनादिषु पण्डितैः अनुमताः। 'सुसंमताः मोगल.' अत्र विसर्गलोपः। नयसंगता मोगलसम्राडनुगमनरूपया नीत्या मिलिता ॥ ३२ ॥

राज्यशासनस्य पूर्णाधिकारप्राप्त्युत्सवः

(मार्चस्य १४ तारिका १९३१)

कनककिरीटमिव धत्ते सिंहदुर्गमूर्ध्नि
गोपुरयोः करयोरिवाभरणैः संधिनोति
हरितपिशङ्गशोणविद्युद्दीपमालामसौ
मन्ये मणिमालामिव वक्षसि परिष्करोति।
'रामबाग'मार्गगतविद्युद्दीपपङ्क्तिमिमां
काञ्चनकलितरत्नकाञ्चीमिव संचिनोति
शासनाधिकारे स्वयं स्वामिना गृहीताधुना
भूमिरियं प्रीतमना मण्डनानि संतनोति ॥ ३३ ॥

इयं जयपुरभूमिः स्वामिना स्वयं निजशासने गृहीतेति प्रसन्नमनाः सती भूषणानि करोति। तथाहि सिंहदुर्ग ('नाहरगढ')रूपे निजमूर्ध्नि कनककिरीटमिव धारयति। दुर्गोपरिगता विद्युद्दीपमाला किरीटस्थानीयेति भावः। उभयहस्तयोरिव 'सांगानेरी' 'अजमेरी' 'गोपुरयोर्मध्ये' विद्युत्प्रकाशरूपैराभरणैर्लोकान् संधिनोति प्रीणयति। नगरराजमार्गमध्ये या उभयतो नानावर्णा विद्युद्दीपमाला, तां मणिमालामिव वक्षसि मण्डयति। तया वक्षः परिष्करोतीति वक्तव्ये 'तां वक्षसि परिष्करोति' इत्यनेन जयपुरराजमार्गस्य संनिवेश एव तथा मनोहरो यथा विद्युद्दीपपङ्क्तिस्तमासाद्य स्वयं हृदयंगमा भवति, अन्यथा अन्यान्यनगरेष्वपि विद्युत्प्रकाशो भवत्येव परं न तादृशी शोभेति जयपुरस्यातिशयो व्यज्यते। जयपुरमारभ्य 'रामबाग' पर्यन्ता या सुदीर्घा विद्युद्दीपमाला तां प्रदीप्तसुवर्णनिर्मितां रत्नरशनामिव धारयतीत्यर्थः ॥ ३३ ॥

प्रसङ्गतो हिन्दीपद्यानि

चारों ओर छाय रहीं उमडि अनंद घटा
बिज्जुछटा भाय रही सोभा सुख साज कों
वीथि औ बजारन में फहरैं पताकापुञ्ज
राकारुचि राजैं मन सुजन समाज कों।
सोने के सिंहासन पै सोहैं मानसिंह भूप
सोभित सरूप भयो अंबावति राज कों
धींगन धिकार भयौ बैरिन बिकार भयो
शासनाधिकार भयो आज महाराज कों ॥ ३४ ॥

* सिंहावलोकन *

जाकी कीर्तिकौमुदी की जगमें जगत जोति
मन्द होति बिमल बिभा हू सुरराजा की
राजाकी कहा चली अनेक महाराजा जहाँ
पावैं सनमान मान सिद्धि निज काजा की।
का जाकी कहैंगे कला कलित कवीन्द्रपुञ्ज
मञ्जु महिमा है भानुवंशसिरताजा की
ताजा की दिनेसकुलकीर्ति महिमारग में
जगमें सु जय होय मानमहाराजा की॥ ३५॥

बहुत दिनान सों उछाह करैं ऐसे लोग
जैसें चित्त चाह धरें चंद की चकोर हैं
लंदन पधारे तौ अमंद उतकंठा भरे
पच्छिम की ओर कों बिछाये दृगछोर हैं।
मञ्जुनाथ मोद भरे मन में उमाहैं अब
जो जो चित चाहैं वही लहिहैं अथोर हैं
जयपुर की राजभक्त सकल प्रजाकी आज
मानमहाराज की सु ओर दृगकोर हैं॥ ३६॥

दो. - कोविद कुशल कवीन के, हरित होंय हिय-थान।
कञ्चन नित बरसत रहो, मानसिंह मघवान॥३७॥

अधिकारप्राप्तेरनन्तरं प्रथमजन्मोत्सवोपक्ष्ये -
विशेषोत्सवः 'भाद्र. कृ. १३ सं. ८७'

पुष्पितपताकाः प्रस्फुरन्ति हर्म्यमालास्विमा
विद्युद्दीपमाला विलसन्ति गृहजालके
नानाविधकौतुकानि भान्ति चतुरङ्गणतो
द्रव्यपणतोऽथ हया धावन्तेऽन्तरालके।
जन्मदिनमङ्गलमहोत्सवं स्तुवन्ति प्रजा
राजानोपि सूचयन्ति हर्षं तडित्तालके
किमुत समीपादिह द्वीपान्तरदूरतोऽपि
मोदन्ते महीपा अपि ' *मानमहीपालके'॥ ३८॥

गृहजालके गृहसमूहे। चतुरङ्गणतः 'चौगान'। अत्र हि सैनिकानां नानाविधक्रीडाः, घोटकरथशकट्यादीनां धावनानि, चक्रिकाप्रचालनमन्यान्यानि च बहूनि कौतुकान्यभूवन्, यत्र विजयिभ्यः स्वयं महाराजेन पारितोषिकाण्यदीयन्त। अन्तरालके 'रामबाग' प्राङ्गणान्तराले द्रव्यपणं कृत्वा हया धावन्ते ( Horse race )। तडित्तालके विद्युद्यन्त्रद्वारा 'तार' द्वारा। राजानोपि उत्सवोपलक्ष्ये हर्षं प्रकाशयन्ति। ततश्च-समीपात् भारतवर्षादेव किम्, द्वीपान्तरदूरात् लण्डनादिदूरान्तरादपि मानमहीपालविषये ( मानमहीपं प्राप्य) महीपाः प्रमोदन्ते। राजान एव यदा हर्षमुपलभन्ते तदा राजभक्तानां प्रजानां तु किं वक्तव्यमित्याशयः ॥३८॥

**श्रीमन्महाराजस्य कुमारजन्मोपलक्ष्ये कतिपयमासपर्यन्तं जायमानः**

सुमहामहोत्सवः [आश्विन शु. ११ सं. १९८८]

**निर्मलविभासि नीलगगनमनन्तं ततो**
**विस्तृतवितानमितो भाति भूपभवने**
**ताराशतजालं ततो विद्युद्दीपपङ्क्तिरितो**
**ज्योत्स्नासौ ततोस्ति, मानकीर्तिरितो भुवने।**
**मञ्जुनाथ नूतनकलानिधिरुदेति ततो**
**भूपतिकुमार इतो जातो राजसदने**
**शारदामहोत्सवोयमन्यो धन्यधन्यो भाति**
**राजद्राजसूनुजन्मजन्यो जयपत्तने॥ ३९॥**

ततो नैसर्गिके शारदामहोत्सवे। इतः सूनुजन्मरूपे शारदामहोत्सवे। जालं समूहः। राजत् यत् राजसूनुजन्म तस्माज्जन्यः॥ ३९॥

**सौधशिखरेषु मन्दिरेषु चैत्यचत्वरेषु**
**विद्युद्दीपमाला भान्ति जननयनोत्सवे**
**तोरणपताकाः प्रतिगेहद्वारि दत्ता भान्ति**
**परितः प्रमत्ताः प्रजाः प्रायः प्रमदोत्सवे।**
**मञ्जुनाथ नित्यं तारतौर्यत्रिकमञ्जुघटा**
**नानाविधछन्दश्छटा श्राव्या सरसोत्सवे**
**श्रीमन्मानसिंहमहाराज राजचूडामणे!**
**राजसे कुमारजन्ममङ्गलमहोत्सवे॥ ४०॥**

जननयनोत्सवे जनानां नयनयोः कृते उत्सवमुपलक्ष्य (उत्सवार्थमित्यर्थः)। तारं यत् तौर्यत्रिकम् (नृत्यगीतवाद्यम्) तस्य मञ्जुघटा समुचितसमारोहः॥ ४०॥

* श्लोकः *

**श्रीमद्भानुकुलस्य भातु भुवने भूषायितं सद्यशो**

**जायन्तां जयपत्तनस्य जगतामुज्जागरिण्यः प्रजाः।**

**श्रीमान्मानमहीमतिः स्वकृतिभिः संमानमासादये-**

**ज्जीव्याद्राजकुमार एष सुचिरं चेतश्चिरं चन्दयन्॥ ४१॥**

जयपत्तनस्य प्रजाः जगताम् उज्जागरिण्यः सत्कार्येषु जागर्तिं प्रचारयन्त्यः (अग्रगामिन्यः) जायन्ताम् अथवा प्रसिद्धाः, 'उजागर' इति हिन्दी। चन्दयन् आह्लादयन्॥४१॥

होलिकोत्सवे जायमाना प्रथमप्रथमा राजसभा 'दरबार', नगरयात्रा च

(सं.) १९८८

घना.- **सामन्तैः समन्तात्परिवारितो विधाय सभां**

**सौधात्सिन्धुरस्थो नृपोऽभ्येति वरवेलायाम्**

**पिष्टातकवर्षि-सर्वसामन्तेषु यन्त्रजलं**

**क्षिपते प्रजायां चापि रज्यच्चारुचेलायाम्।**

**रङ्गरञ्जिताऽसौ राजवीथी पुष्पवीथीवाऽद्य**

**मादयते लोकान्पौरनारीहावहेलायाम्**

**खेलन्मानभूपरङ्गगोलोत्सिक्तचोलो वद**

**को लोको न भाति हन्त होलोत्सवखेलायाम्॥ ४२॥**

सिन्धुरस्थः हस्तिस्थितः सौधात् अभ्येत बहिरायाति। हस्तिस्थितेषु पिष्टातक ('गुलाल')वर्षिषु सामन्तेषु। रज्यद्वरवस्त्रायां निजप्रजायां चापि महीपतिः यन्त्रजलं विद्युद्द्वारा परिचालितस्य नालिकायन्त्रस्य रङ्गजलं क्षिपति। मदनोद्दीपिका पुष्पवीथी, नारीणां हावयुक्तां हेलाम् (विलासविशेषम्) प्राप्य यथा लोकान्प्रमत्तान्करोति तथा रङ्गरञ्जिततया पुष्पवीथीवालक्ष्यमाणा सेयं वीथी [रथ्या] कौतुकदर्शिनीनां नारीणां हावहेलया नागरिक-लोकान्मादयतीत्याशयः। खेलतो मानभूपस्य ये रङ्गगोलकाः कुमकुमा (गुलालगोटा), तैः अथवा रङ्गेण गुलालगोलकैश्च उत्सिक्तपरिधानीयः को वा न भाति। अपि तु सर्वोपि भातीत्यर्थः॥४२॥

**जयपुरेन्द्रस्य द्वितीयो विवाहमहोत्सवः**

(अप्रेलमासस्य चतुर्विंशी तारिका सन् १९३२)

**पञ्चरङ्गरोचितपताकापुञ्जमञ्जुतमा**

**मण्डितैर्मनोरमाऽद्य मन्दिरैरियं विभाति**

पर्वते विशाला नेयं विद्युद्दीपमाला, किन्तु
सिंहदुर्गरूपे मञ्जुमौलौ मुकुटं दधाति।
नानावर्णविद्युद्दीपलेखा नेह रथ्यागता
रत्नरुचिरेखा मण्डनानामियमुत्पृणाति
नव्यमहाराज्ञीस्वागताय कृतवेषा नून-
मेषा राजधानी वद केषां न मुदं ददाति॥ ४३॥

पञ्चभिः रङ्गैः वर्णैः रोचिता पताका 'पँचरङ्ग झंडा'। मण्डितैर्मन्दिरैः मनोरमा। राजमार्गेषु नानावर्णविद्युद्दीपमाला नास्ति किन्तु इयं धारितानां मण्डनानां रत्नकान्तेर्लेखा उत्पृणाति भृशं सुखयति।

* * *

## जयपुरनरेन्द्रस्य रजतजयन्तीमहोत्सवः

### शिलामयीमङ्गलम्

अम्बरधराधिपतिपूज्यपदपङ्केरुहा
तुङ्गे शैलशृङ्गे स्थिता राजहर्म्यधामिनी
चिबुकनिषण्णहारिहीरकविमण्डिता या
भूषणैर्विभाति मेघगेव दिव्यदामिनी।
मञ्जुनाथ मानमहीपालमनोवाञ्छितदा
चेतसि चकास्ति भावुकानां भवभामिनी
नूनं नरदेवीयति यस्याः पदसेवी पुमान्
सेयं शिलादेवी भातु मे वीक्षणगामिनी॥

अम्बरधरापतिः आम्बेरमहाराजः। राजहर्म्याणि धाम यस्याः सा, तथा च आम्बेरराज-हर्म्यमालायाः प्रमुखभागे स्थितेति सूच्यते। चिबुके निषण्णो यो मनोहारी हीरकः ('हीरा') तेन विभूषिता। मेघगेव दिव्य. - श्यामशिलामय्या यस्याः शरीरे स्वर्णहीरकादिभूषणानि दामिनी (विद्युद्) व विराजन्ते इति भावः। मानमही. - वर्तमानमहाराजस्य मनोऽभीष्टदायिनी, तथा इतिहासप्रसिद्धस्य प्राक्तनमानसिंहमहाराजस्य वरदा तत्प्रतिष्ठापिता च सेयमिति सूच्यते। यस्याः पदसेवी पुरुषः नरदेवीयति नरदेवं राजानमिव आत्मानमाचरति, धराधीशायते इत्यर्थः।

राजज्जयपत्तनधरायां मोदमञ्जयन्ती
गर्वं गञ्जयन्ती मदमत्तदुष्टदुर्हृदाम्

**राजभक्तियुक्तान् प्रजावर्गान्पुञ्जयन्ती पुरे**

**विद्युद्द्युतिसज्जां सज्जयन्ती सर्वसौख्यदाम्।**

**मञ्जुनाथ मानमहीपालयशो गुञ्जयन्ती**

**राजवैजयन्तीं व्यञ्जयन्ती वैरिकम्पदाम्**

**लोकान् रञ्जयन्ती भूरिभीतीर्भञ्जयन्ती भवेद्**

**'रजतजयन्ती' यं जयन्ती सर्वसम्पदाम्॥**

मोदं हर्षम् अञ्जयन्ती प्रकाशयन्ती। दुष्टदुर्हृदां दुष्टानां वैरिणाम्। पुरे नगरे पुञ्जयन्ती पुञ्जीभूतान् उत्सवसमारोहे समवेतान् कुर्वती। विद्युद. - विद्युद्द्युतेः सज्जां सामग्रीं, नगरे विद्युत्प्रद्योतमालां शोभयन्ती, इत्यर्थः। वैरिकम्पदां राज्ञो वैजयन्तीं विजयपताकां संमुखे प्रकाशयन्ती।

## आशीर्वादश्लोकाः

**विजेता वीराणामिह किल विनेता नयविदां**

**विपत्तेर्व्याहन्ता सततमनुमन्ता श्रुतिगिराम्।**

**भृशं भूमेर्भर्ता सरणिमनुसर्ता सुमनसां**

**समानेता श्रीणां जयनगरनेता विजयताम्॥**

श्रुतिगिरां वेदवाणीनाम् अनुमन्ता अनुगामी।

**दुर्दान्तान् दमयन् रमां च रमयन् संनामयन्नुन्नतान्**

**विक्रान्तान् विनयन् जयं च जनयन् संमानयन्सज्जनान्।**

**कीर्तीरुज्ज्वलयन् शुभानि कलयन् प्रेम्णा प्रजाः पालयन्**

**भूयाद्भूमिमिमां सदैव सुखयन् श्रीमानसिंहः कृती॥**

विक्रान्तान् पराक्रमयुक्तान् विनयन् स्वशासने आनयन्।

**वीराणां विजयाय विक्रमपतिर्धैर्याय यादःपति-**

**र्दानाय द्रविणार्थिनां धनपतिर्लाभाय लक्ष्मीपतिः।**

**विभ्राजद्विभवाय निर्जरपतिर्बोधाय वाचस्पति-**

**र्भूयाद्भूभरणाय राघवपतिः श्रीमानभूमीपतिः॥**

श्रीमान् माननरपति-वीरों के विजय के लिये पराक्रम के स्वामी (अथवा विक्रमादित्य), धीरता के लिये समुद्र, दान के लिये धनपति (कुबेर), लक्ष्मीप्राप्ति के लिये लक्ष्मीपति, वैभव के लिये इन्द्र, ज्ञान के लिये बृहस्पति और भूमि पालन के लिये रघुपति हों।

------

# उत्सववीथी

## * वसन्तपञ्चमी *

सम्प्रति वसन्तसूचनामिव समधिगम्य

मनसि मनोजमञ्जुभावः संनिधीयताम्

गायनरसज्ञसूरिसन्ततसमाजमाप्य

श्रवसि वसन्तरागगीतिर्बत नीयताम्।

मञ्जुनाथ सुन्दरीसमाजे नवगीतिच्छटा

रञ्जितपटानां नवशोभेयं प्रतीयताम्

किञ्चिन् न्यञ्चयन्तीव हि पञ्च मीनकेतुशरान्

सपदि वसन्तपञ्चमीयं परिचीयताम्॥ १ ॥

'वसन्तः आगामी' इति सूचनां प्राप्य अग्रे वर्धिष्यमाणस्य मनोजस्य रम्यभावः समीपे क्रियताम्, अनुभूयतामित्यर्थः। अनेन शिशिरर्तौ मान्यमाना सेयं वसन्तपञ्चमी भाविनो वसन्तस्य सूचनामात्रमिति सूच्यते। गायनैः (गायकैः) रसज्ञैः, सूरिभिः (चतुरैः) च संततं व्याप्तं संगीतसमाजं प्राप्य वसन्तरागगीतिः श्रूयताम्। गायनकुलपतीनां गृहे तद्दिनभाविनो वसन्तसंगीतसमाजस्य सूचनमेतत्। नवगीतिच्छटा होलिकासम्बन्धिगीतीनामानन्दः, 'वसन्ती' 'फागुनिया' इति प्रसिद्धानां रञ्जितपटानां शोभा च, तत आरभ्यैव जायते इति प्रतीयताम्। पञ्चसंख्याकान् (समस्तानिति यावत्) कामशरान् रसिकेषु किञ्चित् न्यञ्चयन्तीव नमयन्तीव सेयं वसन्तपञ्चमी। होलिकाद्युत्सवेषु कामबाणाः पूर्णतया रसिकसमाजे संचलिष्यन्ति। वसन्तपञ्चम्यां तु ते कामिलक्ष्ये किञ्चिदावर्जिता भवन्तीति वसन्तारम्भः सूचितः॥१ ॥

## * सूर्यसप्तमीमेलकः *

तत्र मेलकानां संनिवेशक्रमो निदर्श्यते

पूर्वं हस्तिनः

काञ्चनकलिततन्तुसंततवसनधराः

कन्धरास्वमन्दहेमशृङ्खला विभासन्ते

चारुदन्तमण्डले विभासितवलयभरा

झङ्कृतिकरा ये हेमकिङ्किणीभिरायन्ते।

मञ्जुनाथ लम्बमानमुक्तामणिनिकरधरा-

मलिके सुवर्णश्रियं दधतः प्रकाशन्ते

तुलितधरित्रीधरा गण्डमदवारिधरा

अम्बरधराधिपतिकुञ्जरा विराजन्ते ॥ २ ॥

सौवर्णतन्तुभिः ('कलाबत्तू') व्याप्तानां ('कारचोबी'कार्यखचितानाम्) वसनानां धारकाः। कन्धरासु ग्रीवासु। दन्तेषु विभासितः सवर्णवलयसमूहो येषाम्, हस्तिनां दीर्घेषु दन्तेषु मध्ये मध्ये सुवर्णवलयाः परिधाप्यन्ते तद्युक्ता इत्यर्थः। हेमकिङ्किणीभिः सुवर्ण-घण्टिकाभिर्झङ्कारकराः ये आयन्ते आगच्छन्ति। आ-अय्। अलिके ललाटे लम्बितमुक्तासमूहां- सुवर्णश्रियं ('सिरी' हस्तिनः शिरोभूषणम्) धारयन्तः गण्डयोः कपोलयोर्मदजलधारकाः ॥२ ॥

गर्वभराच्छुण्डादण्डमुपरि नयन्तो मुहु-

श्चण्डकरमण्डलविभासं स्थगयन्तेऽमी

नानावर्णचित्रगण्डमण्डलविकासवहा

धातुरङ्गशालिशृङ्गशोभां दर्शयन्तेऽमी।

मञ्जुनाथ मञ्जुमदनिर्झरं क्षरन्तो मुहुः

संमुखे विशालं कर्णतालं दोलयन्तेऽमी

मन्ये पक्षशातकपुरन्दरविपक्षधराः

पक्षधराः पर्वता इतीव सूचयन्तेऽमी ॥ ३ ॥

चण्डकर.--सूर्यमण्डलप्रकाशं स्थगयन्ति आच्छादयन्ति। नानारङ्गैश्चित्रितस्य कपोलमण्डलस्य शोभाधारिणः अमी गैरिकादिधातूनां रङ्गैः शोभितानां शृङ्गाणां शोभां दर्शयन्ते, अग्रे उत्प्रेक्षिष्यमाणस्य पर्वतत्वस्य साधकम्। इमे कर्णतालं न दोलयन्ति किन्तु द्वौ पक्षौ प्रकम्प्य - 'वयं पक्षच्छेदकस्य इन्द्रस्य विरुद्धपक्षधारिणः पक्षधराः पर्वताः स्मः' इति सूचयन्ति ॥३ ॥

प्राप्ता द्वारसीम्नि मत्ता मौलिमवघूर्णयन्ति

चूर्णयन्ति चक्रमरेः संगरे यदि व्रजन्ति

दिग्वारणदर्पविनिवारणप्रसक्ता इति

वारणाय शृङ्खलिता मर्यादार्हमाचरन्ति।

शुण्डावारिपूरैः पूरयन्त इव वारिनिधिं

वारिधेरधीनघनगर्वं ये समाहरन्ति

ऊढपञ्चरङ्गा गाढधृतरणरङ्गा अमी

मानमेदिनीशमत्तमातङ्गाः पुरःसरन्ति ॥ ४ ॥

राजद्वारे प्राप्ता ये मदात् मस्तकं घूर्णयन्ति (गजस्वभावः)। अरेः चक्रं व्यूहम्। दिग्वारण. इमे गजा दिग्गजानां गर्वं दूरीकर्तुं धावन्ति तदा आधोरणास्तान् शृङ्खलया बध्नन्ति। इमेऽपि मर्यादां ज्ञात्वा शृङ्खलाबन्धं सहन्ते, अन्यथा एषामग्रे का वराकी शृङ्खलेति भावः। शुण्डावारि.-घनास्तु समुद्राज्जलं यदा गृह्णन्ति तदैव वर्षन्तीति समुद्राधीनाः। इमे तु समुद्रमपि शुण्डाफूत्कारजलेन भरन्तीति घन-गर्वहारकाः। ऊढः धृतः पञ्चरङ्गध्वजो यैः। गाढं धृतः रणस्य रङ्गः अनुरागो यैः॥४॥

छप्पय

**फुङ्कृतिवारिभरेण गगनतलमुद्धरयन्ती**
**चरणधरणबलभराद्धरणितलमानमयन्ती।**
**सरभसचीत्कृतिचयाच्चकितभावं विदधाना**
**घोरबृंहितारवैर्वैरिहृदि भयं ददाना॥**
**तुङ्गतया तारापथं तरलयितुं जनितोद्यमा।**
**मानमेदिनीसुरपतेर्भाति गजघटा घनसमा॥ ५॥**

उद्धरयन्ती पूरयन्ती। 'बृंहितं करिगर्जितम्'। तारापथं गगनमपि तरलयितुं चलयितुम्। घनसमा मेघसदृशी॥ ५॥

*** उष्ट्राः ***

**क. - सुन्दरसुवर्णसूचिकार्यैश्चित्रशोभावहान्**
**मञ्जुमखमल्लपरिस्तोमान् ये समावहन्**
**भूषणसमिद्धा भृशमग्रपटबन्धभृतो**
**लम्बितगुलच्छाः पार्श्वतो ये द्रुतमभ्रमन्।**
**पात्रान्नोत्किरन्तो निजगत्या जलबिन्दुमपि**
**शब्दसिन्धुमेते जानुवलयैरिवाऽवमन्**
**क्रोशशतमार्गस्याऽवहेलका मुदैव, मञ्जु-**
**मेलकाऽभिनन्द्यास्ते क्रमेलकाः समागमन्॥ ६॥**

सुन्दरैः सुवर्णसूचिकार्यैः (ज़रदोज़ी काम, कसीदा) विचित्रशोभाधारकान् मनोहरान् मखमल्लस्य (मखमल) परिस्तोमान् कुथान् (पृष्ठास्तरणानि) ये अधारयन्। भृशं भूषणैः दीप्यमानाः, अग्रपटबन्धम् (मुखमारभ्य वक्षःपर्यन्तलम्बिनम्) धारयन्तः। पार्श्वतः उभयपार्श्वयोः लम्बमानकौशेयगुच्छाः (उष्ट्राणां पृष्ठे नानावर्णा गुच्छका उभयतो लम्बन्ते, यथा हस्तिनां घण्टाः)। पात्रान्नो.-जलपूर्णं पात्रमादाय पृष्ठे स्थीयते, तथापि जलबिन्दुरेकोपि पात्रान्न पततीत्युष्ट्राणां गतिकौशलम्। जानुधृतैः वलयैः ('नेवरी') शब्दस्य सिन्धुमिव अवमन्, अतिशब्दमकुर्वन्नित्यर्थः। मञ्जुमेलके प्रशंसनीयाः॥ ६॥

* अश्वाः *

चञ्चलमुदस्य मुहुर्ग्रीवामवकुञ्चयन्तो

वदनमुदञ्चयन्तो लोचनमिहाऽऽहरन्ति

मुखरं वहन्तो मुहुः प्रोथपुटमुन्नमय्य

सपदि समन्ततोऽथ फेनभैरैरुद्धरन्ति।

मञ्जुनाथ कर्णयुगमुत्तरङ्गयन्तो मुहु-

श्चञ्चलदृगञ्चलेन वञ्चनमिवाचरन्ति

गमनजवेन जातु विजितविहङ्गाः पुरः

कीलितकुरङ्गास्ते तुरङ्गाः सुखं संचरन्ति ॥ ७ ॥

चञ्चलं यथा स्यात्तथा उत्क्षिप्य (उत्थाप्य) मुहुर्ग्रीवाम् अवकुञ्चयन्ति (मोटयन्ति)। मुखम् उन्नमयन्तः पश्यतां लोचनं वशयन्ति। 'फुर फुर' इति शब्देन मुखरं प्रोथपुटं (नासापुटम्) उन्नमय्य वहन्तः ये परितो मुखफेनैः पूरयन्ति। उत्तरङ्गयन्तः (प्रकारविशेषेण चालयन्तः), चञ्चलेन नेत्रप्रान्तेन लोकानां प्रतारणमिवाचरन्ति। पादत्रयवर्णिताश्चेष्टास्तुरगस्वभावः। कीलितकुरङ्गाः गमनजवेन स्तब्धीकृत-हरिणाः॥ ७॥

चञ्चति सुचारु विपुश्चिक्कणचमत्कृतिदं

मन्ये वेगवीचयोऽङ्गसीम्नि मुहुः संचरन्ति

चञ्चलितकर्णास्तार्क्ष्यवेगकथामाकलय्य

तमिव निरोद्धुमग्रपादाभ्यां समुच्छलन्ति।

मञ्जुनाथ घोरतरवल्गापरिणद्धा अपि

पवनविरुद्धाऽऽहवलालसां न संत्यजन्ति

अर्वन्तोऽस्मदग्रे के जरन्तो दिनभर्तुरिति

क्रोधं कलयन्तो मुखे लोहं मुहुश्चर्वयन्ति ॥ ८ ॥

चिक्कणं स्निग्धम् अत एव चमत्कृतियुक्तं येषां वपुः चञ्चति शोभते। तत्रोत्प्रेक्षते- मन्ये, अङ्गेषु वेगस्य तरङ्गा वारं वारं संचरन्ति। तार्क्ष्यस्य वेग - कथां श्रुत्वा चञ्चलितकर्णा ये तं पराजेतुमिव अग्रपादाभ्यां रवे उच्छलन्ति। घोरया कठिनया वल्गाया (लगाम) बद्धा अपि ये पवनविरुद्धस्य आहवस्य (युद्धस्य) लालसां न त्यजन्ति, वेगविषये पवनेन साकं योद्धुमिच्छन्तीत्यर्थः। दिनभर्तुः सूर्यस्य वृद्धाः अर्वन्तः घोटकाः अस्मदग्रे के ? न किमपि वस्तु। इति कुप्यन्तो मुखे लोहं चर्वयन्ति। 'लोहकविका' चर्वणे कोपो हेतुरुत्प्रेक्ष्यते। 'दिनभर्तृ' पदेन-दिनपूरणं तस्य कर्तव्यम्। अत एव निरन्तरमविश्रम्य घोटकान् परिचालयति। एवंविधस्य आपद्ग्रस्तस्य ('बेगारी') श्रमकर्षिता वृद्धा घोटकाः के वराका इति अवधीरणातिशयो ध्वन्यते॥ ८॥

घोटकानां शृङ्गारः

चारुचरणेषु हेमहंसका विभान्ति भूरि
जानुयुगमध्ये रणद्वलया विराजन्ते
हेममणिहारावलिरुल्लोठति कन्धरायां
पुच्छे बन्धुराणि रम्यरत्नान्यवलम्बन्ते।
मञ्जुनाथ मौलौ मञ्जुलोत्तंसो विभाति चल-
न्नंसोपरि तन्तुस्यूतमणयः प्रकाशन्ते
संसूचयमानानीव रत्नाकरजन्म निजं
रत्नालङ्कृतानि हयरत्नान्यवभासन्ते॥ ९॥

सुवर्णस्य हंसकाः, 'हंसकः पादकटकः'। अग्रवर्तिनोः जानुनोर्मध्ये रणद्वलयाः 'नेवरी'। उल्लोठति इतस्ततः परिचलति। पुच्छे तनूरुहग्रथितानि सुन्दराणि रत्नानि लम्बन्ते। चलन् गमनसंरम्भेण कम्पमानः उत्तंसः (कलँगी)। स्कन्धस्योपरि कन्धरायाम् ('अयाल') तन्तुभिः मूर्द्धजेषु स्यूता ग्रथिताः। रत्नधारणेन वयं रत्नाकराज्जाताः (उच्चैः श्रवसः सहोदराः) इति सूचयन्त इव रत्नभूता हयाः॥ ९॥

छप्पय

झमिति झमिति रवमुखरसमरभरधरणधुरीणाः
कथमपि रोधमयन्ति हन्त मुखलीन-खलीनाः।
उच्छलन्ति नृत्यन्ति तिर्यगुपयन्ति रमन्ते
मुहुरिह फूत्कुर्वन्ति शीघ्रगतये त्वरयन्ते।
कविकामनिशमुदस्य ये कविकामितसुषमाऽऽवहाः।
सञ्चरन्ति चपलक्रमं ते किल वाजिकुलोद्वहाः॥ १०॥

झम् झम् इति रवेण मुखराः संग्रामभरधारणे निपुणाश्च, संग्रामस्य सर्वस्वमित्याशयः। मुखे लीनः खलीनः कविका (लगामाग्र-लोहभागः) येषां ते। तिर्यगुपयन्ति सरलं गच्छन्तः सहसैव तिर्यक्परिचलन्ति। ये कविकां खलीनम् अनिशम् उदस्य (उच्चैःकृत्य) कविकामितशोभावहाः कविवर्णनीयशोभाढ्याः (भवन्ति)। वाजि. वाजिकुलश्रेष्ठः॥ १०॥

* रथाः *

मृदुलमहार्हमखमल्लमञ्जुलावरणा
हारिहेमवल्लरीविताना गुल्मकान्तरे
सर्वविधसज्जासंविधानाः सोपधानाः पुनः
काञ्चनकलशशोभमाना मौलिशिखरे।

मुष्णन्तो मनांसि चित्ररचनाचमत्कृतिभि-

भूषणझणत्कृतिभिर्भान्तो भूरि संगरे

संपूरितसंपरायसंपत्सुमनोरथास्ते

मानमेदिनीशरथा निर्ययुरथान्तरे ॥ ११ ॥

येषां रथानामुपरि मृदुलस्य महार्हमखमल्लस्य आवरणमस्ति। गुल्मकस्य 'छतरी' इति ख्यातस्य अन्तः मनोहारिणः सौवर्णवल्लरीवितानाः ('सुनहरी झालर') सन्ति। सर्वविधसज्जायाः ('सामग्र्याः') संविधानं येषु। उपधानेन सहिताः, मौलिदेशे सुवर्णकलशेन शोभमानाः। संपूरितः संग्रामश्रियो मनोरथो यैः। निर्ययुः अथ अन्तरे, अथ एतदन्तरे मानमहीशस्य रथा निर्ययुरित्यन्वयः। रथा रथा इति त्रिर्यमकम् ॥११ ॥

* श्रीसूर्यदेवस्य रथः *

काञ्चनकलितचारुचूडमधिरुह्य रथं

जयनगरेन्द्रोऽभ्यागमाय याति, वीक्ष्यताम्

पूर्वतोऽथ गालवाश्रमस्य पर्वतोपरितोऽ-

भिमुखमुपैति भास्वतोऽयं रथ ईक्ष्यताम्।

मञ्जुनाथ राजमार्गमध्ये पौरलोकगणो

हर्म्यमौलिमध्ये मानिनीगणो निरीक्ष्यताम्

मेलकमिलिततूर्यमधुरमनोज्ञरव-

पूर्यमाणकाष्ठा सूर्यसप्तमी समीक्ष्यताम् ॥ १२ ॥

काञ्चननिर्मिता चारुचूडा (शिखरदेशः) यस्य ईदृशं रथमधिरुह्य जयपुरेन्द्रः सूर्यदेवस्य अभ्यागमाय संमुखस्वागताय ('अगवानी') राजमार्गे यातीति दृश्यताम्। जयपुरस्य पूर्वदिशातः सूर्यस्य रथः, राज्ञः संमुखमुपैति इति वीक्ष्यताम्। सुवर्णचूडामण्डितं तुरंगरथमारुह्य नगरात् जयपुरेन्द्रः स्वागताय चलति, द्वितीयतः सूर्यदेवस्य रथो गालवाश्रमादायाति, रामगञ्जनिकटे च द्वयोः सान्निध्यं भवतीति तद्दिनघटना सूचिता। मेलके संघीभूतानां तूर्याणां (वाद्यानाम्) मधुरमनोहररवैः पूर्यमाणाः दिशः यस्यां सा। तूर्यपूर्य सूर्येति प्रासाः ॥१२ ॥

## फाल्गुनाऽऽरम्भः

### तस्य शोभा

कोरका विकासमुपयाताः कर्णिकारेष्वद्य

कान्तिः काञ्चनारे काऽपि भाति कलिकाकुलस्य

श्रूयन्ते समिद्धसहकारे पिकपुञ्जाऽऽरवा

मधुकरगुञ्जा सविधेऽसौ सरसीरुहस्य।

मञ्जुनाथ रसिकसमाजे नवगीतिच्छटा

पिष्टातकरङ्गघटा शोभते शुचं निरस्य

दत्तमनोलोभा विप्रयोगिमनःक्षोभायाऽद्य

भूरितमशोभा परितोऽसौ भाति फाल्गुनस्य॥ १३॥

काञ्चनारवृक्षे कलिकाकुलस्य (कुड्मलसमूहस्य) अनिवर्चनीया शोभा। समिद्धे पुष्पिते सहकारे पिकपुञ्जस्य आरवाः (कूजितानि) श्रूयन्ते। नवगीतिच्छटा होलिकासम्बन्धिगीतिशोभा। पिष्टातकः (गुलाल), रङ्गः रङ्गमिश्रितजलं च तयोः, पिष्टातकरङ्गस्य घनघटेव घटा वा लोकस्य शुचं (शोकम्) निरस्य शोभते॥ १३॥

* होलिकोत्सवः *

गीयन्ते निकुञ्जे गुणगीतयो वसन्तस्याद्य

मत्तपिकपुञ्जे कुहूध्वनयः प्रचीयन्ते

चीयन्ते चतुर्दिक् चञ्चरीककुले मोदरसाः

सरसरसाले सर्वसुषमाः समीयन्ते।

मीयन्ते मनस्सु मन्मथस्य महिमानो भूरि

मञ्जुमकरन्दाः सरघाभिः परिपीयन्ते

पीयन्ते दृशैव रसिकेन फुल्लवासन्तिकाः

काममभी वासन्तिका वासराः सुगीयन्ते॥ १४॥

चञ्चरीककुले भ्रमरसमूहे मोदरसाः प्रमोदातिशयाः चीयन्ते वर्द्धन्ते। समीयन्ते समवेता भवन्ति। मन्मथस्य महिमानः सर्वविधाः शक्तयो मनस्येव मीयन्ते ज्ञायन्ते, न वाचा उद्घाटनस्यावश्यकता। 'सरघा मधुमक्षिका'। वासन्त्य एव वासन्तिकाः, रसिकेन एतादृश्यो नवलतिका दृष्ट्यैव पीयन्ते सातिशयं निरीक्ष्यन्ते। नायिकाविषयकमाकूतं स्पष्टं मार्मिकाणाम्॥१४॥

उन्मीलन्मनोज्ञसहकारमञ्जरीषु मुहु-

र्मधुमकरन्दझरी निभृतमवष्टम्भते

माधवीषु निर्भरमवाप्य परिरम्भे सुखं

मलयसमीरो मदाऽऽरम्भे न विलम्बते।

मञ्जुनाथ निभृतनिलीना काऽपि भावच्छटा

सम्प्रति नवीनामेव रुचिमवलम्बते

मानिनीमनस्सु भाति मदनमहोत्सवोऽद्य

होलिकामहोत्सवोयं जगति विजृम्भते॥ १५॥

निभृतं यथा तथा अवष्टम्भते स्थिरा भवति। माधवीलतासु आश्लेषे सुखं प्राप्य [ अर्थात् माधवीपरिरम्भणेन सुरभितः] मलयानिलः लोकानां मादनकार्यारम्भे विलम्बं न करोति। रसिकानां मनसि निभृतनिलीना गुप्तं स्थिता भावच्छटा नवीनां (कामानुकूलां) रुचिम् अवलम्बते ॥१५॥

**भासते समन्तादिन्दुमधुरमरीचिविभा**
**वायुलहरीयं वाति सुरभिरसस्रवा**
**कुत्रचित्कुसुमसारगन्धः क्वाऽपि पुष्पहार**
**एकतो विहारवस्तुसंहतिरनिह्नवा।**
**अन्यतः कुसम्भरङ्ग-पिष्टातकसज्जा, पुरः**
**सज्जा सुन्दरीणां गीतिर्जनितमनोभवा**
**कामिमनोव्यग्रीकरणाय समवेता स्वयं**
**होलिकामहोत्सवस्य सामग्री नवा नवा॥ १६॥**

इन्दोः सुन्दराणां मरीचीनां (किरणानाम्) विभा समन्ताद्भाति। आम्रादीनां सुगन्धितरसस्राविणी वायुलहरी। क्वचित् कुसुमसारस्य ('इत्रस्य') गन्धः, कुत्रचित् पुष्पहारः, एकतः पान-शय्यादिविहारोचितवस्तूनां संहतिः अनिह्नवा (प्रकटा) भाति। अपरतः कुसुम्भरङ्गस्य पिष्टातकस्य च सज्जा (सामग्री) (अस्ति)। पुरः अग्रे च, जनितमनोभवा सुन्दरीणां गीतिः सज्जा (संनद्धा उपस्थिताऽस्ति)। अत एव सेयं नवा नवा सामग्री॥ १६॥

### * राधाकृष्णयो रङ्गहोलिका *

**रङ्गमयी प्रेयसी विराजते विहारस्थले**
**रङ्गमयी प्रेयसोऽपि मूर्तिरुपभासते**
**रङ्गमयी गोपगोपिकानां मञ्जुमण्डलीयं**
**सरस-सारङ्गमयी गीतिर्मनो गाहते।**
**रङ्गमयी भूमिर्व्रजवीथिरपि रङ्गमयी,**
**रङ्गमयी मन्ये मनोवृत्तिः प्रतिभासते**
**होलामद्य रङ्गमयीमाप्य तस्याः सङ्गवशाद्**
**रङ्गमयी सेयं सर्वजगती विराजते॥ १७॥**

प्रेयसी श्रीराधिका। सरसः सारङ्गनामा रागविशेषः। मनोवृत्तिः रङ्गमयी अनुरागयुक्ता भासते ॥१७॥

**भ्राम्यन्ती सुपिष्टातकपूरघनघोरघटा**
**सेयं निष्कुटान्तर्बत सर्वतस्तिरोदधाति**

भृशमनुराग-रस-रागभृता मण्डलीयं
राजद्व्रजनागरीणां क्रीडन्ती मुदं ददाति।
मञ्जुनाथ निपुणतमोऽपि वामलोचनानां
काममन्तराले धृतो दयितो वशं प्रयाति
अङ्गनाभिरद्य रङ्गनालिकाभिराकुलितो
नूनमङ्गनान्तमौनमास्थितोऽयमाविभाति॥ १८॥

पिष्टातकपूररूपा घनघोरा घटा प्रमदावनस्य मध्ये सर्वतः तिरोदधाति सर्वदिशः आच्छादयतीत्यर्थः। अनुरागेण, रसेन (आनन्देन), रागेण गीतिरागेण च भृता व्रजनारीणां मण्डली परस्परं रङ्गनिक्षेपक्रीडां कुर्वती मुदं ददाति। वामलोचनानाम् अन्तराले मध्यभागे धृतः निपुणोऽपि दयितः श्रीकृष्णः तासां वशं गच्छति। अङ्गनाभिः रङ्गनालिका-(पिचकारी)- द्वारा आकुलीकृतः अङ्गनान्तः अङ्गनस्य (चतुष्कस्य) मध्ये मौनम् आस्थितः शोभते॥ १८॥

मोदभरमेदुरमुदेति गोपीवृन्दमितो-
ऽभिमुखमितोऽसौ गोपमण्डली विभासते
अभितः क्षिपन्ति चूर्णमुष्टिमवपूर्य मुहु-
र्मोदमत्तमानसा न केचिदिहोदासते।
किंशुककुसुमरङ्गमथ विसृजन्ति मिथो
मञ्जुनाथ शोभाः पश्य संमुखमिवाऽऽसते
रङ्गभराऽऽपूर्णचारुचूर्णघटादुर्दिनेषु
पूर्णमुखचन्द्रविभा प्रेयस्याः प्रकाशते॥ १९॥

मोदभरेण मेदुरं सान्द्रस्निग्धं गोपीवृन्दम् इतः उदेति। अभिमुखं च गोपानां मण्डली। अभितः उभयतः चूर्णस्य ('गुलाल') मुष्टिम् अवपूर्य क्षिपन्ति। मोदमत्ताः केपि (गोपीषु केचिदपि) न उदासते तटस्था न भवन्ति, अपि तु सर्व एव चूर्णादिक्षेपे संलग्ना भवन्तीत्यर्थः। विसृजन्ति क्षिपन्ति। शोभाः (सर्वा अपि) संमुखम् आसते इव। मन्ये जगतः सर्वा अपि शोभाः संमुखगताः सन्तीति त्वं पश्येत्याशयः। रङ्गभरेण आपूर्णेषु चूर्णघटारूपदुर्दिनेषु (मेघच्छन्नदिनेषु) राधायाः पूर्णमुखचन्द्रस्य विभा भासते। यथा मेघाऽऽच्छन्नशुक्लपक्षे घनघटान्तरितस्य चन्द्रस्य शोभा भवति, तथा रङ्गगुलालघटाया मध्ये राधिकाया मुखचन्द्रस्य शोभा भवतीत्याशयः॥ १९॥

काश्चिन्मिथो मण्डयन्ति, गायन्त्यथ काश्चित्पुन-
र्लीला भाति सेयं नवबालासुमहोत्सवे
रङ्गजलाऽऽसेकात्पटसंभिन्ना विभान्ति पुन-
श्चेलाऽञ्चलच्छन्ना रङ्गखेलासुमहोत्सवे।

**मञ्जुनाथ मोदोन्मदमदनविलासभृता-**

**न्यङ्गान्यवलालयन्ति दोलासुमहोत्सवे**

**को लावण्यलीलावशो मानसं न संदधाति**

**दोलामधिरूढमिव होलासुमहोत्सवे॥ २०॥**

नवबालानां महति महोत्सवे मण्डनादिका सेयं लीला। चेलाञ्चलेन छन्नाः (बालाः) रङ्गजलस्य समन्ततः अभिषेकात्पटेन संभिन्ना अत्याश्लिष्टाः सत्यः, रङ्गक्रीडामहोत्सवे भूयः विभान्ति। सूक्ष्मं पट्टवस्त्रं जलक्षेपान्नारीणामङ्गेषु सुतरां निलीनं भवति, येन सुन्दराङ्ग्यस्ताः सुतरां भान्तीत्याशयः। ताः (बालाः) मोदेन उन्मदानि मदनविलासेन च भृतानि अङ्गानि दोलाक्रीडोत्सवे अवलालयन्ति मोहकशैल्या संचालयन्ति। वसन्तेपि दोलाक्रीडेति रसिकसंप्रदायः। अत एव लावण्यलीलारसज्ञः को वा जनः होलामहोत्सवे स्वमानसं दोलामधिरूढमिव न दधाति, अपि तु सर्वस्यापि मानसं मदनविलासेन दोलायितं भावतीत्यर्थः॥२०॥

* मधुकरान्योक्तिः *

**सहजसुगन्धसुख-मन्दमारुतेन युतं**

**भासते विलासस्थलं निभृतनिरर्गलम्**

**मञ्जुनाथ सेयं नवकुसुमविकासवहा**

**मालती विलाससहा भाति मोदमञ्जुलम्।**

**समयमियन्तं हन्त त्वमपि प्रतीक्षापरो**

**नीतवान्निरोधान्नयन्मानसमिदं चलम्**

**मधुकर! किन्तु तव गुञ्जेनेह संजयता-**

**त्फुल्लत्पुष्पपुञ्जे ते निकुञ्जे नवमङ्गलम्॥ २१॥**

स्वाभाविकसुगन्धेन सुखकारको यो मन्दपवनस्तेन। निरर्गलं प्रतिबन्धकशून्यम्। कुसुमविकासः श्लिष्टः। निरोधात् निग्रहात् विद्रोहितया चञ्चलमिदं मानसं नयन् प्रतीक्षापरस्त्वम् इयन्तं समयं नीतवान्। हे भ्रमर! सांप्रतं तव गुञ्जनेन किम्, निकुञ्जे तव नवीनं मङ्गलं जयतु॥२१॥

**भासते चतुर्दिक् चारुपिष्टातकरङ्गघटा,**

**रङ्गच्छुरिताऽऽर्द्रपटा मण्डली विभाव्यताम्**

**पौररसिकानां घोरढक्कासहकारिणीयं**

**न्यक्कारितबाधाभरा गीतिरवधार्यताम्।**

**मञ्जुनाथ मित्रमण्डलीषु मिल मोदभरात्,**

**प्रेमदत्तपानकमिहाऽद्य न निवार्यताम्**

**धर्मधुराधारक सुधारक! समेहि सखे**

**किञ्चिदये स्नेहसुधाधारकता धार्यताम्॥ २२॥**

पिष्टातकस्य रङ्गयुक्ता घटा। रङ्गेण च्छुरित: सिक्त:, अत एव आर्द्र: पट: यस्या: एवंविधा रसिकानां मण्डली दृश्यताम्। घोरढक्का-(डफ)-सहकृता दूरीकृतबाधासमूहा (निर्बाधा) रसिकानां गीति: (नवसभ्यमानिनामरुन्तुदा होलिगीति:) अवधार्यताम्। अद्य (अस्मिन्दिने तु) प्रेम्णा दत्तं, मित्रमण्डलीगतं भङ्गादि पानकं न वार्यताम्। हे सुधारक! त्वं धर्मधुराया धारकोऽसि, परं हे सखे! अद्य समेहि मित्रमण्डल्यां समवेतो भव। सुधारकेण त्वया स्नेहसुधाधारकत्वं स्वीक्रियताम्। अन्यान्येव दिनानि तव गौरवघोषणार्थं बहूनि सन्ति। अद्य तु जनानां स्नेहसुधां स्वीकुरु। ततश्च स्नेहपुरस्सरं दत्तमद्यपात्रमिदं पानकं तु न निवारयेति सुधारकमहाभागं प्रति प्रार्थना॥ २२॥

मण्डलीस्थितै: मित्रै: कृतं होलिकावर्णनम्

*** चतस्रो भाषा: ***

उर्दूपण्डितो मुन्शी आह-- **मौसिमे बहार देख खोला मुँह बुलबुलों ने**
**आतिशये हिज्र का निकाला इश्क़ ने शोला ***

व्रजभाषाभिज्ञो रसज्ञो ब्रूते-- **दूधिया छनाओ यार! नीठ नरचोला मिल्यो**
**बोलाभर पीकें फिर बोलो बस. बंभोला+।**

जयपुरीयो रसिक: संलपति-- **आओला कदेक, कद गाओला रँगीली फाग,**
**ढोला! कद गोरीजी ने हिवड़ै लगाओला -..**

संस्कृतज्ञो मार्मिक: कथयति-- **मानिनामनङ्गेनाऽद्य दोलामधिनीतं मनो**
**नो लास्यं दधाति रसिकानां किमसौ होला ?॥ २३॥**

*वसन्तसमयं वीक्ष्य 'बुलबुल' पक्षिभि: कूजनमारब्धम्। वियोगिनां कृते, प्रेम्णा विरहरूपस्याऽग्रेर्ज्वाला नि:सारिता। वसन्तकृतोद्दीपनेन विरहिणो दग्धा इव भवन्तीत्याशय:। + दुग्धमिश्रां भङ्गां सज्जय, काठिन्येन नरशरीरमिदं लब्धम्। 'बोला' (आबखोरा' पात्रविशेष:), तन्मात्रां भङ्गां पीत्वा शिवं रट।

-.. कदा आगमिष्यसि, रागसंवर्द्धिका होलिगीती: कदा गास्यसि, हे प्रियतम! प्रियतमां कदा वक्षसि योजयिष्यसि। ३ अनङ्गेन अद्य मानिनामपि मन: दोलायितं कृतम्। अत एव असौ होला किं रसिकानां लास्यम् (हर्षमित्यर्थ:) नो दधाति?, अपि त्ववश्यं करोतीत्याशय: ॥२३॥

**[ रसिकवयस्यानामेव कृते सक्षमाप्रार्थनम् ]**

**विध्यसि विलोले चलयन्ती चारुलोचने किम् ?**

**रुचिरकपोले दन्तमुद्रा मम नीयताम्**

**क्षीणकटिदेशो न सहेत कुचभारं भीरु!**

**बाहुपाश एषोऽप्यवलग्ने ते निधीयताम्।**

नाऽधिकमुरीकरोषि मञ्जुनाथकामनां चे-

दुच्चकुचयुग्मे! वचोऽप्येतन्मे विधीयताम्

होलिका मनुष्यमनोदोलिका सुसंनिहिता

चन्द्रमुखि! चोलिकाऽवमर्द्दनमुदीयताम्॥ २४॥

ते अवलग्ने कटिदेशे मम एष बाहुपाशो निधीयताम्। मम कामनाम् अधिकं यदि न स्वीकरोषि, तर्हि उन्नतस्तनशालिनि! एतन्मम वचनमेव क्रियताम्। मनुष्येत्युक्त्या मनुष्यमात्रस्य साम्प्रतं मनसि दोलायितभावः, यस्तु देवः पशुर्वा स्यात्तस्याऽन्या कथेति सूच्यते। चोलिका कञ्चुलिका॥२४॥

वहसि कुसुम्भरङ्गरञ्जितमसंनहनं

वरवसनं ते लसदङ्गसुषमाऽऽवहम्

रङ्गजलसिक्ता तनुनिबिडनिषक्ता सेयं

कञ्चुकी वहति कुचयुग्मं लालसाऽऽवहम्।

मञ्जुनाथ शिञ्जारवमुखरकरेण मुहु-

र्वर्णचूर्णमेतत्किमु किरसि मदाऽऽवहम्

केवलमुत्क्षिपसि कुसुम्भनवरङ्गं किमु

सङ्गं देहि सुन्दरि ते सकलसुखाऽऽवहम्॥ २५॥

असंनहनं संनाहरहितं विलुलितमित्यर्थः। तन्वाम् अङ्गे निबिडं यथा स्यात्तथा निषक्ता श्लिष्टा। मञ्जुना मनोहरेण अथ शिञ्जारवमुखरेण च करेण मम मदवर्द्धकं वर्णचूर्णम् ('गुलाल') किं क्षिपसि॥ २५॥

सरसा सुखाय संमुखीना मधुयामिनीयं

गन्धो माधवीनामयं मनसि निरुध्यते

रोचन्ते समन्तान्मधुमधुरमृगाङ्करुचो

विगतशुचोऽद्य मम मदनः प्रबुध्यते।

मञ्जुनाथ कुसुमवतीति नाऽनुरञ्जयसे

वीक्षसे न कञ्जमुखि! धर्मः क्व विरुध्यते

शयनं निषिद्धं धर्मशास्त्रे पुष्पवत्या सह

रत्या निशि जागरणं केन प्रतिषिध्यते॥ २६॥

मधुयामिनी वासन्तिकी चैत्री वा रात्रिः। माधवीलतानाम् अयं गन्धः मनसि निरुध्यते स्थिरो भवति। मधुरा वसन्तेन मधुरा मृगाङ्कस्य ज्योत्स्नाः। पुष्पवती अहम् इति कृत्वा त्वं मां न अनुरञ्जयसे प्रीणयसि। धर्मशास्त्रे पुष्पवत्या सह शयनं निषिद्धम्, अत एव शयनात्प्रतीपं रतिकर्मवशाज्जागरणं केन वा निषिद्धं स्यादित्याशयः॥ २६॥

### * शीतलाष्टमी *

**प्रातरेव गेहे गेहे शीतलामठाऽन्तिकतो**
**गीतलालसाढ्याः पौरवनिता निरीक्ष्यन्ताम्**
**गेहे गेहे पाककार्यलब्धाऽवसराणां भूरि**
**नारीनिकराणां लास्यलीलाः प्रसमीक्ष्यन्ताम्।**
**सायाह्नेऽथ शीतलाया मेलकनिवृत्ता नराः**
**श्रीरामनिवासोद्यानमध्यतः प्रतीक्ष्यन्ताम्**
**शीतलानि भोज्यान्युपभुज्य नीतलावण्यानि**
**शीतलाष्टमीतो महिलाकुलानि वीक्ष्यन्ताम्॥ २७॥**

बाईजीमन्दिरे (बाईसीवालामन्दिरे) गृहीतवरवधूरूपाणां स्त्रीणां वैवाहिककौतुकानि, मध्याह्ने च रामनिवासे स्वैरलीलाश्च लास्यलीलापदेन बोद्धव्याः। नीतलावण्यानि लावण्ययुक्तानि महिलाकुलानि॥२७॥

### * गणगौरी *

**सुन्दरसुरङ्गवेषभूषितसुचारुतनु-**
**नागरनितम्बिनीनिरुद्धभूरिभवना**
**प्रान्तरसुमितसहकारतरुगन्धवती**
**दीपितमनोजवह्निवासन्तिकपवना।**
**प्रतिभवनाऽऽदृतमनोज्ञघृतपूरभरा**
**सुखितसंयोगिचित्तचिन्तालवलवना**
**गौरीगणवन्द्यगणगौरीगुणगौरवतो**
**जयनगरीह भाति सर्वसौख्यसवना॥ २८॥**

सुरङ्गवेषेण भूषिताभिः सुचारुतनुभिः पौरस्त्रीभिर्मेलकदर्शनार्थं निरुद्धानि बहुभवनानि यस्यां सा (जयनगरी)। नितम्बिनीपदेन स्थाननिरोधेऽभिप्रायः सूचित इति परिकराङ्कुरः। प्रान्तरे नगरपर्यन्तभागे सुमितानां पुष्पितानां सहकारतरूणां गन्धयुक्ता, अत एव उद्दीपितः मनोजवह्निर्येन एवंविधो वासन्तिकः पवनो यस्यां सा (नगरी)। प्रतिगृहम् आदृतः (स्वीकृतः) घृतपूर-(घेवर)-समूहो यस्यां सा। सुखितानां

संयोगिजनानां चित्तस्य चिन्तालवं लुनाति या। सुन्दरीगणेन वन्दनीयाया गणगौर्या गुणगौरवात् जयपुरी पूर्वोक्तरूपेण सर्वेषां सौख्यानां सवना जनयित्री भाति। लवना सवना, उभयत्र नन्द्यादित्वाल्ल्युः ॥२८॥

*** मेलकम् ***

**अम्बरचतुष्पटीचमत्कृतिमुदीक्ष्य चिरं**
**तदनु त्रिपोलियातटी ते परिचेयाऽसौ**
**सस्पृहमुपेत्य स्वर्गशूलीसंमुखेपि सखे**
**गायद्गौरीसंहतिरखेदं दृशि नेयाऽसौ।**
**चतुरङ्गणेऽथ गजतुरगकुतुकमेक्ष्य**
**चक्रिकाप्रचालनचमत्कृतिरुपेयाऽसौ**
**गुण्यगणगौरीगोपुरेण चतुरङ्गणगै-**
**र्गौरीगणगेया गणगौरी संनिधेयाऽसौ॥ २९॥**

आम्बेरचतुष्पटी-(चौपड़-)-चमत्कारं वीक्ष्य तदनन्तरं त्रिपोलियापरिसरो दर्शनीय इत्यर्थः। गायन्तीनां सुन्दरीणां संहतिः (समूहः) अखेदं (सानन्दम्) दृशि नेया (दर्शनीया)। चतुरङ्गणे 'चौगान' मध्ये धावतामुच्छलतां च गजतुरगाणां कौतुकम् आ-ईक्ष्य, चक्रिका ('चकरी') प्रचालनस्य चमत्कृतिः उपेया उपगन्तव्या, दर्शनीयेत्याशयः। 'चक्रिका' प्रचालनपाटवेनैव राजतो जीविकामुपभञ्जानाः कर्मचारिणः त्रितलचतुस्तलपर्यन्तं स्वहस्तधृतगुणेन चक्रिकां प्रचाल्य 'गुल्मटिका'(बुर्ज) स्थिताय जयपुरेन्द्राय स्वगुणपरिचयं तद्दिने ददतीति घटना सूच्यते। प्रशस्तगुणयुक्तेन गणगौरीगोपुरेण (तन्नामकपुरद्वारद्वारा) चतुरङ्गणगतैः भवद्भिः गौरीभिरुपगेया सेयं गणगौरी संनिधातव्या दर्शनीयेत्याशयः। पुराणवसतिवास्तव्येन कविना स्वानुकूलो मेलकदर्शनक्रमो वर्णितः॥ २९॥

*** नानास्थानेषु स्थिता जना मेलकं नानारूपेण वर्णयन्ति ***

**चतस्रो भाषाः**

ब्रजभाषया रसिकः कश्चिदाह--

**आँगन अटारी छात छज्जे चित्रसारी चढीं**
**चन्द्रमुखवारी पुरनारी चहुँ ओर की***

उर्दूभाषाऽभिज्ञः सोत्प्रेक्षं ब्रूते--

**मजमा जमा है सारी रंगतों का देखो ज़रा**
**गोया गुलक्यारी किसी बाग़े पुरज़ोर की -..।**

संस्कृतज्ञः सालङ्कारमाचष्टे--

**मञ्जुनाथ सरसवन्तात्सुखसारीभवन्**
**फुल्लत्पुष्पधारी स हि कामतरुः कोकरी +**

जयपुरीय: कश्चिद्रसाकुलित: कथयति--

**भायाजी! भरी छै भीड़ भारी, ईं तिबारी होर**

**बारी खोल देखो असवारी गणगोर की ×॥ ३०॥**

अङ्गने अट्टालिकायां गृहपृष्ठे विटङ्के चित्रशालायां च पुरवासिन्यश्चन्द्रमुख्य: सामारूढा:। * स्त्रीणां नानाविधवर्णानि वस्त्राणि दृष्ट्वा उर्दूज्ञो ब्रूते- 'सर्वविधरङ्गाणामद्य संमेलनसभा संजाताऽस्ति, पश्य तावत्'। मन्येहं वैभवशालिन: कस्यचिदारामस्य नानारङ्गरमणीया पुष्पवीथिकाऽस्ति।

-.. वसन्तसमागमात् सुखसाररूपो भवन् पूर्वं कोरकयुक्त: कामतरु: साम्प्रतं विकसत्कुसुमधारी जात:। मेलके तथाविधान्युद्दीपनानि संमिलितानि यै: किल पूर्वं मुकुलसनाथोऽपि कामवृक्ष: साम्प्रतं विकसितकुसुमयुक्तो जात इत्याशय:। + तात! मेलकेऽतीव जनसंमर्द: संजात:, अत एव अस्यां त्रिद्वारिकायां वातायनमुद्घाट्य गणगौरीयात्रां पश्य ×॥३०॥

**जयपुरेन्द्रहर्म्यमालायां गणगौरीमहोत्सवसभा ( दरबार )**

**मोदमादधाति वरवारिदमहलमिदं**
**सौरभबहल-नवनिष्कुटनिकेतने**
**सदृशसुरङ्गपटा: सामन्ता: समन्तात्स्थिता**
**मध्ये माधवेशो भाति निस्तुलनृपासने।**
**वादि मदबन्धादिव मन्दमन्दचारी मरुन्**
**माद्यति मनोऽपि वारनारीजननर्तने**
**सेयं गणगौरीसुमहोत्सवसभातो भाति**
**प्राकृतिकशोभा जयनगरनृपाङ्गने॥ ३१॥**

सौरभप्रचुरे राजगृहोपवने वरं 'बादरमहल' इति प्रसिद्धं हर्म्यं मोदं दधाति। प्रतिदिन-नियमितहरित-पीतादि-राजसदृशरङ्गपटधारिण: सभासदा: ( भूम्यधिकारिणष्ठक्कुरा:) पर्यन्तत: श्रेणीबद्धा: स्थिता:, मध्ये च अनुपमे रत्नजटिते सिंहासने माधवेन्द्रो भाति। मदवशादिव मन्दमन्दगामी सुखद: पवनो वाति, सभायां वारवधूनां नर्तनं दृष्ट्वा लोकानां मन: अपि मत्ततां गच्छति। एवं जयपुरेन्द्रस्य अङ्गने गणगौरीमहोत्सवसभायां सहकारसुरभिमारुताद्युद्दीपिता प्राकृतिकशोभा भाति॥ ३१॥

जयपुरेन्द्रश्चचन्द्रमहलप्रासादात् बादरमहलं प्रति आयाति
परावर्तते वा तत्समयस्य शोभा।

**पृष्ठत: प्रयान्ति राजपरिजनवर्गा भूरि**
**पार्श्वत: प्रयान्तो भान्ति सामन्ता: सुरञ्जिता**
**अग्रतो व्रजन्ति दण्डचामराऽऽतपत्रधरा:**
**संमुखतो वारवधूवीथी संनिवेशिता।**

**मध्यतो लसन्ति भूरिभूरि जलयन्त्रचयाः**
**परितो ज्वलन्ति चन्द्रभासः सुविशेषिता**
**एवं वासहर्म्यादयन् बादरमहलमनु**
**सादरमलोकि जयनगरनरेशिता ॥ ३२ ॥**

'चन्द्रमहल' प्रासादस्य संमुखतः, मध्यभागे बादरमहलं यावत् जलयन्त्रश्रेणिः, तदुभयतश्च मर्मरपाषाणनिर्मितं परमसुन्दरं विशालं कुट्टिमम्। तयोर्मध्ये एकेन कुट्टिमेन सुखशिविकामारुह्य जयपुरपुरन्दरः प्रयाति। द्वितीयेन कुट्टिमेन सामन्ताश्चलन्ति, अयं किल यात्रानिवेशः। तत्र जयपुरेन्द्रस्य पृष्ठभागे राज्ञः परिजनाः ('चेला' प्रभृतयः) चलन्ति। पार्श्वतः अर्थात् पार्श्वस्य द्वितीये कुट्टिमे रञ्जितवस्त्रयुक्ताः सामन्ताः, प्रयान्तो भान्ति। राज्ञः अग्रभागे च दण्ड-चामर-छत्र-धारिणश्चलन्ति। राज्ञः संमुखभागे च वारवधूनां पङ्क्तिः स्थापितास्ति। द्वयोः कुट्टिमयोर्मध्यभागे गगनचुम्बिन्यो जलयन्त्रधाराः शोभन्ते। जलयन्त्राणां परितश्च अन्यापेक्षया विशेषयुक्ताः चन्द्रभासः ('महताब' इति प्रसिद्धाश्चन्द्रज्योत्स्नाविडम्बिन्योऽग्नि-चूर्णदीपिकाः) ज्वलन्ति। एवंप्रकारेण निवासहर्म्यात् वारिदमहलं प्रति गच्छन् जयपुरेन्द्रः सकलराजस्था-नाऽतिशयितः कविभिः सादरं विलोकितः। सामन्ताः सुरञ्जिताः, सुविशेषिताः, उभयत्र पादान्तरेऽ-च्परत्वाद्विसर्गलोपः ॥३२ ॥

*** रामनवमीमेलकम् ***

**मर्दलमुपध्वनन्ति केचिन्मदमत्ता मुहुः**
**केचित्कलकांस्यवाद्यमाघ्नन्तीत्यवेक्ष्यताम्**
**केचिद् ग्रामकामिनीर्निरीक्ष्य कामचेष्टाचणाः**
**कटिमभिनामयन्तो नृत्यन्तीत्युदीक्ष्यताम्।**
**मञ्जुनाथ रामगञ्जमध्ये ग्राम्यलीलामेक्ष्य**
**साधुसिताक्रीडनकसंहतिः समीक्ष्यताम्**
**ग्रामजनगीतिगोष्ठीकामचाररम्या, रवैः**
**सुतरामदम्या रामनवमी निरीक्ष्यताम् ॥ ३३ ॥**

अस्मिन्मेलके ग्राम्यजनानामेव विशेषतः समवायस्तमेवाह-- मर्दलम् 'तबलान्तर्गत' बाँया इति प्रसिद्धम्। कलं कांस्यपात्रवाद्यम् आघ्नन्ति ताडयन्ति इति दृश्यताम्। आङो यमहनेति न शङ्क्यम्, अकर्मकादित्यनुवृत्तेः। कटिं विलक्षणरूपेण परिचालयन्तो नृत्यन्तीति। ग्राम्यलीलामेवम् आ-ईक्ष्य, सिताक्रीडनकानां संहतिः ('खांड के खिलौने') दृश्यताम्। ग्रामजनानां गीतिगोष्ठ्यां कामचारेण स्वच्छन्दविहारेण तादृशजनानां कृते रम्या, रवैः ग्राम्याणां गीतिकोलाहलैरतीव अदम्या ॥ ३३ ॥

*** वटसावित्रीदिने वटपूजा ***

**सौभाग्योपसाविवटसावित्रीपवित्रदिने**
**सुभगसवित्रीजने मोदघटा संदधाति**

**पुष्पधूपनैवेद्यादिपूजासाधनानि नयन्**
**सुन्दरीसमाजो वटमूलमनु संप्रयाति।**
**पश्य, वटवृक्षे सितसूत्रं परिवेष्ट्य निज-**
**सौभाग्यस्य सूत्रं वर्द्धयन्ती प्रक्रमं ददाति**
**ज्येष्ठमासमञ्जुकुहूजातभव्यभावोदया**
**सेयं वटपूजामेकहृदया भजन्ती भाति॥ ३४॥**

सौभाग्यम् उपसूते तत्सौभाग्योपसावि, तस्मिन् वटसावित्रीपवित्रदिने। सवित्रीजने स्त्रीसमाजे मोदघटा आनन्दपूरः संनिहितो भवति। प्रक्रमं परिक्रमाम्। ज्येष्ठमासस्य मञ्ज्वां कुह्वां (अदृष्टचंद्रायाममायाम्) जातः भव्यभावोदयो यस्याः सा। हूजा-पूजा-उदया हृदया चेति प्रासः॥३४॥

*** भरलानवमीमेलकम् ***

**सवैया ( दुर्मिल )**

**रथ-तुङ्गतुरङ्ग-गता जनता**
**जनताहितसाङ्गपुरं श्रयते**
**गृह-तोरण-हर्म्य-मठोपरितो**
**भरितो जनसङ्घ इतो रमते।**
**अपि गीतरसाऽऽकुलिता वनिता**
**जनिताऽतिमदं प्रमदं दधते**
**भरलानवमी नवमीनदृशां**
**नवमीक्षणसौख्यमिहाऽऽवहते॥ ३५॥**

रथान् तुङ्गान् तुरङ्गांश्च गता (अधिरूढा) जनता, जनताऽर्थं हितकारकं साङ्गपुरं ('सांगानेरम्') श्रयते। गीतिरसैराकुलिताः स्त्रियः जनितातिमदं यथा स्यात्तथा प्रमदं (हर्षम्) धारयन्ति। नवानां मीनदृशां (स्त्रीणाम्) नवम् (अद्भुतम्) ईक्षणसौख्यम् (नेत्रयोरानन्दम्) आवहते करोति॥ ३५॥

*** जयपुरे सुप्रथिता वर्षाकालिका महोत्सवाः ***

*** वनसोमवारमेलकः ***

**चतस्रो भाषाः**

**'उमड़ घुमड़ घिर आई घटा धूआंधार**
**वारि बउछार लिये बहत बयार ये' ***
**'वाजी वा हुयो छै अन्धकार किस्यो च्यारूं ओड़**
**बार बार बीजल्यां बतावैं पलकार ये -..।'**

**'मञ्जुनाथ यार! नहीं होगी ये बहार फिर**

**तर्ज़े गुफ़तार रहैं आज तो नये नये +'**

**'विभ्रमविचारमवतारय मनस्सु नृणां**

**वनसोमवारमञ्जुमेलकमहोदये ॥ ३६ ॥'**

पर्यन्ततो निबिड़ा घनघटाः समवेताः। सीकरसहयोगी वायुर्वहति*। अहो समन्तात्कीदृशोऽन्धकारः संजातः। वारं वारं च विद्युतश्चण्डचमत्कृतीः प्रदर्शयन्ति। 'अर (और) पलका बतावै' इत्यन्वयः -..। मञ्जुनाथ मित्र! नेयं शोभा पुनर्भाविनी। अत एव ते वर्णनशैल्योऽद्य तु नवनवा एव विलोक्येरन्। (अत एव, इत आरभ्य नानाभाषासु सूक्तिगुम्फः इति बोध्यम्)+ रसिकनृणां मनस्सु मेलकमदस्य उदये अद्य विभ्रमस्य विलासस्य विचारमवतारय संक्रामय। 'धार छार अन्धकारे'त्यादयः सर्वपद्यगताः प्रासाः ॥३६ ॥

## * हरियाली मावस *

(मेलके मिलिता नानादेशीयाः सुहृदः सानन्दमवस्थिताः प्रावृट्-
शोभां स्वस्वभाषया वर्णयन्ति)

प्रथमं वाङ्गमहोदयो वर्णयति--

**'चाहिया चमक चञ्चलार चोकिते छे चोख'**

ब्रजभाषारसिकः परितोऽवलोक्याऽऽह--

**'चारों ओर छाईं घनघोर घटा धूआं सम'**

जेंटिलमैनः इङ्गलिशभाषया ब्रूते--

**'ओह माइ डियर! आइ लाइक दिस हाली डे'**

जयपुरीयो वर्षया भोजनसामग्रीमार्द्रामवलोक्याह--

**'हरियाली मावस मनैली जद जीमां जम।'**

मित्राण्याह्वयन् गुर्जरो निर्जगाद--

**'केवी छै बहार, जरा आवीने जुओ तो खरा!'**

उर्दूपटुः सालङ्कारं व्याजहार--

**'फर्श ये बिछा है हरा देखिए! दिखायँ हम'**

तत्कालमागतान्वर्षाबिन्दून्निर्दिशन्महाराष्ट्रोऽभ्याचष्टे -

**'अन्धकार झाला, मित्र! पाउस हे आला पहा'**

संस्कृतज्ञः सानन्दमग्रे सूचयन्नाह -

**'पर्वते पुरस्तान्मेघमालाऽऽलोकनीयेयम्॥ ३७ ॥'**

वाङ्ग:-- 'विद्युतश्चमत्कृतिं दृष्ट्वा चक्षुषी चकितनिमीलिते भवतः।' व्रज.-- धूमायिता घनघटाः पर्यन्ते संघटिताः।' अंग्रेजी-- 'Oh my dear! I like this holiday' मित्र! एवंविधमवकाशदिनम-भिरोचयामि।' जयपु.-- 'यदा स्थैर्येण भुञ्ज्महे, तदैव सेयं हरिताऽमावस्या सफला भवेत्।' गुर्जरः-- 'कीदृशी शोभास्ति, किञ्चित् बहिरागत्य पश्यत तावत्।' उर्दू-- 'इदं हरितमास्तरणमास्तृतम्, वयं दर्शयामः।' सस्यहरितां धरामवलोक्योत्प्रेक्षा। महारा.- 'अन्धकारो जातः। पश्य, मित्र! मेघ एवागतः' ॥३७॥

## * श्रावणस्य तृतीयामहोत्सवः *

### प्रथमदिने शृङ्गारकम् ( सिंजारा )

एतस्मिन्नुत्सवे 'लहरिया' 'चुँदड़ी' प्रभृतिचित्ररङ्गवस्त्राण्यभिरोचयन्ति महिलाः

### * तत्र बहुभाषाणां चूँदड़ी *

**चोटी करि, भूरिभूषणानि कृतान्यङ्गेष्वथ,**
**रङ्गे हिना ने भी खूब खूबी ये दुबारा की**
**घैर घैर घेवर ना थाल भरी मूँक्या जुओ,**
**चाव हुओ जीने वक्तुं कोऽस्ति सूक्तिसंपाकी।**
**मञ्जुनाथ तैनें सूक्तिसुन्दरीप्रसाधनाय**
**पँचरँग चूनरी रँगी है बहु भाषा की**
**चूनर चटक भरी भामिन कों भाई**
**मनोलोभायाऽद्य सुन्दरीषु सोभा छै सिंजारा की॥ ३८॥**

'चुंदड़ी' चित्ररङ्गे रङ्गाणां स्थानपार्थक्यं न भवति। सर्वे रङ्गाः प्रायो मिलन्ति। तथैवाऽत्रापि प्रत्येकचरणे अनेका भाषाः संमिश्रिताः। परं पञ्चभिर्भाषाभिः सेयं सूक्तिसुन्दर्याः पञ्चरंग चुँदडीत्यवश्यं वक्तव्यं स्यात्-यथा केशप्रसाधनं कृत्वा अङ्गेषु भूषणानि धृतानि, तदुपरि यावकेन (मँहदी) करबद्धे द्विगुणशोभा कृता। प्रतिगृहं घृतपूराणां पात्राणि भृतानि, पश्यत। रमणीषु योऽयमुत्साहस्तं वक्तुं को वा प्रगल्भः। मञ्जुनाथ त्वयाऽपि सूक्तिसुन्दर्याः शृङ्गाराय पञ्चभिर्भाषाभिः पञ्चरङ्ग'चुँदडी' चित्रवस्त्रं रञ्जितम्। स्फुरद्रङ्गं तदेतच्चित्रवस्त्रं भामिनीभ्यो भाति। अत एव रसिकमनोलोभाय सेयं शृङ्गारकस्य शोभा वर्तते॥३८॥

### * तृतीया *

**कलितकुसुम्भरागकञ्चुकनिलीनकुच-**
**कुम्भानता कान्ता भाति दोलामुपनीयाऽसौ**
**वारिदवितानतले ललितलताऽभिवृता**
**भूमिर्हरिताऽद्य जलवेणीरमणीयाऽसौ।**

**मञ्जुनाथ योषितो रमन्ते गेहे गेहेऽधुना**

**विमृश मनागयि मदुक्तिर्माननीयाऽसौ**

**मानमपनीयाऽऽयाहि सुमुखि मदीयाऽन्तिके**

**श्रावणतृतीया भाति नूनमद्वितीयाऽसौ ॥ ३९ ॥**

कुसुम्भरागरञ्जिते कञ्चुके निलीनाभ्यां कुचकुम्भाभ्यां नता। दोलाम् उपनीय अधिरुह्य। विमृश मनागयि, अयि मनाक् विमृश॥ ३९ ॥

*** सिंहाऽवलोकनम् ***

**लहरीललितरङ्गरञ्जितरुचिरपटा**

**सुन्दरीसुरूपघटामण्डिताऽद्य नगरी**

**नगरीनरेशमाधवेशसभाभासितेऽस्मिन्**

**तृतीयामहोत्सवे विभाति रङ्गसुझरी।**

**सुझरी निबद्धा नीरधाराधैररम्बुधरै-**

**रेजते वियोगिनामुदीक्ष्य चित्तशफरी**

**शफरीसुचञ्चलदृगञ्चलमुषितमना**

**नन्दति कुरङ्गनयनाऽसौ कामलहरी ॥ ४० ॥**

लहरीणां ललितरङ्गेण (लहरिया) रञ्जिताः रुचिराः पटाः यस्यां सा रूपघटाभिर्मिण्डिता अद्य नगरी (अस्ति)। माधवेशसभा-(दरबार)-भासिते तृतीयोत्सवे रङ्गस्य झरी (घटा) भाति। तद्दिने राजसभायामेकरङ्गाण्येव वस्त्राणि धार्यन्ते। अम्बुधरैः सुन्दरा झरी (झड़ी) निबद्धा। झरीं दृष्ट्वा वियोगिनां चित्तरूपा शफरी एजते कम्पते। मीनवत् चञ्चलेन दृगञ्चलेन मुषितं रसिकानां मनो यया सा कामलहरी कामदेवस्य लहरीभूता॥ ४० ॥

**मेलकः**

**भवन-विटङ्क-वीथि-वातायन-मन्दिरेषु**

**पौरपङ्कजाक्षीद्युतिदूरदर्शनीयाऽसौ**

**पञ्चरङ्गकेतुधरकुञ्जर-तुरङ्ग-रथ-**

**पत्तिपुञ्ज-मञ्जुगौरीयात्रामहनीयाऽसौ।**

**मञ्जुनाथ भाति पुरी वारिदवितानतले**

**मेलकनिबद्धजनलेखालालनीयाऽसौ**

**प्रथमा समग्रतिथिमध्ये गणनीयाऽप्यद्य**

**श्रावणतृतीया भाति नूनमद्वितीयाऽसौ ॥ ४१ ॥**

मेलकदर्शनार्थं भवनादिषु स्थितानां पुरवासिनीनां पङ्कजाक्षीणां द्युत्या अत्यन्तं दर्शनीया (असौ पुरी), मेलके आगताः पञ्चरङ्गध्वजधारका ये कुञ्जराः, तुरङ्गाः, रथाः सैनिक-पदातिपुञ्जाश्च तैः मञ्जुला या गौर्याः (तीज) यात्रा (सवारी) तया पूजनीया। वारिदरूपस्य वितानस्य तले, मेलके निबद्धा या जनलेखा (लोकानां पङ्क्तिः) तया लालनीया शोभनीया पुरी भाति। समग्रतिथिमध्ये उत्सवसंभारात् प्रथमत्वेन गणनीयाऽपि सेयं तृतीयेति विरोधः।।४१ ।।

'तृतीयामहोत्सववोचिता जयपुरीयहिन्दीसंस्कृतयोर्लहरिरचना'

('लहरिया')

**त्यारी हुई तीज की तमासो तिरपालै जुड्यो**

**सागै सहणायाँ में मलार रागणी बाजी**

**पश्य पञ्चरङ्गध्वजवाही वारणोऽयं भाति,**

**कौतुकं ददाति पदा सोयमुच्छलन् वाजी।**

**वा जी वा! जम्यो छै म्हांटो मे भी किस्यो मौका मालै**

**लैरया चूँदड्यां भी आज भीजै भोत भाया जी**

**राजद्युतिराजन्मञ्जुमेलकसमाजमनु**

**राजतेऽम्बुपूरैरियं राजवीथिकाराजी ॥ ४२ ॥**

मेलके मिलिताः स्वस्वभाषया तं वर्णयन्ति--गौर्याः (तीज) आगमनस्य वेला जाता। 'त्रिपोलिया' समीपे कौतुकसामग्री संघटिता। पश्य, सहनायिकासु स्पष्टं मल्लाररागो वाद्यते। एकेन पदा उच्छलन्। अहो मेघोपि कीदृशे समये समागतोस्ति, अद्य बहूनां लहरिया-चुँदडीचित्रवस्त्राण्यार्द्राणि भवेयुः। राज्ञः शोभया राजति मेलकसमाजेऽस्मिन् राजमार्गपङ्क्तिः अम्बुपूरैः शोभते ॥ ४२ ॥

रक्षाबन्धनम्

**मङ्गलमनोज्ञवेषशोभमाननागरीभि-**

**र्द्वारोपान्तलिख्यमानश्रवणा विभासते**

**पाविता पुरस्तात्पुरः श्रावणीनिलीनैर्द्विजैः,**

**योजिता नवीनैर्गीतिसंसदः समासते।**

**शोभमानरक्षाबन्धबन्धुरकराग्रा नराः**

**प्रमदपरायणाः सुमङ्गलमुपासते**

**तूर्णमात्मदक्षिणायै घूर्णमानदीनद्विजा**

**पूर्ण-मा-समिद्धा रक्षापूर्णिमा प्रकाशते॥ ४३ ॥**

नगरवासिनीभि: सुवासिनीभिर्द्वारदेशे लिख्यमान: श्रवणो यस्यां सा। पुर: नगर्या: श्रावणीकर्मणि संलग्नैर्द्विजै: पवित्रीकृता। नवीनै: केवलं विलासिभि: योजिता: उत्सवार्था गानसभा: समासते अधिविष्टा भवन्ति। रक्षाबन्धेन सुन्दरं कराग्रं येषां ते सुमङ्गलम् उपासते अनुतिष्ठन्ति। पूर्णया मया शोभया समिद्धा आढ्या॥ ४३॥

**केचित्करनीतरम्यरक्षान्द्विजदक्षान्वीक्ष्य**
**यान्ति किल कक्ष्यान्तरे भीता इव दुर्गमे**
**नाऽभ्युत्थातुमन्ये क्षमा: पक्षाऽऽघातरुग्णा इव,**
**दुरितविलक्षा: केपि भुग्ना भयविभ्रमे।**
**केषांचिद्वचनमपि नैति नयरूक्षाऽऽनने**
**गमनप्रतीक्षा: केचिदासते बुधाऽऽगमे**
**याचन्ते न भिक्षां कलयन्ति किन्तु दक्षा इमे**
**योग्यतापरीक्षां रक्षाबन्धनदिनाऽऽगमे॥ ४४॥**

करे नीता रम्या रक्षा (पट्टनिर्मिता राखी) यैस्तान् वीक्ष्य, भीता: इव दुर्गमे गृहकक्ष्यान्तरे याान्ति। अन्ये पक्षाघातरोगिण इव अभ्युत्थानेपि न क्षमन्ते। ये ब्राह्मणान्वीक्ष्य नोत्तिष्ठन्ति तदर्थमिदम्। केचिद्विप्रान् वीक्ष्य संकुचन्ति तदर्थमाह-- दुरितै: विलक्षा: (लज्जिता:) केचिद् भयविलासेन भुग्ना अधोमुखीभूता इव। नीतिरूक्षे केषांचित् आनने वचनम् अपि न एति (नि:सरति)। बुधानाम् आगमने केचित् तेषां गमनमेव प्रतीक्षन्ते। अत एव चतुरा इमे विप्रा लोकानां योग्यतापरीक्षां कुर्वन्ति॥ ४४॥

**राजसभा (दरबार)**

**सर्वविधसम्पत्सर्वतोभद्राऽऽख्यहर्म्यतले**
**सर्वतो विभाति सभा करदमहीभृताम्**
**मध्ये मणिमण्डितमहाऽर्हहेमसिंहासने**
**मानमेदिनीशो भाति शोभामुपनीय ताम्।**
**मञ्जुनाथ संमुखे समिन्धे मञ्जुमल्लारोऽय-**
**मेषा कविमल्लानां सदुक्तिरवधीयताम्**
**'जयपुरधरणिमानरक्षावीरबाहुभृतो**
**मानभूभृतोऽद्य रक्षामङ्गलमुपैधताम्'॥ ४५॥**

शोभाया: सर्वविधा सम्पत्ति: यस्मिन् ईदृशे 'सर्वतोभद्र' ('सर्वता') नामानि सौधे करदायिनां भूम्यधिकारिणां सभा भाति। तां (प्रसिद्धां वर्णनीयाम्) शोभामुपनीय अधिष्ठाय। संमुखे नृत्यन्तीनां वारवधूनां मुखात् मल्लाररागो विजृम्भते। तद्दिने आशीर्वादार्थमुपस्थितानां कविश्रेष्ठानां एषा सूक्तिर्निशम्यताम्, का सा? तामाह-- 'जयपुरभूमे: सम्मानरक्षायां वीरं बाहुदण्डं बिभर्ति तस्य'॥ ४५॥

सो.-- मानसिंह नरनाथ! जयपुररक्षाकरण हे।
रक्षावहरक्षाऽथ रक्षतु रक्षाबन्धने॥ ४६॥

रक्षाकारिणी इयं विप्रकरस्था रक्षा त्वां रक्षतु॥ ४६॥

* गणेशचतुर्थी *

द्वारि द्वारि धूप-दीप-सिन्दूरादिसंभारेण
संभावितलोको गणनाथमर्चयत्यहो
दण्डाऽऽरवनृत्यद्बालवृन्दपरितोषी पश्य
सोयं वृद्धजोषी गुडधानान्संनयत्यहो।
सायं गणनाथं पश्य मोतीडूंगरीस्थं सखे
योऽतीव प्रसिद्धोऽभीष्टसिद्धिं रचयत्यहो
व्यर्थीभूतयत्नः किमु सीदेत्सम्पदर्थी गण-
नायकचतुर्थी चतुरर्थीं घटयत्यहो॥ ४७॥

दण्डानां (डंका) आरवेण नृत्यति बालवृन्दे परितोषयुक्तः। अथवा बालवृन्देन लोकान्परितोषयति तच्छीलः। वृद्धो 'जोशी' ति प्रसिद्धो बालकानामध्यापकः। वृद्धपदेन 'साम्प्रतमियं रीतिर्विरलीभवती' ति ध्वन्यते। चतुरर्थी चतुर्णामर्थानां समाहारः, धर्मार्थादीन् सर्वपुरुषार्थान् घटयतीत्यर्थः॥ ४७॥

* परिक्रमा *

नानाविधवाद्यानां निशम्यतां समिद्धो ध्वनि-
र्विद्युद्भिनिबद्धोऽयं प्रकाशः सुपरीक्ष्यताम्
स्कन्धैरुह्यमानमणिसिंहासनगानामहो
भगवत्सरूपाणां सुसौष्ठवं समीक्ष्यताम्।
मञ्जुनाथ मन्दिरेषु रथ्यामुख-चत्वरेषु
मार्गाणामुपह्वरेषु नारीततिरीक्ष्यताम्
भूरिभक्तविक्रमाय भजनसमाजक्रमा
लोकदुरतिक्रमा परिक्रमा प्रतीक्ष्यताम्॥ ४८॥

लोकानां स्कन्धैः उह्यमानेषु सिंहासनेषु स्थितानां भगवत्सरूपाणाम् राम-कृष्णादिसमानं रूपं येषाम् तेषाम्। उपह्वरेषु समीपेषु। बहूनां भक्तवणिजां पराक्रमप्रदर्शनाय भजनगानक्रमो यस्यां सा। अत्र हि भक्ता अतीव तारस्वरेण गायन्तः स्वपराक्रमं प्रदर्शयन्ति। अतीव संकुलतावशात् लोकैः दुःखेन उल्लङ्घयितुं शक्या नगरपरिक्रमामण्डली प्रतीक्ष्यताम्। प्रतीक्ष्यतामित्यनेन सन्ध्यासमये साङ्गानेरगोपुरसमीपे स्थितास्तदागमनं प्रतीक्षन्ते इति तत्स्थितिः सूचिता॥ ४८॥

* सन्ध्या ( साँझी ) *

कुत्रचित्कदलिपल्लवानाम्, क्वचित्तूलिकानाम्
रङ्गाणां क्वचित्तु शुभशिल्पमुपादीयते
द्वासप्ततियन्त्रैः, क्वचिच्चित्रैः, क्वचिन्मूर्तिचयैः,
कुत्रचित्तु सिंहेनैव विस्मयो विधीयते।
वैदेशिकवैभवेन देशे भृशमल्पायित-
शिल्पानां प्रदर्शनीव किमियं न गीयते
वर्तमानविज्ञवरैर्वन्ध्या विदिताऽपि सखे
सन्ध्याशिल्पचातुरी न किं ध्यानेऽद्य नीयते॥ ४९॥

क्वचित्कदलिपल्लवानां खण्डैर्नानाविधगृहोद्यानादिचित्राण्युत्कीर्यन्ते (केल की संस्या) घाटगोपुरे जायमाना 'तुलीकी संस्या'। व्यासानां गृहे गोपीनाथमन्दिरादिषु च जायमाना 'रङ्ग की सांझी'। द्वासप्ततियन्त्रैः क्वचिल्लोकानां विस्मयो विधीयते 'बहत्तर कलकी सांझी'। मूर्तिचयैः 'बांदरी के नासिक' स्थाने जायमाना 'रामसिंह की सांझी' 'चौडारास्तान्तर्जायमाना भट्टानां सांझी' सूच्यते। सिंहेन विस्मयः, महाविशालः 'देवादास का नाहर' सूच्यते। इयं सन्ध्या हि, यदा वैदेशिकराज्यवशात् देशीयशिल्पानि देशे अल्पतामभजन्, तदा लोकेषु तदुत्साहप्रवर्तनाय आश्विनकृष्णे कौतुकरूपेण 'सन्ध्या'व्यपदेशात् देशीयशिल्पानां संक्षिप्ता प्रदर्शनीव चतुरैः प्रचारिता इति सूच्यते। वर्तमानाः ये विज्ञवराः (साकूतमिदम्) तैरियं सन्ध्या निष्फला विदिता, परमुपर्युक्तरीत्या उपयुक्ता सेयं शिल्पचातुरी भवता अवधाने किमिति न नीयते? अपि त्ववश्यमवधाय उन्नतिं नेयेत्याशयः॥ ४९॥

* आश्विननवरात्रेषु जायमानः षष्ठीमेलकः *

प्रातर्नरसिंहमेक्ष्य, यामद्वयीमध्ये मनो
मातरं शिलामयीमवेक्ष्य सफलं कुरु
देलरामरम्याऽऽरामदेशे पुञ्जीभूतजने
ह्याम्बरनगरमञ्जु' गुञ्जी 'कवलं कुरु।
सायंकालपूर्वमेव कालमहादेवं प्राप्य
वीक्ष्य बालवामा नेत्रयुग्मं तरलं कुरु
स्पष्टीकृतवृष्टिफल-मेलकमहिष्ठीभूत-
माश्वयुजशुल्कषष्ठीमेलकमलङ्कुरु॥५०॥

प्राचीनजनोपात्तः षष्ठीमेलकदर्शनक्रमो वर्ण्यते-- प्रातः नरसिंहदर्शनं कृत्वा (यतः अष्टवादनात्पूर्वमेव तत्र दर्शनादिकं भवति), द्विप्रहरसमीपे 'शिलामयी'मातरं वीक्ष्य, मनः सफलं कुरु। ततः अवतीर्य,

पुञ्जीभूता: लोका: यस्मिन्नीदृशे 'दलारामोपवने' आम्बेरनगरप्रसिद्धानां गुञ्जीनाम् ('गूंजी पयःसारनिर्मिता: 'पेटक' विशेषा:) कवलं भोजनं कुरु। स्पष्टीकृतं वृष्टिफलं येन तम्। (तत्र हि 'मावटा' ह्रदे यावज्जलमायाति तावती वृष्टि: परिज्ञायते)। सर्वमेलकेषु अतिशयेन महान्तम्॥ ५०॥

*** दशहरा ***

**चञ्चत्पञ्चरङ्गनवपृथुलपताकावहा**

**रोचते चतुष्पटी नटीव रङ्गरुचिरा**

**तोपध्वनिधीरमर्चयन्ते गिरिदुर्गाऽङ्गणे**

**वीरराजपुत्रा मञ्जदुर्गां मन्त्रमुखरा:।**

**मञ्जुनाथ मानमेदिनीन्द्रहर्म्यमालाऽन्तिके**

**वाजि-गजमाला भाति पूजापुष्पविकिरा**

**दिव्यरवदीर्घं घोषयन्ते दिवि दुन्दुभयो**

**'दीव्यति दिगन्ते दिव्यदशमी दशहरा'॥ ५१॥**

चञ्चन्त: पञ्चरङ्गा (वर्णा:) यासु एवंविधा: नवीना: पृथुला: राजपताका वहन्ती चतुष्पटी 'चौपड़' रङ्गरुचिरा नटीव रोचते। नटी यथा नवरङ्गाणि वस्त्राणि धारयति तथा चतुष्पटी अपि महादीर्घा नवीनपताका धारयति (तद्दिने नवा राजपताका: (झंडा) स्थाप्यन्ते)। तोपध्वनिभिर्धीरं यथा स्यात्तथा दुर्गेषु राजपुत्रवीरा दुर्गां पूजयन्ति। मध्याह्ने दुर्गेषु भगवतीपूजा भवति, तदवसरे च दुर्गेभ्य: तोपध्वनयो भवन्ति। सायं च पूजापुष्पाणां विकिरा (प्रवर्षिणी) वाजिनां गजानां च पङ्क्तिर्भाति। तद्दिने अश्व-गजरथादीनां राज्ञा पूजा क्रियते। दिवि आकाशे प्रतिध्वनिता दुन्दुभय: दिवि स्वर्गे देवै: कृतेन रवेण दीर्घं यथा स्यात्तथा इदं घोषयन्ति यत्--'अद्य दशहरा दीव्यति शोभते' देवा अपि जयपुरेन्द्रस्याभ्युदये संमिलिता भवन्तीति ध्वन्यते॥५१॥

**राजसभा (दरबार)**

**सामन्तै: समेत: सर्वतोभद्रे विधाय सभां**

**शिञ्जितैरनिद्रे याति सैन्धवपूजोत्सवे**

**शिञ्जारवनिर्भरांस्तुरङ्ग-दन्ति-पुष्यरथान्**

**युञ्जानोऽधिकारिचयैरर्चति सुखोत्सवे।**

**तस्यान्तरे तोभध्वनौ भरति नभस्यान्तरे**

**याति जयनगरनरेशो विजयोत्सवे**

**मानमेदिनीन्द्रजययात्राऽऽलोकलोभाऽधिका**

**भाति कापि शोभा जयदशमीमहोत्सवे॥ ५२॥**

सामन्तैः सहितः (जयनगरनरेशः) सर्वतोभद्राख्यहर्म्ये सभां विधाय, हय-कुञ्जरादीनां भूषणझणाकारैः अनिद्रे मुखरिते पूजोत्सवे याति। सुखे सुखकारके तस्मिन्नुत्सवे अधिकारिवर्गैः सह युञ्जानः संगच्छमानः तुरङ्गादीनर्चति। पुष्परथः शृङ्गारितो यः शोभायात्रायां याति न समरे। तस्य अन्तरे (पश्चात्), नभःसम्बन्धि नभस्यम् तस्मिन्नवकाशे (गगनदेशे इत्यर्थः) तोभध्वनौ भरति सति। तोभः 'नभ तुभ' हिंसायाम्॥ ५२॥

*** शलकमेलकम् ***

**दशम्या द्वितीयेऽस्मिन्नतीवाऽऽमोददायिदिने**
**बालुकया पीवा फतेटीबा समुपेयताम्**
**'रामबाण' 'घूमबाण' जाग्र'ज्जयसिंहबाण'-**
**प्रमुखोऽत्र प्राणलोपितोपगणो वीक्ष्यताम्।**
**मध्ये युज्यमानदन्तिवाह्येन्द्रविमानमुखे**
**श्रीमान्मानमेदिनीमरुत्वान्समवेक्ष्यताम्**
**नालकमुखोद्गतनिनादनदनालमिदं**
**कलकलशालि शलकमेलकमवेक्ष्यताम्॥ ५३॥**

बालुकया पीवा पुष्टः। तोपमण्डलस्य मध्ये युज्यमानाभ्यां दन्तिभ्यां वहनीयो यः 'इन्द्रविमानः' (तन्नामको महत्तमो रथः) तस्याग्रभागे। तोपबन्दूकादीनां नालकस्य ('नाली') मुखात् उद्गताः निनादरूपा नदाः नालकाश्च ('नाले') यस्मिन् तत्। महातोपानां मुखाद् घोरनादरूपा नदाः प्रादुर्भूताः, लघुनलिकास्त्राणां च मुखात् लघुनादरूपा नालकाः समुद्गता इति यथायथं योज्यम्॥ ५३॥

*** नगरे आगमनम् (सवारी) ***

**चत्वर-चतुष्पथ-चतुष्क-चित्रशाला-स्थिताः**
**काश्चिच्चारुचैत्यचन्द्रशालाचयमासते**
**विपणि-विटङ्क-वप्र-वातायन-मन्दिरेषु**
**काचिद्वासवीथीवेश्ममालान्तराद्वीक्षते।**
**देवगृह-गोपुर-गवाक्षचक्रवालान्तरात्**
**काचित्केलिसद्मञ्जुजालात्प्रसमीक्षते**
**पश्यत्पुरबालानयनारविन्दमालाऽङ्किता**
**नगरीह मानभूमिपालाऽऽगममीक्षते॥ ५४॥**

चत्वरं विस्तृतं प्राङ्गणम्। चतुष्कं 'चौक' पदवाच्यम्। काश्चिञ्च चैत्यानाम् (पूज्यगृहाणाम्) चन्द्रशालानां च चयं समूहम् आसते अध्यासते, 'आस्'मात्रस्य उपसर्गसहकृतोर्थो विविक्षितः। विटङ्कः

'छज्जा' प्रभृतिरुन्नतो देशः। वप्रं प्राकाराधारः। वातायनं वातागममार्गः 'खिड़की'। गवाक्षः 'झरोखा' पदवाच्यः। मेलकं पश्यन्तीनां पुरबालानां नयनारविन्दमालयाऽङ्किता चिह्निता (नगरी)। निजस्वामिनः कण्ठे परिधानार्थं हस्तयोर्मङ्गलमाल्यं वहन्ती शृङ्गारयुक्ता काचिन्महिला उत्सवदिने यथा तदागमनं प्रतीक्षते एवमुत्सवसंभारैरलङ्कृता जयपुरनगरी हर्षविकसितनारीनेत्रकमलमालामाददती मानभूपस्यागमनं प्रतीक्षत इत्याशयः ॥५४॥

अस्य मेलकस्यान्योपि यात्रोत्सवः (सवारी) चित्रचत्वरे '२८' पद्ये विलोक्यः।

### * शरत्पूर्णिमा *

### (दरबार)

**'प्रियतमनिवास'हर्म्यमालाञ्जुमौलिगता**
**विशदविशाला चन्द्रशाला भूरि भासते**
**स्वच्छपयःफेनपाण्डुरेऽस्मिन् विपुलाऽऽस्तरणे**
**शुभ्रमञ्जुलाऽऽभा इमे सामन्ताः समासते॥**
**मध्ये रौप्यसिंहासने मानमेदिनीश एष**
**पूर्णरजनीशरम्यरोचिषि विभासते**
**चूर्ण्यमानचन्द्रचयपूर्ण-मा-प्रमोदवहा**
**मानमहसाऽद्य शरत्पूर्णिमा प्रकाशते॥ ५५॥**

चन्द्रशाला 'चांदनी'। सर्वश्वेतवस्त्रधारणात् शुभ्रा मञ्जुला च आभा (कान्तिः) येषां ते। चूर्णीक्रियमाणो यो बहूनां चन्द्रमसां समूहस्तस्य पूर्णशोभायाः प्रमोदवाहिनी। श्रीमन्मानसिंहदेवस्य कीर्तिप्रकाशेन शरत्पूर्णिमा तथा प्रकाशते तथा ह्येषा चूर्णीकृतानामनेक-चन्द्रमसां पूर्णशोभाया वाहिनी भवेदित्याशयः॥ ५५॥

### * दीपमालिका *

**खचितविचित्रचित्रजाला भाति भूमिरियं**
**सद्वन्दनमाला द्वारराजिरसौ भासते**
**बालाऽऽमोदवर्द्धिनी विशालाङ्गणवेदिकासु**
**सूतपुष्पजाला पुष्पझरिका प्रकाशते।**
**मञ्जुनाथ मञ्जुचन्द्रशालामभिमण्ड्य जनाः**
**प्रतिगृहमेते किल कमलामुपासते**
**बालाकरदत्ता दीपमालादिनदैर्घ्यकरी**
**राजत्सौधमाला दीपमाला भूरि भासते॥ ५६॥**

सुवासिनीभिः उत्सवनिमित्तं खचितानि (लिखितानि) विचित्राणि चित्रजालानि यस्यामेवंविधा सेयं गृहभूमिर्भाति। उत्तमा वन्दनमाला ('बंदनवार')यस्यां सा द्वारपंक्तिर्भासते। बालकानाम् आमोदस्य आनन्दस्य वर्द्धिनी, सूतानि (उत्पादितानि) पुष्पजालानि यया ईदृशी पुष्पझरिका ('फूलझड़ी अग्निक्रीडनकविशेषः') प्रकाशते। जनाः चन्द्रशालां (उपरितनं गृहम्) अभिभूष्य कमलां उपासते (पूजयन्ति)। स्त्रीणां करैर्दत्ता, दीपमालादिनस्य दीर्घताकरी (दीपानां तथा प्रकाशो भवति यथा रात्रावपि दिनमिव प्रतीयते, अत एव दिनस्य दीर्घता), राजन्ती सौधमाला यया ईदृशी दीपानां पङ्क्तिः भासते ॥५६ ॥

**दीपावल्याः सायंकाले नगरशोभा**

**हर्म्यमौलि-मन्दिर-गवाक्ष-गेह-गोपुरेषु**
**देवशिखरेषु दीपपद्धतिरुदीक्ष्यताम्**
**आपणेषु दर्शितनिवेशनैपुणेषु भृशं**
**पित्तलादिपात्रभूरिवैभवं परीक्ष्यताम्।**
**मञ्जुनाथ सिंहदुर्गदीपद्युतिरेषा किमु**
**दृश्यते सुरेशादिकनगरे ? समीक्ष्यताम्**
**राजमार्गपालीभासिविद्युद्दीप्रदीपालीयं**
**जयपुरनगरदुर्गदीपाली निरीक्ष्यताम् ॥ ५७ ॥**

दर्शितं पित्तलादिपात्राणां निवेशस्य (स्थापनप्रकारस्य) नैपुणं येषु ईदृशेष्वापणेषु। सिंहदुर्गस्य 'नाहरगढस्य' दीपकान्तिः सेयमिन्द्रादीनामपि किं नगरे दृश्यते ? अपि तु नास्तीत्यर्थः। राजमार्गपाल्यां (राजमार्गपङ्क्त्याम्) भासिनी विद्युतः दीप्रदीपानामालिर्यस्यां सा, जयपुरनगरस्य नाहरगढदुर्गस्य च दीपालिर्दृश्यताम् ॥ ५७ ॥

**राजरुचिरोचितसुरङ्गहर्म्यमालिकासु**
**चञ्चत्काचकान्तिदीपरुचिरुपभासते**
**राजमार्ग-वीथी-वणिगापण-गृहाजिरेषु**
**काञ्चिद्रुचिमेक्ष्य रविरुचयोऽप्युदासते।**
**मञ्जुनाथ सम्यगेव मन्यसे समक्षमियं**
**मानराट्प्रतापपुञ्जमञ्जुभा विभासते**
**चत्वर-चतुष्पथ-चतुष्क-चित्रशालिकासु**
**हर्म्याट्टालिकासु दीपमालिका प्रकाशते ॥ ५८ ॥**

राज्ञः शोभया दीप्तासु सुरङ्गहर्म्यमालासु, चञ्चन्ती काचावरणानां कान्तिर्येषु ईदृशानां दीपानां रुचिः कान्तिः भासते। राजप्रसादे काचाच्छादितदीपपङ्क्तिः शोभते इत्याशयः। राजमार्गादिषु काञ्चित् अपूर्वां कान्तिं आ-ईक्ष्य भानुकान्तयोप्युदासीना भवन्ति। मञ्जुनाथ त्वं सम्यगेव मन्यसे यत् इयं दीपावलीदीप्तिर्नास्ति किन्तु मानसिंहदेवस्य प्रतापपुञ्जस्य मञ्जुला भा (प्रभा) अस्ति। चत्वरो विस्तृतं प्राङ्गणम्। चतुष्कं 'चौक' पदवाच्यम् ॥५८॥

*** राजसभा ***

**काचमणिमञ्जुलसुदृशदीपशाखिचयै-**
**र्विजितदिनेशविभा भूरि सभा भासते**
**सजलजलदभासि-वसनविभासिनोऽमी**
**सामन्ताः समन्तादिह मोदोन्मदमासते।**
**मञ्जुनाथ राजोचिततेजसा महेन्द्रसमो**
**मध्ये जयनगरनरेशोऽयं प्रकाशते**
**राजन्ते महीपा बत दीपावलीवैभवेन**
**मानमेदिनीपादद्य दीपावली राजते॥ ५९॥**

दीपशाखिनः ('झाड') प्रसिद्धाः तेषां समूहैर्विजिता सूर्यस्यापि विभा यया सा, अतिप्रकाश-वतीत्यर्थः। जलदवद् भासन्ते यानि वसनानि तैर्विभासिनः, अतिश्यामवस्त्रधारिण इति भावः। दीपावल्यां सर्वैः श्यामान्येव वस्त्राणि धार्यन्ते। मोदोन्मदं यथा तथा आसते तिष्ठन्ति। अन्ये राजानो दीपावल्या राजन्ते मानभूमिपात्तु स्वयं दीपावली राजते। राज्ञां शोभाप्रदातुरप्ययं शोभादायक इति महातिशयो ध्वन्यते॥ ५९॥

'जगमग जोति जगी झाड़ औ फनूसन की,
दमितदिनेसद्युति द्योत दरबारी है
सजल जलद रंग सुन्दर बसन साज,
सोहत समाज के उमंग उर भारी है।
मध्य में विराजमान मानवसुधेन्द्र राजैं,
महित महेन्द्र सम राजतेजधारी हैं,
औरैं मेदिनी के पति दिपत दिवारी पाय,
मान मेदिनीपति सों दीपति दिवारी है' ॥५९॥

**भ्रातृद्वितीया मसीपात्रपूजा च**

**भ्रातरः प्रयान्ति भगिनीनां भवनेषु यत्र**
**सौभ्रात्रं भजन्तो धारयन्तो मञ्जुमालिका**

भोज्यव्यञ्जनानि भूरि भूरि भजमाना स्वयं
भोजयति भ्रातृन् भगिनीयं भव्यभाविका।
मञ्जुनाथ यद्दिने मिमेल मसीपात्रपूजा
कार्यालय-भृ-जागृतपूजाविधिसाधिका
भ्रातृभगिनीनां स्नेहभावैर्भावनीया भूरि
किं भ्रातृद्वितीया गणनीया न गुणाधिका ?॥ ६० ॥

सौभ्रात्रम् प्रशंसनीयं भ्रातृभावम्। मञ्जुमालिकाः सुवर्णादिनिर्मितमालिकाः धारयन्तः, शृङ्गारयुक्ता इत्यर्थः। 'मालिकाः' इति विसर्गस्य पादान्तरभकारपरत्वाल्लोपः। कार्यालयभूमिषु जागृतस्य पूजाविधेः साधिका मसीपूजाऽपि यद्दिने मिलितास्ति। तद्दिन एव यवनाद्यधिष्ठितेष्वपि न्यायालयकार्यालयादिषु कर्मकाण्डविधिर्जागरूक इव दृश्यते इति सूच्यते॥ ६० ॥

**मकरसंक्रान्तिः**

प्रतिगृहमेव मोदमुत्साहं विमार्ग मनाक्
स्त्रीषु सुखसंनाहं समीक्ष्य मुदुन्मुद्र्यताम्
प्रतिगृहदीयमान 'फेनी'तिलमोदकाऽऽद्य-
धीनीकृतकारुजने साधय सुभद्रताम्।
मञ्जुनाथ पश्य पुरः पौराणां पतङ्गसुखं
बालानामिहोर्ध्वमुखं धावतामनिद्रताम्
श्रान्तिमपनीय पतङ्गेषु पराक्रान्तिमेहि
धेहि न संक्रान्तिदिव्यदिवसे दरिद्रताम्॥ ६१ ॥

विमार्ग पश्य। सुखसंनाहं सुखोत्तेजनाम्। मुत् (हर्षः) उन्मुद्र्यताम्। रमणीषु सुखपूर्णमुत्साहं वीक्ष्य हर्षो विकास्यतामित्याशयः। प्रतिगृहं दीयमानैः 'फैनी' (गोधूमातिसूक्ष्म-चूर्णनिर्मितः पिष्टकविशेषः 'सूत्रिका'-) तिलमोदकादिभिः अधीनीकृते कुम्भकार-नापितादिगृहकार्यकरजने भद्रतां साधय। फेनिकादिप्रदानेन तान्वशीभूतान्कृत्वा तेषु व्यवहारे भद्रतां स्थापय। अप्रदाने तु ते न विनयं भजन्तीति भावः। पतङ्गानाम् 'कनकौआ' इत्यादि- नाम्नां दोरकोड्डायनीयानां क्रीडनकानां सुखम् आनन्दम्। ऊर्ध्वमुखं यथा स्यात्तथा भवनपृष्ठेषु धावतां बालकानामनिद्रताम् (उत्साहं) च पश्य। पतङ्गदर्शनार्थमुन्मुखाः धावन्तो ब्रहवो नीचैर्निपतन्तीति घटनापि सूच्यते। श्रमं दूरीकृत्य पतङ्गोड्डायने पराक्रमं स्वीकुरु॥ ६१ ॥

*** जयपुरप्रसिद्धा अन्ये उत्सवाः ***

**वरयात्रा (निकासी)**

अहह निशम्यतां सवाद्यसहनायीस्वरो
रुचिर'हवाई'ध्वनिर्दूरतः प्रतीक्ष्यताम्

**मध्यतः प्रविश्य सखे दृश्या वरयात्रिच्छटा**

**नृत्ये निकटाऽऽगतापि गणिकेयमीक्ष्यताम्।**

**मध्येसभं निन्दतां च बालकविवाहमहो!**

**भव्यवरवेषवहो बालोऽसौ निरीक्ष्यताम्**

**पात्राऽपात्रनिःस्पृहा सुभूरिधनमात्राव्यया**

**जयपुरविवाहवरयात्राऽसौ समीक्ष्यताम्॥ ६२॥**

दुन्दुभिवाद्येन सहकृतः 'सहनायिका' वाद्यस्वरः श्रूयताम्, यद्वादक - मण्डली शकटस्था अग्रे चलति। 'हवाई' गगने दूरं गत्वा सशब्दं चमत्कुर्वत्तारकाप्रका-शकोऽग्निक्रीडनकविशेषः। मध्यतः उभयतोबद्धराजपदातिश्रेण्या मध्ये प्रविश्य। वरयात्रिणामग्रतो निबद्धे मण्डले संमुखतो नृत्यन्ती गणिका दृश्यताम्। अहो समाजसंशोधनसभाया मध्ये बालविवाहं निन्दतां वरपक्षीयाणामेव सज्जनानां मध्ये वरवेषवाही असौ बालो वीक्ष्यताम्। ये सभायां बालविवाहं निन्दन्ति त एव मध्येराजमार्गं भेरीनादपुरस्सरं बालकवरस्य वैवाहिकयात्रां नयन्तीति बालपदस्याऽऽकूतम्। धनव्ययस्य इदं पात्रम् अपात्रं वेति विवेक निःस्पृहा, भूरिधनमात्राया व्ययो यस्यां सा। सेयं विचारपुरस्सरं समालोचना दृग्गोचरीक्रियते कौटिल्य-भावेनेति 'समीक्ष्यतां' पदेन सूच्यते॥ ६२॥

प्रथमप्रथमं विद्युतः (Electricity) प्रवर्तने अधिजयपुरं जायमानो

विद्युत्प्रकाशोत्सवः (पौषस्यामामारभ्य, संवत् १९८३)

**विद्युत्प्रभाभासिता विभाति स्वर्गशूली भृशं**

**श्रीरामनिवासाऽऽद्यस्ति विस्मितसमस्तसूरि**

**विद्युदियं चारुचांदपोलयाता संचकास्ति**

**त्रितलत्रिपोलियाऽपि तडिता तमोविदूरि।**

**मन्ये साक्षादिन्द्रमेव मत्वा मानमेदिनीन्द्र-**

**मेषा मुहुर्विद्योतते विद्युद् हृदयाऽवपूरि**

**तस्मादेव चञ्चलाऽप्यचञ्चलायितत्वमाप्य**

**स्वामिसदनानामञ्चलाऽऽगता विभाति भूरि॥ ६३॥**

रामनिवासोद्यानहर्म्यम् (म्यूजियम), तत्समीपस्थं घण्टागृहम् एतदादि स्थानम्, विस्मताः समस्ताः सूरयो यस्माद् ईदृशमस्ति। मर्मरपाषाणनिर्मितस्य सप्तभूमस्य लोक-प्रसिद्धस्योद्यानहर्म्यस्य सर्वतो व्याप्तैर्विद्युद्दीपैरभूतपूर्वा शोभाऽभवदित्याशयः। त्रितलं त्रिपोलियाख्यगोपुरमपि विद्युता (करणेन) तमः विदूरयति तादृशमस्ति। आमूलचूडं विद्युद्भासितस्य तस्यापि अनुपमा सुषमाऽभवदित्यर्थः। मानभूमीन्द्रं साक्षादिन्द्रमेव मत्वा मेघवाहनस्य इन्द्रस्यधीना एषा (विद्युत्) हृदयाऽवपूरि यथा स्यात्तथा (पूर्णहृदयेन) विद्योतते। तस्मादेव (तत एव) स्वामिनः (माननरेशरूपस्य निजस्वामिन इन्द्रस्य)

सदनानाम् अञ्चलाऽऽगता प्रान्तोपस्थिता चञ्चलाऽपि सेयं स्वामिसेवाभयेन निजस्य चञ्चलत्वं त्यक्त्वा भूरि भाति। स्वामी अप्रसन्नो भवेदिति भयेन स्वाभाविकीं चञ्चलतां त्यक्त्वा सुस्थिरतया प्रकाशत इत्याशयः। क्षणप्रभायाः सुस्थिरं प्रकाशं वीक्ष्य सेयमुत्प्रेक्षा॥ ६३॥

* 'हेडा' ( भूरिभोजनम् ) *

**प्रथमं प्रवेशद्वारि देयं भोजपत्रमिदं**
**भूरिभोज्यपेयं पटमण्डपमथेक्ष्यताम्**
**'भो भो देहि मोदकान्' 'निधेहि भूरि कर्चूरिकाः'**
**'शीघ्रतां विधेही'त्यादि कौतुकमपेक्ष्यताम्।**
**पटवृतिछिद्रेभ्यो निरीक्षमाणनीचजनं**
**निर्गमं प्रतीक्षमाणनापितं निरीक्ष्यतां**
**रथ्याधूलिधोरणीषु हेडाभोज्यमानजनं**
**जयपुरनगर'हेडा'भोजनमवेक्ष्यताम्॥ ६४॥**

प्रवेशस्य द्वारे 'नाका' इति प्रसिद्धे भोजनस्य पत्रं 'टिकट' इति प्रसिद्धं देयम्। अथ पत्रदानोत्तरं भूरि भोज्यं पेयं च वस्तु यस्मिन्ननीदृशं पटनिर्मितं मण्डपम् 'कनातान्तः' प्रविश्यतामित्यर्थः। निरीक्षमाणाः भोज्यसामग्रीं सलालसं पश्यन्तो नीचाः (चाण्डालादयः पात्राद्वहिष्कृताः) जना यत्र तत्। भोज्यस्थाने संमार्जनीं दातुं जननिर्गमं प्रतीक्षमाणाः नापिता यस्मिन् तत्। रथ्यायाः धूलिधोरणीषु (समूहेष्वित्याशयः)। हेडया हेलया (डलयोरभेदः) भोज्यमानाः जना यस्मिँस्तत्। येषां चण्डालादीनां गृहे आगमनमपि सदर्पं वयं निषिध्यामस्तेषां भोज्यनिरीक्षणम्, आवरणपटस्पर्शश्च, ये नापिताः स्पर्शेपि निषिद्धास्ते भोज्यखण्ड-संकुलामुच्छिष्टस्थानधूलिं केवलं संमार्जन्या इतस्ततः कुर्वन्ति, धूलिं चोड्डाययन्ती-त्यादिदुर्दशाभिः सुस्पष्टा निमन्त्रितानाम् अवहेला॥ ६४॥

* प्रसंङ्गतो दाक्षिणात्यानां भूरिभोजनम् *

**केचिन्मुखमानयन्ति मोदकमुदस्य मुदा**
**केचित्तन्निरस्य नीरमापिबन्ति वीक्ष्यताम्**
**वारयन्ति केचिन्नतनेत्रं परिवेषयन्ती-**
**मन्ये भोजलग्नास्तत्र पश्यन्तीत्युदीक्ष्यताम्।**
**वामपङ्क्तिमध्ये मञ्जु यो जन इहाऽस्ति तस्य**
**भोजनेन साकं नेत्रयोजनमपीक्ष्यताम्**
**सौरभसुवासि भव्यभवनविभासि भूरि-**
**दक्षिणदिग्वासि-विप्रभोजनमवेक्ष्यताम्॥ ६५॥**

केचित् उदस्य उत्क्षिप्य मोदकं मुखं (मुखे) आनयन्ति, केचित् तत् (मोदकम्) त्यक्त्वा जलं पिबन्ति। शिष्टतया नतनेत्रं यथा स्यात्तथा परिवेषयन्तीं वारयन्ति। भोजे संलग्नाः अन्ये केचत्तु तत् (परिवेषणादिकम्) न पश्यन्ति। चित्रे वामपङ्क्तौ यो जनोऽस्ति तत्कर्तृकं मञ्जु नेत्रयोजनं परिवेषयन्तीं प्रति नेत्रपरिचालनमपि ईक्ष्यताम्। अगरुसौरभेण सुवासि सुगन्धितम्॥ ६५॥

**पूर्वस्मृतिः**

**ते केचिद्विलासाः समुदूढघनस्नेहरसाः**
**ते वै परिहासा ये प्रमोदमवहन्नहो**
**तत्तत्समयेषु सुहृद्गोष्ठीसुखसंभृतानि**
**तानि रमितानि यानि चिन्तामहरन्नहो।**
**मञ्जुनाथ निध्यानेन किमपि नवीनानीव**
**कौतुकमिदानीमपि चित्तेऽजनयन्नहो**
**कानिचित्सुखानि तानि पूर्वमनुभूतान्यपि**
**साम्प्रत्तमतीतवृत्तभूतान्यभवन्नहो॥ ६६॥**

समुदूढः धृतः सान्द्रः स्नेहरसो यैः। तानि रमितानि यानि हि निध्यानेन विचारणेन नवानीव (भूतवन्ति) वर्तमानकालेपि कौतुकमजनयन्। अतीतवृत्तभूतानि अतीतकालस्य कर्णश्रुतघटनासदृशान्यभूवन्नित्याशयः॥ ६६॥

------

# नागरिकवीथी

## * विशिष्टजनचत्वरः *

**सो.-- विश्वविदितविभवेषु वरनरेषु विलसितविभा।**
**मद्वाचां विसरेषु वाग्देवी विलसतुतराम्॥ १॥**

श्रेष्ठपुरुषेषु शोभमाना विभा यस्याः सा। तथा च लोके यद्यत् वैभवं तत्तद् भगवत्या विलास इत्यर्थः।

**क.-- नव्यन्यायशास्त्रे यो हि 'शास्त्री'तिप्रकर्षवहो**
**ज्ञाने काव्यशास्त्रीयेऽपि योऽसावभिभासते**
**प्रौढे वयसीह राजगौरवप्रमोदं प्राप्य**
**वीणया विनोदं वहन् वेलां यो विगाहते।**
**मान-भूमिशक्राश्रितमान्यमहद्वृन्दे बृह-**
**च्चक्राकारमुष्णीषं दधानोऽसौ सुखायते**
**विबुधगणेषु यस्य वृत्तिरतिनम्रा भाति**
**राजगुरु-गोपीनाथसम्राडेष राजते॥ २॥**

प्रकर्षवहः 'शास्त्री'ति उत्कर्षधारकः। ज्ञाने अभिभासते प्रकृष्यते। श्रीमानसिंह एव भूमीन्द्रः, तम् आश्रितं यत् मान्यानां महताम् ('सन्तमहन्त') वृन्दं तस्मिन्। सुखायते सुखकारको भवति॥ २॥

**नियमानुसारं शब्दशासनमधीत्य ततो**
**भूयः काव्यसाहित्यावकलनमनोहरे**
**विद्वज्जनसंगमसुखानि नोपलभ्य भृशं**
**राजगुरुगौरवतो गेहान्तरसुस्थिरे।**
**अन्धबधिरेऽपि पूर्वसंस्कारोपबन्धवशा-**
**न्मञ्जुनाऽथ कवितागुणेन सुयशस्करे**
**नारायणभट्टसिन्धुरे याऽमन्दलक्ष्मीरभू-**
**न्नन्दतीह सा मुकुन्दरामपर्वणीकरे॥३॥**

अन्धबधिरेऽपि सति मञ्जुलेन कवितागुणेन यशोभाजने नारायणभट्टप्रवरे या राजगौरवस्य लक्ष्मीरभूत्सा मुकुन्दरामपर्वणीकरे शोभते इति योजना। नारायणभट्टानां परिचयो 'जयपुरविलासात्' प्राप्यः॥३॥

**धार्मिकपदस्थैर्भूरि मार्मिकतयैव वेद्यां**
**संस्कृतसरस्वतीमदभ्रमुपजीव्य ताम्**
**लब्ध्वाऽऽचार्ययोग्यतामथाऽऽधुनिककालोचिता-**
**मिङ्लिशभाषाम् एम्. ए. पर्यन्तं प्रणीय ताम्।**
**लब्धोचितज्ञानो विबुधेषु नाऽभिमानोद्धतः**
**सरलतयैव सुखं संचरन्प्रतीयताम्**
**मन्वानो महत्त्वं विद्ययैव, श्रमं तन्वानोऽत्र**
**मन्वास्थानगोपी गोपीनाथः परिचीयताम्॥ ४॥**

मार्मिकतया बोध्यां संस्कृतभाषाम् अदभ्रं पूर्णं यथा स्यात्तथा। मन्वानः जानन्। अत्र विद्यायां श्रमं तन्वानः कुर्वन्।'मन्वाजी' इति प्रसिद्धस्य पुरातनराजगुरोः स्थानाधिष्ठितः।'राजगुरुसाहित्याचार्यगोपीनाथद्रविड एम्. ए. एल्. एल्. बी.'॥ ४॥

**अम्बरविचुम्बि चारुवातायनवर्गोद्धुरं**
**दुर्गोपममेतन्मञ्जु मन्दिरमुपेयताम्**
**भोजनवशेन दीनछात्राश्रितमेतत्सदा**
**प्रायोऽपररात्रान्तेऽस्य मङ्गलार्थमीयताम्।**
**जयपुरनरेशायाऽपि रक्षाऽभयमेव दिशे-**
**न्नाशिषमित्यादि चास्य गौरवमभीयताम्**
**मालानन्दयोगादेव बालानन्दलीनः सदा**
**बालानन्दमन्दिरमहन्तः संनिधीयताम्॥ ५॥**

वातायनवर्गेण उध्दुरम् (उन्नतधुरायुक्तम्) उत्तुङ्गमित्यर्थः। अत एव दुर्गोपमं दुर्गसदृशम्। दीनच्छात्रेभ्यो भोजनं दत्वा तेऽत्र न्यवास्यन्तेति सार्वदिको नियमः। शीतादिष्वृतुषु अपररात्रान्ते (द्वित्रिवादन एव) अस्य मन्दिरस्य मङ्गलाख्यं दर्शनं भवति। प्रणताय जयपुरनरेन्द्राय अभयमुद्रया रक्षायै अभयमेव ददाति, आशीःप्रदानं तु लिप्सादैन्य-चिह्नमित्याशयः। जपमालायाः आनन्दयोगेन बालवत् निर्मले स्वाभाविकानन्दे लीनः।'मालस्य' धनस्य आनन्द इत्यादिस्तु न॥ ५॥

**संगीते प्रवीणो, मञ्जु वाद्यमानवीणोऽप्यथ**
**शास्त्रेष्वप्रहीणो यो व्यतारीद् भूरि संपदम्**
**मल्लकर्मदक्षाचार्यतल्लजानामन्यतमो**
**हरिवल्लभार्यो भूषयांबभूव यत्पदम्।**

**तस्मिन्नेव रामानुजाचार्यवर-पीठेऽधुना**

**विधिना निवेशितः प्रयाति सुखसंमदम्**

**धनबलताण्डवेन लब्धोज्ज्वलतातपदे**

**गलताऽधिपेऽस्मिन् मञ्जु मिलताऽऽहितोन्मदम्॥ ६ ॥**

वाद्यमाना वीणा येन। अप्रहीणः अनिकृष्टः, शास्त्रज्ञ इत्यर्थः। तथा च-- गीतवाद्ययोः प्रवीणः, शास्त्राभिज्ञः, संपद्वितरणशाली चेत्यर्थः। मल्लविद्यायां दक्षः, आचार्यश्रेष्ठानां च अन्यतमः। अयं हि श्रीमान् हरिवल्लभाचार्यो गीतिनिर्माणे, ताल-लयादिविज्ञाने, शारीरिकबले चाऽपरिमित आसीत्। एष हि रूप्यकम् (रजतमुद्रा) अङ्गुष्ठतर्जनीभ्यां निष्पीड्य आमोटयामास, अक्षराणि च अपमार्जयामासेति प्रसिद्धिः। भारतवर्षस्य सर्वेपि संगीतज्ञा मल्लाश्चैनं जानन्ति स्मेत्यादयो हरिवल्लभाचार्यमहोदयस्य विशेषाः सांप्रतं भारतवर्षे दुर्लभा इति नातिशयोक्तिः। लब्धम् उज्ज्वलं तात-पदं पितुर्हरिवल्लभाचार्यस्य स्थानं येन, तस्मिन्। अहितोन्मदं सप्रमोदम्॥६॥

**हवामहलमभिवसन् वैभवाऽनूकं धरते**

**कुण्डलमण्डितगण्डयुगो दृशमाराद्धरते।**

**औदुम्बरभूदेवसमाजाऽग्रण्यो निवसति**

**जयपुरराजाश्रितो 'भट्टराजा' स हि विलसति॥ ७ ॥**

वैभवानूकं वैभवानुकूलम् अनूकं शीलम्। आरात् दूरात् दृशं हरते, मौक्तिक-कुण्डलमण्डित इत्यर्थः श्रीमान् केसरीलालमहोदयः। अधुना तु निःस्वामिकमिदं स्थानं राजायत्तं जातम्।

**क.-- उत्सवदिनेऽसौ नरस्कन्धैर्मुहुरूढो भृशं**

**शिबिकाऽधिरूढो याति राजद्राजमन्दिरम्**

**जीविकाबहुत्वेऽप्यप्रबन्धेनैव नित्यमयं**

**दुर्बलतामेति द्रव्यसंबन्धे सुनिर्भरम्।**

**स्वीकुरुते कार्यं निजगौरवाऽवलेपात्पुरा**

**वितरणकाले पुनस्तिष्ठेन्मौनमन्थरम्**

**'दाहिमा'समाजान्तःप्रतिष्ठोभोगभाजामयं**

**मान्यो 'मिश्रराजा' बत राजति निरन्तरम्॥ ८ ॥**

शिबिकास्थितत्वात् नरस्कन्धैः ऊढः। द्रव्यसंबन्धे दुर्बलताम् एति, शनैः शनैः रिक्तो भवतीत्यर्थः। 'दाहिमा' दाधीचेति ख्याता ब्राह्मणजातिः। प्राक्तनः श्रीव्रजपतिरायमहोदयः। इदानीं दत्तकपुत्रस्यापि विलोपे इदं स्थानं राजायत्तमभूत्॥ ८ ॥

चन्दनरचितभाल एष नासानालतले

कण्ठलम्बिपुष्कराक्षमाल इह दृश्यताम्

भक्त्या सेवनीयनिजदेवमन्दिरेऽपि सदा

केवलाऽधिकारिपरतन्त्रोऽसौ परीक्ष्यताम्।

व्यसनिजनेभ्यो जातमानसविनोदो भृशं

विबुधजनेभ्यो भूरि बिभ्यदिव वेष्यताम्

बाष्परथगामी मदादामीलितनेत्रयुगो

गोपीनाथमन्दिरस्य गोस्वामी **गवेष्यताम्॥ ९॥**

भाल: बाणफलकाग्राकारो गौडीयवैष्णवानां तिलक:। वेष्यताम् वा इष्यतां प्राप्यताम्। वाष्परथो मरुत्तरशकटि:॥ ९॥

प्रथमं दिवानिशं खवासवरसेवावशाद्

ये वा प्राप्तमानास्तेषु मुख्यं मानयत तम्

औदुम्बरभट्टानां प्रतिष्ठितपदानां श्रियं

भुङ्क्ते निजपाटवेन स्थापितवान् यः सुतम्।

श्वेतोज्ज्वलचारूष्णीषमौलिं बिन्दुभालान्वितं

विद्रुमाऽक्षमालाशोभिकण्ठं निभृतादद्भुतम्

कृष्णीकृत-श्मश्रुयुगमोटनप्रकारपटुं

तं कृष्णकुमारभट्ट**मालोकयत द्रुतम्॥ १०॥**

प्राप्तमाना: खवासश्रेष्ठस्य सेवनेन प्राप्तसंमाना:। सुतं स्थापितवान्, सुतं दत्तकपुत्रत्वेन तस्मिन् स्थाने संस्थाप्य प्रतिष्ठितस्थानानां लक्ष्मीमनुभवति। द्वित्रस्थानेषु दत्तकीकृतपुत्र इत्यर्थ:। निभृते एकान्ते अद्भुतचरित्रम्। खिजाबद्वारा कृष्णीकृतं यत् श्मश्रुयुगं तस्य मोटनप्रकारे पटुम्। 'मूंछमरोड भट्टजी' इति प्रथितम्॥ १०॥

राजद्राजचिह्नैर्भूरि भाति राजधानी यस्य

पदतोऽपि मानी यः स्वगौरवमवेक्षते

संमानं समेति यो हि सचिवसभायां गतो

दत्ते सर्वतोऽपि यः सहायतां प्रजाहिते।

उन्नतपदस्थसुतसंपद्भाग्यशाली भृशं

विनयविशालीकृतवैभवः प्रकाशते

**सामन्तान् समस्तान्बत योऽमूनतिशेते श्रिया**

**चौमूपतिरेष भूरिभूतिः प्रतिभासते ॥ ११ ॥**

राजचिह्नानि-- गोपुरोपरि जयपुरवत् समये समये भेरीध्वन्यादीनि। मानी यः राजदत्तस्य अधिकारपदस्यापेक्षया स्वकीयं गौरवमेव अधिकं पश्यतीत्याशयः। उन्नतपदेषु स्थिताः ये सुताः तादृशसुतसंपद्भाग्यशाली। एकः पुत्रो रावलपदाधिष्ठितः अन्येप्यन्यस्थानाधिकारिण इत्यर्थः। सः अमून् सामान्तान् श्रिया उत्कर्षेण अतिशेते अतिक्रामति ॥ ११ ॥

**प्रबलप्रतापोऽभवद्यस्य पूर्वजानां गणे**

**जयपुरमहीन्द्रमणेः सचिवसहायके**

**वैभवोपभोग-दानशक्तिरसमानाऽभवद्,**

**यामद्याऽपि गायन्त्येकतानास्तत्र नायके।**

**मञ्जुनाथ यायात्पूर्वपद्धतिमपीह भवा-**

**नाशिषो भवन्तु नृणां त्वयि सुखदायके**

**विनयाभिरामोदात्तकीर्तौ गुणभूमोदया-**

**दामोदा लसन्तु हन्त** सामोदाधिनायके ॥ **१२** ॥

जयपुरपतेः सचिवे सहायके च यस्य पूर्वजानां समूहे प्रबलप्रतापोऽभूत्। तथा च रावलवैरी-सालसिंहशिवसिंहादीनां विभूतिः सूचिता। वैभवोपभोगस्य दानस्य च शक्तिः अनुपमाऽभूत्? नगरे प्रात्यहिक-साधारण-यात्रायामपि रावलशिवसिंहस्य पृष्ठतः शतमश्वाश्चलन्ति स्म, धनं चाग्रतो विकीर्यते स्म। यां दानादिशक्तिं तन्नायकविषये एकतानाः सन्तो जनाः अद्यापि गायन्ति-- 'रावल स्योसिंह सो सरदार फेर नहिं होयसी' इत्यादि। भवानपि पूर्वपद्धतिमनुसरेत्। गुणभूम्नः गुणबाहुल्यस्य उदयात् उदात्तकीर्तौ उत्कृष्टयशसि सामोदपतौ श्रीसंग्रामसिंहमहोदये आमोदा लसन्तु हर्षा भवन्तु ॥ १२ ॥

**पद्धरि-- युधि यस्य पूर्वजैः समयमेत्य**

**कलकीर्तिरापि योधनमुपेत्य।**

**संप्रति बहु यो धनमादधाति**

अचरोलभूमिभर्ता **स भाति ॥ १३ ॥**

समयं प्राप्य यस्य पूर्वजैः युधि समरे योधनमुपेत्य युद्धं कृत्वा शोभना कीर्तिः अपि प्राप्ता ॥१३ ॥

**क.-- वैवाहिककङ्कणममुक्तवद्भिरेव रणे**

**यद्वंश्यैः पणेन परिलेभे जयसंमदः**

**चामुण्डामठान्तिकतश्चक्रे जट्टराजो दल-**

**त्सैनिकसमाजो येषां शस्त्रैः प्रचलत्पदः।**

**तीर्थस्थाननिर्माणादिकार्यैर्यस्य वंश्यैः सदा**

**कुर्वद्भिर्धनोपयोगमाप्तो मानसोन्मदः**

**साम्प्रतमनेकवधूलावण्योपभोग एव**

धूलाभूमिभर्तुः **शौर्यमूला यान्ति संपदः ॥ १४ ॥**

चामुण्डामठः 'चाँवड का मठ'। येषां धूलाधिपवंशजानां शस्त्रैः क्षीयमाणसैनिकसमाजः जट्टराजः (भरतपुरीयः) प्रचलत्पदश्चक्रे, युद्धाद्विमुखीकृत इत्यर्थः। तीर्थस्थान-निर्माणादिकार्यैर्धनस्योपयोगं कुर्वद्भिः मानसोन्मदः हार्दिकानन्दः आप्तः प्राप्तः, वृन्दावने यमुनातीरे तन्निर्मापितघट्टादिकं प्रमाणम् ॥ १४ ॥

**नेत्ररहितेभ्यो नेत्रदाता, परिपाता सतां**

**नैरोग्यं विधाता यो हि कुष्ठिजनसंचये**

**दूरदूरदेश्यैर्जनैः कृतगुणगानमिमं**

**कल्याणाभिधानं हरिं यत्पुरेऽवलोकये।**

**प्रायो धर्ममर्यादानुयानादथ, सत्कार्येषु**

**समुचितदानाल्लब्धकीर्तिं तं प्ररोचये**

**चारणचयेन हि चतुर्दिग्गीतगाथमिमं**

डिग्गीभूमिनाथ**मतिमोदादनुमोदये ॥ १५ ॥**

कुष्ठिसमूहे नैरोग्यं विधाता, तृन्। कृतं गुणगानं यस्य (कल्याणनाम्नो हरेः)। प्ररोचये अभिरोचये। चतुर्दिक् गीता गुणगाथा यस्य। 'दिग्गी, डिग्गी' इति प्रासः ॥ १५ ॥

**दो.-- अभिनन्दनभूनीतमपि यत्पूर्वैः परिशोध्य।**

**अपटुतया न्यूनीभवति दूनीशस्य यशोऽद्य ॥ १६ ॥**

यस्य वर्तमानस्य 'दूनी' स्थानाधिपतेः पूर्वजैः परिशोध्य कलङ्कापनयनद्वारा निर्मलीकृत्य अभिनन्दनभुवं प्रशंसास्पदतां नीतमपि यशः स्वस्य अपटुतया (शिक्षाद्यभावेन) न्यूनीभवति ॥१६ ॥

**क.-- वीरता तु राज्यस्याऽस्य किं वा वर्णनीया यस्य**

**वणिजोऽपि लक्ष्मीमधिलुण्ठ्याऽऽददतेऽद्भुतम्**

**विरलजलाऽथ भूरिबालुकामयीयं धरा**

**श्रेष्ठिवैभवेन परां धत्ते धनसंपदम्।**

**जयपुरमहीन्द्रमणेः सामन्तेषु शक्तिशाली**

**सोयं विबुधाऽऽलीवर्णनीयो भाति संततम्**

**लक्ष्मीकरपङ्केरुहसीकरसमीरसुखो**

**राजतेऽद्य** सीकरधराधिपति**रुद्धतम्॥ १७॥**

वीरराज्याणां क्षत्रिया लक्ष्मीं विजित्य आनयन्ति, अस्य राज्यस्य तु वणिजोऽपि कलिकत्तादिस्थानेभ्यो लक्ष्मीमानयन्ति। लक्ष्म्याः करधृतकमलस्य मकरन्दसीकरविशिष्टसमीरवत् सुखकरः॥१७॥

**प्रायः पूर्वकालादेव खेतरीनृपाला इमे**

**सामन्तोचितां स्म गुणमालामलंकुर्वते**

**गुणिनां गुणज्ञोऽधुनैवाऽभवदजितसिंहो**

**यस्य यशोगीतिर्गुणिलोकानवलम्बते।**

**साम्प्रतमनेकविधव्यासङ्गोपसक्तमना**

**नूनमधुनातनो विनोदमवष्टम्भते**

**नेतरीह यौवने सुखे तरीरणेच्छ इव**

खेतरीधरित्रीशो **विशोकमुपजृम्भते॥ १८॥**

अधुनातनः खेतरीस्वामी विनोदं प्रति अवष्टम्भते सुस्थिरो भवति। यौवने नेतरि सति, सुखे तर्याः नौकायाः ईरणेच्छः प्रेरणेच्छः विशोकं यथा स्यात्तथा उपजृम्भते प्रबलो भवति। यौवनप्रेरितः सुखप्रवाहे चरित्रनौकां प्रवाहयतीति भावः। (इतः पूर्वस्य अमरसिंहमहोदयस्य वर्णनम्)॥ १८॥

**यस्य पूर्वजानां शेखावाटीयेतिहासे भूरि-**

**वीरताविलासेनाऽग्र्यकीर्तिरभिरोचिता**

**जयपुरराज्यान्तर्गतस्य यस्य काले पुरा**

**प्राज्या नयलक्ष्मीः कविलोकैः सततोदिता।**

**संप्रति सुखोपभोगमात्रलवलीनमतेः**

**सूरिजनसंगते विरलताऽधुनोदिता**

**भ्रातृभिः समन्तादवहेलाप्रविभक्तश्रियः**

खंडेलाधिपस्य **हन्त खण्डेला विलोकिता॥ १९॥**

अग्र्या श्रेष्ठा कीर्तिः अभिरोचिता शोभिता। जयपुरराज्याधीनस्य यस्य (खण्डेलाराज्यस्य) प्रभूता नयलक्ष्मीः कविभिः सततम् उदिता वर्णिता। सूरिसमागमे विरलता न्यूनता उदिता जाता। खण्डेला खण्डभूता इला भूमिः, भूमेर्विभागा जाता इत्याशयः॥ १९॥

**दो.--** **श्रेष्ठिशबलनिजभूमितः कनककवलमधियाति।**

नवलगढाऽवनिपतिरसौ **प्रबलगतिः प्रतिभाति॥** २०॥

कनककवलं धनोपहारम्॥ २०॥

**नेयान्युपयोगे स्वयं परभोगे व्ययितानि।**

उनयाराधरणीपते: **सुनयाराध्यधनानि॥ २१॥**

सुष्ठु नयेन आराध्यानि उपार्ज्याणि धनानि॥ २१॥

**क.-- सूरिजनसङ्गात्काव्यरङ्गान्तः प्रवेशमाप्य**

**सूक्तीनां विविधसंग्रहः स्म येन तायते**

**प्राचीनेतिहासपटुश्चारणनिचयबलात्,**

**संस्कृतोक्तिसंग्रहेण संप्रति सुखायते।**

**दानाऽवसरेऽपि बाह्यसंमानाद्विमोही विदां**

**स्वच्छताप्रियोऽसौ सुपरिच्छदो विराजते**

**अलसीकृतोऽपि वार्द्धकेन बलसीमां दधन् -**

मलसीसरस्य भूमिभर्ता **भूरिभासते॥ २२॥**

'विविधसंग्रहः' (पिङ्गल-डिङ्गलसूक्तिसंग्रहः) तन्यते स्म। सांप्रतं कृतः 'श्लोकसंग्रहः'। बाह्यं संमानं प्रदर्श्य विदां विदुषां विमोहकः॥ २२॥

**दो.-- शेखावत - राजन्य-नयरेखां निर्वहतोऽद्य।**

**'खाटू'पति-**हरिसिंहतो **मोद्यं मनो विनोद्य॥ २३॥**

नयरेखां नीतिमर्यादाम्। 'खाटू' एतदधिकृतो ग्रामः। सुसंगेतिविषयिणीभिर्वार्ताभिः मनो विनोद्य हरिसिंहतः प्रमोद्यम् आनन्दनीयम्॥ २३॥

**क.-- इङ्गलिशभाषामाप्य बी.ए. पदजुष्टो नव्य-**

**सभ्यतानिविष्टो लेखकार्ये व्यवसीयते**

**कतिपयपुस्तकाऽनुवादलब्धकीर्तिर्भृशं**

**नूतनयुगेऽस्मिन् साधु लेखक-कवीयते**

**अर्थमनुसंधायैव कार्यारम्भशूरो मनाग्-**

**दर्शितमहत्त्वगर्वपूरो गुणैर्गीयते**

**चञ्च'च्चीफकोर्ट'शासनस्य सुविलासमाप्य**

खाचरियावासशासको**ऽसौ मुदमीयते॥ २४॥**

आप्य आ-आप्त्वा (ल्यप्)। कतिपयपुस्तकानि 'आनन्द की पगडण्डियां' प्रभृतीनि। ईयते प्राप्नोति, ईङ्गतौ॥ २४॥

**सो.-- जयपुरनृपासनाय विफलमुद्यमं दर्शयन्।**
**बहुतरहानिमियाय स किल झिलायधरापतिः॥ २५॥**

नृपासनाय जयपुरराज्यसिंहासनं प्राप्तुम्॥ २५॥

**दो.-- यो नवाबमन्त्रित्वमनु व्यतनुत सचिवसुखानि।**
**स हि** सिवाडपति**रवति पुनरसिवाडपि भवनानि॥ २६॥**

नवाबमहोदयस्य मन्त्रित्वकाले सचिवसुखानि कौंसिलसदस्यतामन्वभूदित्यर्थः। 'सिवाड-असिवाड'इति विरोधः। असिं खड्गं वहतीति असिवाट्, ईदृशोऽपि सिवाडपतिः स्वभवनान्येव अवति रक्षति। खड्गादिवीरसज्जाभूषितोपि शासनाधिकारच्युतो भवने तिष्ठतीत्याशयः। श्रीमान् महताबसिंह-महोदयः॥ २६॥

**क.-- सप्रशंसमेष मेयोविद्यालयशिक्षामाप्य**
**शासनाऽध्वशिक्षां बहुकालं बहिर्विन्दते**
**नौत्सुक्यं प्रयाति सर्वकार्येष्वपि धीरमना-**
**स्तत्त्वमनायासाद्बोद्धुमेष प्रमनायते।**
**तेजोमञ्जुमूर्तिरूर्ध्वतिलकमनोज्ञमुखो**
**लोकहितकार्ये संमुखोऽसौ सुमनायते**
**भक्तिपथगामी भूरिनव्यविभामीलितोऽपि**
**गण्यगुणो** गीजगढ़स्वामी **नः सुखायते॥ २७॥**

शासनाध्वनः राज्यशासनमार्गस्य शिक्षाम्। बहिः लखनऊप्रभृतिषु। अनायासादेव कस्यचिद्वि-षयस्य तत्त्वं वास्तवरहस्यं बोद्धुं प्रमनायते प्रकृष्टमनःशाली भवति। नव्यविभा 'न्यू लाइट' तया मीलितोपि भक्तिपथगामी, नवयुगप्रभावमतिक्रम्य भक्तिमार्गोपासक इत्याशयः॥२७॥

**दो.-- कुलकीर्त्या जयपुरपतेः सविधरूढमहिमाऽस्ति।**
**चलन्मौलिनगरूपधृग् बगरूपतिरधिशास्ति॥ २८॥**

वंशगतप्रतिष्ठा जयपुरेन्द्रस्य सविधगतमहिमा, राज्ञः समीपे 'अधराजा' उपाधिवाहीत्यर्थः। चलन्मौलिदेशस्य नगस्य वृक्षस्य रूपधृक्। दीर्घः कम्पमान-शिरोधरश्चेत्यर्थः। सवि' धरू'ढ, न' गरू'प, 'बगरू' प्रासाः॥ २८॥

**जाता यल्लक्ष्मीर्निजव्रातायापि न शास्ति।**
दातारामगढ़े**शितुर्दातानाम मृषाऽस्ति॥२९॥**

संचिता यस्य लक्ष्मीः निजसमूहार्थमपि अर्थात् स्वकीयवर्गार्थमपि न शास्ति, योगक्षेमं नाऽधिकरोति। अत एव तस्य नाम्नि 'दाता' इति विशेषणं मृषा॥ २९॥

क.-- श्रीमद्रामसिंहनरपाले राज्यमातन्वति

यत्तातस्य कीर्तिं पुराकाले समाकर्णये

यस्य बहोः कालादधिकारपदमातिष्ठतः

संपदं प्रतिष्ठां चापि श्रवसोरभ्यर्णये।

खड्गबद्धमुष्टिं दत्तदृष्टिं द्रव्यराशीकृतौ

दृष्टगृहाऽऽरामसुविशिष्टं बत वर्णये

जयपुरनरेन्द्ररूप - सिंहसेवनाऽवहितं

चाँपावतरूपसिंहमेतमुपवर्णये॥ ३०॥

यत्तातस्य फतेसिंहमहोदयस्य। श्रवसोः अभ्यर्णये कर्णगोचरं करोमि। दृष्टा गृहाणामारामाणां च सुविशिष्टः विशदता स्वच्छता च यस्य तम्। जयपुरेन्द्ररूपो यः सिंहस्तस्य सेवने॥ ३०॥

सो.-- प्रगुणपीनपरिणाहि-वपुः सभ्यसरलः सदा।

जोबनेरनेता हि शिक्षासचिववरो लसति॥ ३१॥

'परिणाहो विशालता' ॥ ३१॥

सवै.-- नवचित्रकलाचयने चतुरं वरवाद्यविनोदविशेषितचर्यं

समयोचितलेखविधौ निपुणं कृतवारवधूसुरहस्यसपर्यम्।

पटुपद्यशतैः समनूदितगीतमतीतमनन्तरसङ्गमजर्यं

गुणभूम्नि तिरोहितवाच्यचयं श्रय रामप्रतापपुरोहितवर्यम्॥३२॥

नवचित्रकला 'फोटोग्राफी'। विशेषिता चर्या यस्य, जीवनचर्यायां वाद्यविनोदो विशेषरूपेणासी-दित्यर्थः। समयोचिता लेखा मासिकपत्रादौ निबन्धाः। वारवधूहस्यं 'वाराङ्गनारहस्य' 'मेरीसूरज' प्रभृति। समनूदिता गीता येन, 'श्रीकृष्णविज्ञान'रूपेण। अजर्यम् अनन्तरसङ्गम् अतीतम्, या नवयौवनकालिकी संगतिः सुदृढ़ाऽऽसीत्तामपि उल्लंघित-वन्तमित्यर्थः॥३२॥

सो.-- तत्तनयः स प्रताप - नारायण इति विश्रुतः।

यः किल काव्यकलाप-कलनाभिः कविकीर्तिभाक्॥ ३३॥

कलना रचना। काव्यानि तु-नलनरेश-रघुराजवाजिमेध-काव्यकानन प्रभृतीनि॥३३॥

क.-- एम. ए. पदमण्डितो नवीनशिक्षानीतौ यथा

तद्वद्देशभाषापण्डितोऽसौ परमायते

संप्रति सतर्कभावरक्षणीयामेतामहो

जयपुरराज्यधुरां धैर्याद्योऽवलम्बते।

**विनय-विवेक वयो-विज्ञानैरलंकृतिमान्**

**पण्डितसभासु मतिमान्यः प्रतिभासते**

**नीतिनैपुणेन भूरिभीतिलवलोपी श्रील-**

गोपीनाथप्रवरपुरोहितो **विराजते ॥ ३४ ॥**

एतद्रचनायाम्-- भर्तृहरेः शतकत्रयस्य हिन्दी-अंग्रेजीभाषयोरनुवादः, शैक्सपियरस्य कतिचिन्नाटकानां हिन्द्यनुवादः, 'समालोचक'नाम्नि हिन्दीपत्रे प्रकाशिताः काश्चित्कविताश्चोल्लेखितुं शक्याः ॥३४ ॥

**कुण्ड.-- खिन्नः खलु नाऽऽलोकि यः शासनघने प्रयस्य।**

**कान्तिचन्द्रकृतिनः सुतः सचिवकुञ्जरेन्द्रस्य ॥**

**सचिवकुञ्जरेन्द्रस्य तस्य पद्धतिमनुगच्छन्।**

**अचलो यो निजनिश्चये न पदमग्रे यच्छन् ॥**

**मन्दो दाने भाषणे च गमने स्मृतिविन्नः।**

**स्वस्ति गृहे लभतेऽद्य** हस्तिबाबू **बहुखिन्नः ॥ ३५ ॥**

राज्यशासनरूपे घने वने प्रयासं कृत्वापि यः सचिवकुञ्जरेन्द्रः कान्ति. परिश्रान्तो न दृष्टः। स्मृतिविन्नः असाधारणस्मृतियुक्तः अधिकरणे अभियोगश्रवणसमये प्रसिद्धान्येतन्निदर्शनानि। खिन्नः जयपुरस्य प्राचीननीतेः परिवर्तनादसंतुष्टः। ईशानचन्द्रमुकर्जी-महोदयः ॥३५ ॥

**क.-- 'कौंसिल'समक्षेऽप्यतिनिर्भयवचनचयं**

**पितामहमस्य मोतीलालमभिवीक्षध्वम्**

**निर्भयसुशासनात्प्रसिद्धगुणगाथं ततो**

**जनकममुष्य जयनाथं च समीक्षध्वम्।**

**एम. ए. पदधारी निजपूर्वजाऽनुकारी क्वचि-**

**न्नव्यव्यवहारी सोऽयमसकृत्परीक्षध्वम्**

**वैभवभरेण दूरोदात्तदृक्पटलमिमं**

**सांप्रत**ममरनाथमटल**मुदीक्षध्वम् ॥ ३६ ॥**

अतिनिर्भयेति.-- 'दीवानी'शासनं कुर्वतोऽस्य प्रतिभावतः 'कौंसिल' - निर्णयेष्वपि सुदृढा विप्रतिपत्तयो राज्यरहस्याभिज्ञेषु प्रसिद्धाः। दूरोदात्तः अत्युदारः दृक्पटलो यस्य ॥३६ ॥

**माधवेन्द्रशासनेऽमुना का नोपभुक्ता रति-**

**र्नाकाधीश एव सोयमासीत्सर्वमानसे**

किं शासनकार्यं किं नु राजसौधकार्यं हन्त
नैपुणेन सोयं सर्वराज्यमात्रमानशे।
नानाविधोपायनानि नित्यं लभमानो निशि
पानोत्सवगोष्ठीतः प्रसन्नोऽगान्महानसे
माधवेन्द्रराज्ये सुख-वास-रसविज्ञोऽप्यद्य
खिद्यते खवासबालाबख्शो निजमानसे॥ ३७॥

अमुना का रतिर्न उपभुक्ता ? अपि तु सर्वैव सुखसामग्री अनुभूतेत्यर्थः। मनःसमूहो मानसम् सर्वेषां मनोवृन्दे अयं नाकाधीशवत् शक्तिशाली अभूत्। अत्र मनःसमूह, अग्रे मानसं (मनः) इति न पुनरुक्तिः। 'नाका' चन्द्रमहलस्य आमुखभागस्तस्य प्रबन्धकर्ता च। माधवेन्द्रसमये 'नाका' स्थानमधितिष्ठन्नयं राज्यमात्रस्य प्रबन्धं चकारेति सूच्यते। सर्वं राज्यम् आनशे स्वाधिकरेण व्याप्नोति स्म्। 'अशू व्याप्तौ' लिट्। महानसे आगात्, पानं कृत्वा भोजनार्थमगच्छत्। सुखपूर्वकं यो निवासः तस्य रसाभिज्ञः। 'खवासः' जयपुरेन्द्रस्य प्रधानपरिचारकः॥ ३०॥

दो.-- देया निजसम्मतिरहह देश-नरेश-हिते हि।
मुंशीरामप्रतापतोऽमुं शीलय नयमेहि॥ ३८॥

देशो जयपुरराज्यम्। एहि आगच्छ। अमुं नयं नीतिं शीलय शिक्षस्व। रायबहादुरमुन्शीराम-प्रतापखूँटेटामहोदयः॥ ३८॥

सवै.-- शिक्षणमुच्चमवाप्य पुरा रुचिराचरणात्पदमावहते
न्यायविधौ सततश्रमतः क्रमतः पदमुन्नतमाभजते।
लोकहितावहकार्यभरान्नितरामयमान्तरमुत्पवते
यः सुतरामपगर्वमनाः स हि नानगरामकृती रमते॥ ३९॥

पदम् अधिकरणे स्थानम्। पुरा आवहते, पूर्वं प्राप्नोति स्म, पुरायोगे 'लट्'। अयम् आन्तरम् अन्तःकरणम् उत्पवते पुनाति। सर्वत्र वर्तमानकालोपि हन्त! 'काल'कौटिल्येन संप्रति भूतकालोऽभवत्॥३९॥

येन भूमिकायां 'प्रजामण्डल'मखण्डि, ततोऽ-
दण्डि शनैर्नेतृजनो मूले न्यस्य वै घुणम्
दूर्वामात्रमाधायाऽत्र भूर्वाटकरूपा कृता
श्री रामनिवासे पर्यवर्ति वीक्ष्य वैगुणम्।
भाविरूपरेखाभिर्व्यवारि राष्ट्रवृद्धिः, पूर्व-
कृतयो निरस्ता व्यये कृत्वा बत द्वैगुणम्

**जयपुरपुराणगतिस्मारकमिहाऽस्मादृशान्**

**विस्मायययति स्माऽखिलान्** इस्माइल**नैपुणम्॥ १ ॥**

भूमिकायाम् (आरम्भे एव) 'प्रजामण्डल' नाम्नी संस्था - हीरालालशास्त्रि-प्रमुखान्संचालकान् वशीकृत्य खण्डिता पूर्वपरिगृहीतनीतितो निरस्ता। भूमिकायाम् वनस्थलीग्रामस्य भूमिं कन्याविद्यालयादि-कृते प्रदाय प्रजामण्डलमात्मसात्कृतमित्यन्ये। प्रजामण्डलस्य मूले घुणं (तदनुयायिषु परस्परद्वैविध्यरूपं शनैः शनैर्घातकम्) प्रदाय शनैः (प्रजास्वसंतोषो न प्रसरेत्तथा) तन्नायकजनो, (यः स्वाभिमतनीतिं नाङ्गीकृतवान्) अदण्डि दण्ड़ितः। दूर्वा.-- पुरातनान् छायावृक्षान्विच्छिद्य स्थाने स्थाने दूर्वाक्षेत्राणि संस्थाप्य भूमिर्वाटक ('बाडा')रूपा कृता। मध्याह्नेपि रविरश्मयो न प्रसरन्तीति उपवनानां शोभा, किन्त्वत्र छायाद्यभावात्केवलं वृतिमात्रमित्यर्थः। पूर्वसंनिवेशे वैगुणं विगुणतां वीक्ष्य रामनिवासस्य श्रीः पर्यवर्ति परिवर्तिता। वाद्यवेदि (बैण्डस्टैण्ड) पशुसंनिवेश-प्रवेशद्वारादिविरूपीकरणेन शोभा अन्यादृश्येव कृता।' श्रीः परिवर्तितैव अन्तः प्रविशन्त्येव बहिः परावर्तिता' अत एव साम्प्रतं वाटकमात्रमुद्यानमिति बहूनामाशयः। भाविरूपः-- 'माधवपुरादिस्थानेषु महान्तो जलबन्धाः क्रियेरन्, क्षेत्रसेचिन्यः कुल्याः (नहर) निर्मीयेरन्, कृषिकार्यादिसमुन्नतेर्बहून्यायोजनानि क्रियेरन्, शिल्प-व्यापारादिप्रसाराय वस्त्रवानादियन्त्रगृहाः स्थाप्येरन्, विद्युदपि जलप्रपातादिनैवोत्पाद्येत' इत्यादिरूपरेखाभिः 'स्कीम' द्वारा राष्ट्रस्योन्नतिरग्रेभार्विनी व्यवारि प्रकाशिता। भविष्यदुन्नतिप्रदर्शनेन लोकानां वर्तमाने संतोषणं नैपुणमेवेत्यर्थः। पूर्वकृतयो. - सचिवमन्त्रणाभवन - 'महकमा खास' - अधिकरण 'कचहरी'- आतुरालयादिपूर्वकार्याणि स्थाने स्थाने परिवर्तितानीति निदर्शनेन जयपुरीय-पूर्वकृतयः निरस्ताः। जयपुरपुराणगति. - यावच्छक्यं देशीयानामेव राजकार्येषु समावेशः, मितेन व्ययेन मार्मिकतयैव कार्यपरिचालनं, न बाह्यशोभाप्रदर्शन-संरम्भेण, गृहारामादीनां बाह्यपुरुषदर्शननिवारिका उन्नतैव वृत्तिर्नीत्यनुकूला, इत्यादि जयपुरस्य पुरातनव्यवस्थानां स्मारकम् (अग्रिमं ग्रामं गत्वा पुरातनः स्मर्यते इति न्यायेन) नैपुणं अस्मादृशान् अखिलान् (प्राचीनव्यवस्थावेदिनो हितचिन्तकान्) विस्माययति। अहो अपारेण व्ययेनापि पूर्वा रीतयः कथं परिवर्तिता इति विस्मितान्करोति।

**आगत्यैव येनाऽऽरम्भि पौरपरिष्कारः पुरा-**

**वृक्ष-मन्दिराणां स्वैरमारब्धाऽपसारणा**

**नगराद्बहिष्ठाद्राजमार्गान्नवानाविष्कृत्य**

**रचिताश्चचतुष्पथाश्च सूचिता सुधारणा।**

**वृद्धानपि वैदेशिकान् संगृह्यापि नागरिकाः**

**सेवातो निरस्ताः, कृता विपणिविधारणा**

**नव्यनव्यनित्यपरिवृत्तिकेलिमन्दिरजा**

**मिरजासदृक्षे नैक्षि स्थिरजा विचारणा॥२॥**

पुरस्यायं पौरः, पुरसंबन्धी परिष्कारो यथा-- चतुष्पटीनां रूपपरिवृत्तिः, राजकीयसंस्थानां मार्गपरिवर्तन-शोधन-जीर्णोद्धार-सुधालेपादिस्तथा भवनोपवनादि-वृतीनामपसारणलघूकरणादिः। एवं

गोपुरेषु जलकुण्ड-दूर्वा-प्रदीपाद्यारोपः। अथवा पौराणां जनानां परिष्कारः शोधनं, येन हि नागरिकाः पञ्च-पञ्चाशद्वर्षनियमात्सेवातो निरस्ताः, बाह्याश्चाऽऽहूताः। पुरातनपिप्पलादिवृक्षाणां देवमन्दिराणां च नगरस्य स्थानस्थातोऽपसारणं यथेच्छम् (जयपुरसदृशधार्मिकराज्यस्य नीतिमविचार्यैव) आरब्धम्, यदर्थं नागरिकसंघेन (डेपुटे.) मुहुराक्रोशः प्रार्थनं चापि व्यधापि। सुधारणा 'सुधार'। ततश्च रात्रौ विद्युत्प्रदीपानां प्रकाशे द्विगुणं वेतनं प्रदायाऽपि कर्मकरैश्चतुष्पटी (नगराद्बहिः)-आदीनां सरभसविरच-नादिर्नगरसुधार, इति आख्यायते। वैदेशिकाः अन्यतो विश्रमवृत्तिम् (पैन्शन) प्राप्नुवन्तो वृद्धा अपि संगृह्यन्ते किन्तु नगरवासिनः कार्यसमर्था अपि ५५ वर्षादुत्तरं सेवा (सर्विस) तः पृथक् कृताः। विपणीनां पण्यवीथीनां विधारणा स्थिरस्थानावधारणम् (यथा शाकापण (शाक मार्केट) प्रभृतेर्नूतननिर्माणं रूपपरिवृत्तिश्च, तथा राजमार्गापणानां मुखभागनिर्माणादि)। नवनवनित्यपरिवर्तनरूपा केलिर्यथा अधिकरणानामेकस्थानादपसार्य इतस्ततो दूरे स्थापनादिः।

**चलति चतुर्दिक् चिराच्चूर्ण-सुधासत्रं यत्र**
**खनतां खनित्रं यत्र विश्रमं न चोपयाति**
**स्थाने स्थाने भूमयो निखन्यन्ते, विरच्यन्तेऽथ**
**मण्डलानि, स्थण्डिलानि स्थपतिगणो निर्विमाति।**
**मानयजमानमाऽऽप्य मिरजाप्रजापतिको**
**हूयमानविपुलवनस्पतिको विस्तृणाति**
**नूतनयुगेऽस्मिन्नपनीतसर्वयज्ञोऽधुना**
**नर्तितनयज्ञो नूनमेष कारुयज्ञो भाति॥ ३॥**

चूर्णम् ('चूना' 'सुरखी') सुधा ('कली सफेदी')खनित्रम् खननशस्त्रं 'गैती, कुदाली।' यज्ञेऽपि कुण्डादिनिर्माणार्थं भूमिखननम्, मण्डल-स्थण्डिलनिर्माणं च भवति। स्थपतिः गीष्पतियागकृत् 'स गीष्पतीष्टया स्थपतिः' अमरः। शिल्पयज्ञेपि भवन-रथ्यादिमूल 'बुनियाद, नींव' निर्माणाय भूमयः खन्यन्ते, मण्डलानि संसरणानां मध्ये मण्डलाकाराणि चतुष्पथानि (चौराहे, यथा स्टेशन मानगार्डमार्गादिषु), स्थण्डिलानि चत्वराणि 'चौंतरा, चौराहे वा' निर्मीयन्ते। स्थपतिः गृहादिनिर्माता 'कारीगर, राज' आऽऽप्य आ-आप्य। प्रजापतिर्यज्ञे ब्रह्मा। इह तु सर्वतः प्रधानम्। हूयमान.-- यज्ञे वनस्पतिहोमः प्रसिद्धः। अत्रापि रथ्यासु स्थाने स्थाने विपुलानां वृक्षाणां विलोपः। विस्तृणाति प्रत्यहं विस्तारं गच्छति। नर्तिताः राजनैतिकसमस्यया [एवंविधनिर्माणादिकार्याणि न चाल्यन्ते चेद् महर्घतायुगे भृतिजीविनां न निर्वाहः, निर्वाहश्चेत्साध्यते तर्हि न सिध्यति अनिर्वाह- विवशीकृतानां लोकानां सेनायामापूरणम्] चञ्चलीकृता नीतिज्ञाः येन सः। कारुयज्ञः गृहनिर्माणादिकार्याणां महासमारोहः। (सन् १९४३-४४)॥ ३॥

## नवीना जागर्तिः

**परितो नगरं वसतिर्वितता, धनिनी जनताऽरचि नः पुरजा।**
**सुपरिष्कृतिरेकपुरे न कृताऽपि तु राष्ट्रभरे कृतिरान्तरजा॥**

**अपि शासनसीम्नि प्रजाऽधिकृताऽनुकृता नवरीतिरुपान्तरजा।**
**चिरजा स्थिरजागृतिमातनुयात्परिवृत्तिरियं मिरजाकरजा॥**

परितो.-- येन हि नगरस्य दूरदूरपर्यन्तं वानादियन्त्रालय-कार्यालयादीनां प्रतिष्ठापना। धनिनी.-- कलिकात्ता-बम्बई-शेखावाट्यादिजयपुरनगरबहिर्वासिनः श्रेष्ठिनः पूर्णमूल्येन-भूभागं ('प्लाट') प्रदाय अस्माकं पुरवासिनः कृता इत्यर्थ। किञ्च-- 'अस्माकं पुरे जाता जनता धनिनी अरचि, अर्थात् इयं जनता अस्मिन्पुरे एव जाता, धनोपार्जनादीन् बहिर्जायमान-लाभादीन्यपरित्यज्य राजच्छत्रच्छायायामेव जन्मभूमिवात्सल्यादुषिता, एतस्येदं फलं जातं यद् धनिभिर्यथा अन्न-शाक-फलादीन्यतिमहर्घाणि क्रीयन्ते तथा अस्या अपि भाग्ये अतिमहर्घवस्तुक्रयणमापतितम्। भूमूल्यसंग्रहः, व्यापारादिवृद्ध्या शुल्कादिलाभश्चान्यस्य, महर्घताजनितक्लेशानुभवश्चास्याः, कामं शिक्षाद्युपजीविनां जीविका पुरातन्येव भवेदित्यप्याकूतम्। सुपरिष्कृतिः अर्थात् नानासरणीनां निर्माणम्, रथ्यानामायतीकरणम्, गृहादीनां परिष्कारः इत्यादि रचनात्मकं कार्यं न केवलम् एकस्मिन् पुरे एव, अपितु शतक्रोशव्यापिनि जयपुरराष्ट्रमात्रेपि सेयम् आन्तरजा अभ्यन्तररूपेण प्रचलिता क्रिया संपद्यत' इति नूनं विचारणीया शक्तिरित्याशयः। अपि शासन.-- शासनादिराज-कार्यसीमायां प्रजायै अपि अधिकारो दत्तः। अर्थात् अस्यैव समये राजकीयशासनादिकार्येषु प्रजानामपि सहयोगाधिकारः प्रचलितः। अत एव हि नगरनिर्माणसमितेः प्रमुखः, शिक्षासचिवः (शिक्षामंत्री), एतत्प्रभृतयः प्रजाभिर्निर्वाचिताः स्वीक्रियन्ते राजतन्त्रेण। अनुकृता नवरीति.-- उच्चतल-सुविशालवातायन-नानाविधस्थापत्यकलादिभिर्यथा गृहनिर्माणरीतिः उपान्तरजा उपप्रान्तरे मोहमयीकल-कत्तादिबहिःप्रान्ते जाता सा अनुकृता। तथा कॉफीपानगृह-होटल-एतावन्मात्रनगरे अष्टाष्ट 'सिनेमा 'निर्माण-नृत्यमन्दिरादिस्थापन-प्रभृतिभिः सुस्फुटं नवसभ्यतापरिगृहीता रीतिः अनुकृता अनुकरणेन श्रिता। बहिर्देशादागतः स्पष्टमत्र नवसभ्यतारीतिं प्रचलन्तीं स्थिरीकुर्यादित्याशयः। चिरजा.-- इयं मिरजामहोदयस्य कराज्जाता परिवृत्तिः (परिवर्तनम्) चिरजा जयपुरराज्येऽस्मिन् अतिचिरकाले जाता [माधवेन्द्रादिसमये अन्यभारतीयनगरेषु प्रचलितापि नाद्यावधि अत्रावकाशं लेभे] ततोप्यग्रे स्थिरां जागृतिं कुर्यात्। अग्रे सेयं नवपद्धतिः सुस्थिरैव भवेदित्याशयः। अत एव नवपद्धतिवर्णनेऽत्र नवपद्धतिप्रचलितः 'जागृति' शब्दः सूचितः। व्याकरणाऽऽग्रहे तु 'चिरजा स्थिरजागरणं तनुयात्' इति पाठो बोध्यः।

किंच-व्यवसायवृद्धि-प्रदर्शनाय कालिकत्ता-मोहमयीप्रभृतिधनिकबहुलनगरेष्विवात्रापि रौप्यसुवर्णादिकानां काल्पनिकक्रयविक्रय (सट्टा)-करणायाज्ञां प्रदाय रत्नापणवीथ्यां (जौहरी बाजार) जनसंमर्दरूपां जागर्तिं प्रादर्शयत्।

* * *

**भारतराष्ट्र' विधानपरिषदः ' प्रमुखमहिष्ठे**
**रुद्धकरेऽप्यन्यत्र शिक्षणादौ सुपटिष्ठे।**
**संस्कृतविज्ञे, क्रान्तिमये समयेऽप्यचलिष्ठे**
**नीतिकृष्णिमा नैति** कृष्णमाचार्यवरिष्ठे॥

प्रमुख.-- प्रमुखेषु महिष्ठे संमाननीये उपाध्यक्षे (वाइस प्रेसिडेन्ट, इंडियन स्टेट्स कौंसिल, जयपुर) इत्यर्थः। रुद्ध.-- अन्यत्र अन्येषु कार्येषु निरुद्धहस्तेऽपि, शिक्षादिकार्येषु मुक्तकरे। मैडिकल

कॉलेज, आयुर्वेदिकातुरालय-प्रारम्भिकशिक्षाया अनिवार्यताप्रभृतयोऽस्यैव समये जाता इत्यर्थः। वर्तमानः प्रधानसचिवः [प्राइममिनिस्टर] V.T. आई.सी.एस. सर कृष्णमाचार्यमहाभागः।

**गृह-सैन्य-सचिवपदमण्डितस्य**
**दृढराजभक्तिरुपभाति यस्य।**
**यो ह्यमरबलं धीरो दधाति**
**वीरोऽयममरसिंहो विभाति॥**

गृहसैन्य.-- गृहसचिवः 'होम मिनिस्टर', सैन्यसचिवः 'आर्मी मिनिस्टर' एतत्पदाभ्यां भूषितस्य।

**विनत-विज्ञ-वाक्कीलवरो विस्तृतपरिवारी**
**निश्छलसेवाव्रतात्क्रमप्रोन्नतपदधारी।**
**सरल-शिष्ट-मितभाषि-प्रजामण्डलहितकारी**
**जनमतशिक्षासचिव**-देविशङ्कर**स्तिवारी॥**

विस्तृत.-- पिता, पञ्चषा भ्रातरः, भगिन्यो भगिनीपतयश्चेत्यादिर्महाभागस्यास्य भूयान् परिवारः, सर्वे च सद्भावेन सह निवसन्तीति नवीनयुगेस्मिन्नवीनप्राया वार्ता। निश्छलसेवा.-- एतस्य प्रमाणम्-- 'धन्वन्तर्यौषधालय' 'जयपुरराज्यप्रजामण्डल' प्रभृतिसंस्थानामयं चिरकालिको मन्त्री। इतोऽन्यान्येष्वपि प्रजाहितकार्येषु सोयं सद्भावेन प्रवर्तते स्म। क्रमप्रोन्नत.-- पूर्वमयं सर्वस्यापि नागरिकसंघस्य (म्यूनीसिपल बोर्ड) सर्वाभिः प्रजाभिनिर्वाचितः प्रमुखः (चेयरमैन) आसीत्, साम्प्रतं च निर्विरोधं सर्वप्रजानिर्वाचितः सचिवः (शिक्षासचिवः शिक्षामंत्री) अस्ति।

**शिष्टो मोदविदोहि-गोष्ठीरुचिरपि नयपटुः।**
**जनसंमतसचिवो हि** दौलतमल**भण्डारिकः॥**

मोदवि.-- प्रमोदप्रपूरिका या गोष्ठ्यः तद्रुचिः। दौलतमलभंडारी।

**एवं प्रमुखैर्मन्त्रिगणैर्मन्त्रितनयवाही**
**नवपद्धत्या निचितसचिवशुभमतिपरिणाही।**
**अनुदिनमुन्नतिमभ्युपयन् हितपथमनुगामी**
**सोयं शासनतरुः फलतु मधुफलपरिणामी॥**

[मन्त्रित.-- मन्त्रितः मन्त्रणया स्थिरीकृतो यो नयः (नीतिः) तं वहति। युगानुकूलया नवीनप्रणाल्या निर्वाचिता ये सचिवाः मंत्रिणा तेषां शुभमतेः परिणाहः (विशालता) यस्मिन्। मधुफल. मधुराणि फलानि परिणामो यस्य सः।]

**क. --** **प्राचीनाः परिष्कृताः, नवीनाः पुनराविष्कृता**
**विद्यालय येन नगरेऽथ ग्रामसंचये**

भाषायामभिज्ञो देवभाषाया रसज्ञो भृशम्

एम.ए. पदभूषितोपि वैदेशिकवाङ्मये।

निःस्वार्थाऽनुरागाद्भूरिसंस्थापरिचालकं यं

गुणिषु विनीतचर्यापालकं विलोकये

शिक्षणविभागभरितोदये मनोऽद्य मुहु-

र्मोदयेयमस्मिन् श्यामसुन्दरमहोदये॥ ४०॥

भाषायां हिंन्द्याम्। शिक्षाविभागे भरितः कृतः उदयः उन्नतिर्येन, भूतपूर्वः शिक्षा-विभागाध्यक्षः श्यामसुन्दरशर्मा एम.ए.॥ ४०॥

दो.-- यस्य शासने सुरगवी न सौभाग्यमभियाति।

संस्कृतशिक्षाकञ्जदृक्कचलूः किचलूर्भाति॥ ४१॥

सुरगवी संस्कृतम्। संस्कृतशिक्षैव कञ्जदृक् (स्त्री) तस्याः केशलुञ्चकः के.पी. किचलू, जयपुरराज्य शिक्षासंचालकः॥ ४१॥

सो.-- विद्या-विनय-सुधर्म्यशीलो हरिनारायणः।

राजान्तःपुरहर्म्यमालाप्रमुखप्रबन्धकृत्॥ ४२॥

विद्यानिधि-पुरोहितश्रीहरिनारायण बी.ए. महोदयः 'मुन्तज़िम जनानी' ड्योढ़ी॥४२॥

क.-- आधुनिकशस्त्रक्रियाचतुरेषु डाक्तरेषु

दूरदूरतोपि यस्य नाम प्रतिभासते

नयनचिकित्सायामतीव लघुहस्तो यो हि

सत्कार्ये प्रशस्तो धनं प्रायः प्रतिदासते।

स्पष्टोचितवादी सदा सरलः प्रसन्नमना

वार्द्धकेऽपि सबलः सुधीषु प्रमनायते

सर्वविधरङ्गसङ्गिसुजनानुषङ्गिमनाः

सोयं दलजङ्गसिंहसुमनाः सुखायते॥ ४३॥

प्रशस्तः यः प्रायः सत्कार्ये धनं प्रतिदासते ददाति, 'दासृ दाने'। प्रमनायते उत्कण्ठते, विद्वदनुरागीत्यर्थः। सर्वविधरङ्गेषु विविधविषयेषु सङ्गिनो ये सुजनाः तदनुसङ्गि तदासक्तं मनो यस्य सः डॉ. दलजंगसिह:॥ ४३॥

सो.-- नयविचारचयरोपि शिक्षोपि च नयपथभवति।

विश्वेश्वरनाथोपि चौबेगतचातुर्यभृत्॥ ४४॥

नीतिविचारसमूहस्य आरोपिणी शिक्षा यस्य सः। चौबेजातिगतं यच्चातुर्यं तद्धारकः॥४४॥

क.-- 'भावयेत भव्यमिति' भावनावशेन येन

सा 'भारतभारती' विचित्रा स्म विधाप्यते

स्वल्पविद्यासारे यः समाजेऽप्युच्चशिक्षितोऽभू-

द्धार्मिकविचारे यः स्वतन्त्रः समुपेयते।

श्रीमज्जयपत्तनेन्द्रशिक्षणनियुक्तोऽप्यद्य

गौराङ्गाधिकारीङ्गितयुक्तोऽसौ विचेष्टते

एम्.ए. पदालंकृतो बुधेषु निरहंकृतोऽथ

सोयं सूर्यनारायणसुकृती समेधते॥ ४५॥

'मनुष्यः सर्वदा शुभविचारानेव कुर्यात्' इति सिद्धान्तं स्थापतयता येन मैथिलीशरणगुप्त-निर्मिताया: 'भारतभारत्या:' अतीतखण्ड: स्थाने स्थाने परिवर्त्य विचित्र एव निर्माप्यते स्म। समाजे 'बागडा'ब्राह्मणाख्ये। वर्तमानजयपुरेन्द्रस्य 'गृहशिक्षक:' 'ट्यूटर'श्रीयुतसूर्यनारायण शर्मा एम.ए.।

दो.-- दीनदयालुतिवारि -तनयस्तथ्यविचारधृक्।

सरल-संयताचारि-शिवकिशोरशर्मा लसति॥ ४६॥

एतत्पिता दीनदयालुतिवारी अधिकरणकार्येषु लब्धकीर्तिर्न्यायपरः स्वयोग्यतया जयपुरेन्द्रं प्रीणयन् सचिवपदमण्यलंचकार॥ ४६॥

क.-- गाम्भीर्य-प्रभावशालिवाक्कीलेन येन पुरा

लेभे नगरान्तः सुप्रतिष्ठेत्युपवीक्षध्वम्

हिन्दी-संस्कृतादिभव्यभाषास्वनुरागवतोऽ-

प्युर्दूशब्दमिश्रा गीतिरचना निरीक्षध्वम्।

साम्प्रतमबाधेऽस्मिं'न्नपील' न्यायशासनेऽद्य

राधेश्यामनामध्वनिसत्संगं समीक्षध्वम्

भक्तमण्डलीषु मिलद्भूरिभक्तिनादमिमं

मथुराप्रसादमञ्जुमुंशिनमुदीक्षध्वम्॥ ४७॥

गीतिरचना तु 'मथुरेशभजनमाला' दिका बहुशः प्रसिद्धा॥ ४७॥

* तोमरच्छन्दः *

पुरप्रथितपुरन्दकुलभवस्य। कृतसुरसरस्वतीपरिचयस्य।

विबुधेषु यस्य विनयः पुनाति। भगवानदीनसुकृती स भाति॥ ४८॥

पूर्वार्द्धोक्तं षष्ठ्यन्तं पदद्वयं यस्येत्यस्य विशेषणम्। जयपुरेन्द्रमहाराजरामसिंहदेवस्य कृपापात्रं पुरन्दराख्यः पूर्वं प्रभावशाल्यभवत्, तत्कुलजातः सोऽयम्॥ ४८॥

**दो.-- न परिजनाः कवलीकृता न गृहमरण्यमुशन्ति।**
**पुण्यालय' नायब 'मिमं कथमु नृसिंहमयन्ति॥ ४९॥**

नृसिंहः नृणां कृते सिंहः। उशन्ति इच्छन्ति, 'वश' कान्तौ। अयन्ति जानन्ति, गत्यर्था ज्ञानार्थाः॥४९॥

# सुधीचत्वरः

*** गुरुवरश्रीलक्ष्मीनाथशास्त्रिचरणाः ***

**येषामाधिपत्ये पाठशाला पाठशालाऽभव-**
**त्पाण्डित्येऽद्वितीयांस्तान्न कीर्तयन्प्रयस्यामि**
**शब्दशास्त्रशैलीपरिशोधकानधिकतमं**
**जयपुरशिक्षाप्रतिबोधकान् वदिष्यामि।**
**वात्सल्यानुरक्तशिष्यकृतपरिचर्यान् सदा**
**मन्त्रशास्त्रधुर्यान् गुरुवर्यान् वरिवस्यामि**
**नित्यमेव निर्मलनिसर्गिणो निपुणगणे**
**स्वर्गिणोऽद्य लक्ष्मीनाथशास्त्रिणो नमस्यामि॥ ५०॥**

पाठशाला (राजकीयसंस्कृतकॉलेजः) पाठशाला उत्कृष्टपाठशालाऽभवत्। कीर्तयन् न प्रयस्यामि, माहात्म्यातिशयशालिनां तेषां कीर्तने मे प्रयासो न भवतीत्याशयः। परिशोधकानिति. पूर्वं हि व्याकरणपाठनशैली जयपुरे अन्यादृश्येवाऽभवत्। गुरुचरणैरेव काशीप्रक्रियया परिष्कृतमध्यापनं प्रचारितमित्याशयः। अधिकं किम्, न केवलं व्याकरणशिक्षाया एव अपि तु, शिक्षामात्रस्य प्रतिबोधकान् उन्नायकान् वदिष्यामि। यतो हि पाठ्यक्रमपरिशोधनम्, सुव्यवस्थितः श्रेणिविभागः, नियमानुसारं परीक्षाव्यवस्था च श्रीमतामेव समये समभवत्। निपुणमणे निर्मलस्वभावान्॥ ५०॥

**सो.-- जटिलविषयगहनेषु संचरतामपि संततम्।**
**सुप्रसन्नवचनेषु येषाममृतमिवाऽस्त्रवत्॥ ५१॥**

व्याकरण धर्मशास्त्रादीनां जटिलविषयाणां गहनेषु सततं संचरतामपि येषां सुष्ठुप्रसादगुण-युक्तेषु वचनेषु। एतस्य निदर्शनं 'चरित्रसंग्रहे 'द्रष्टव्यम्।

## * चरित्रसंग्रहः *

श्रीमत्पूर्वजानामादिनिवासो मद्रासप्रान्ते त्वासीदेव परमुत्तरभारते सर्वतः पूर्वं काश्यागमनमभूत्, यत्र हि रामघाटसविधे श्रीमतां पारम्परिकं गृहमद्यापि विद्यते। जयपुरे तु पारम्परिकनिवासो ब्रह्मपुर्यामासीत्। श्रीमद्गुरुचरणपितामहानां द्राविडब्राह्मणानां पं. काशीनाथशास्त्रिणां रामनाथशास्त्री (अन्नाजी), कामनाथशास्त्री (मन्वाजी), इति द्वौ पुत्रावभूताम्। तयोर्ज्येष्ठेभ्यः श्रीरामनाथशास्त्रिभ्यः १९०८ तमे विक्रमवत्सरे श्रीगुरुचरणानां जन्माऽभवत्।

जन्मत एव मेधाविनः श्रीगुरुचरणाः भारते सुप्रसिद्धवैयाकरणानां प्रातः स्मरणीयश्रीबालशास्त्रिणां शिष्या आसन्। स्वर्गीयश्रीतात्याशास्त्रिदामोदरशास्त्रिगोविन्दशास्त्रि, म.म. शिवकुमारमिश्रमहाभागप्रभृतयः श्रीमतां सहाध्यायिनोऽभूवन्। स्वर्गत-म.म.श्रीगङ्गाधरशास्त्रिप्रभृतयस्तु श्रीमतामुत्तरकालपाठिनः सतीर्थ्या बभुवुः। १९३० तमे वि. वत्सरे व्याकरणादिशास्त्राणां पूर्णं पण्डित्यमधिगम्य श्रीमन्तो गुरुचरणा जयपुरं पराववृतिरे। श्रीमतां ख्यातिस्तस्मिन्समये प्रसिद्धप्रसिद्धपण्डितेष्वासीत्। शास्त्रार्थप्रक्रियायां व्याकरणक्रोडपत्रेष्वपि च श्रीमतामसाधारणी मेधा बभूव। किन्तु जयपुरमागतानां श्रीगुरुचरणानां विद्याप्रसारप्रसङ्गेऽपि सुमहानेको विघ्नः प्रथममुपस्थितोऽभवत्। अत्रागत्यैव जयपुरराज्यदत्ताया ग्रामादिसंपत्तेरधिकार-प्राप्त्यर्थमधिकरणेऽभियोगप्रचालनमावश्यकमभूत्। यतो हि श्रीमतां पितृव्या मन्वाजीति प्रसिद्धा जयपुरेन्द्रात् ग्रामाष्टकं गुरुपदवीं चाधिगत्य पारम्परिकग्रामसंपत्तेरपि संपूर्णाधिकारिणो बभूवुः। पारम्परिकजीविकायां गुरुचरणानां यो भागोऽभवत्सोपि न तैः समदीयत। अत एव अनिच्छायामपि निजस्वत्वप्राप्तये श्रीमतामभियोगप्रचालननिवार्यमासीत्। अस्मिन् दुःप्रसङ्गे बहूनि वर्षाण्यत्यगुः, नास्मिन्नवसरे कदाचिदपि विद्याप्रसारायाऽवकाशः सममिलत्। या हि शास्त्रार्थप्रक्रिया (व्याकरणपरिष्कारस्य कोटित्रोटयः) तस्मिन्समये देशे प्रचलिताऽऽसीत्तस्यां हि इयतां वर्षाणामेवमन्तरायः कियन्मलिनीकारको भवेदिति तु जानीयुर्मार्मिका एव। किन्तु स्वाभाविकमेधासंपन्नाः श्रीगुरुचरणास्तदनन्तरमपि तथा शास्त्राण्यपाठयन्, दृढं च निजपाण्डित्यं तथा प्रासारयन् यथान्तःकषायितमनसोपि विपक्षपण्डिता हतप्रतिभा इव समभवन्

स्वर्गीयो महाराजाधिराजः श्रीरामसिंहदेवो जयपुरमागतेभ्यः श्रीमद्भ्यः स्वाज्ञया नवीनं निर्मीयमाणस्य धर्मशास्त्रग्रन्थस्य निर्माणमाज्ञापयद् यत्र हि पं. श्रीराजीवलोचनमैथिलाः, गुरुवरश्रीकृष्णशास्त्रिचरणा अपि सह न्ययम्यन्त। श्रीरामसिंहमहाराजस्य श्रीमत्सु पूर्णा गौरवदृष्टिरासीत्। महाराजे दिवंगते गुरुचरणाः कियन्ति वर्षाणि केवलं 'मोदमन्दिर'नाम्न्या धर्मव्यवस्थासभाया एव सदस्याः समभवन्। यदा तु बाबूहरिदासशास्त्रिमहोदयो राजकीयाङ्गल-कालेजस्याध्यक्षोऽभवत्तदाऽसौ गुरुचरणान् कालेजे संस्कृताध्यापकानकरोत्। अनन्तरं च १९४८ तमे वि. वत्सरे पण्डितवर-श्रीरामभजनशर्ममहाभागेषु स्वर्गमधिरूढेषु श्रीमन्तः संस्कृतकालेज-स्याऽध्यक्षा अभूवन्। आगत्यैव श्रीमद्भिः संस्कृतपाठशालायाः सुमहान् परिष्कारोऽक्रियत। सर्वतः पूर्वं पाठ्यप्रणाल्याः शोधनं विधाय परीक्षाप्रणाली प्राचार्यत। व्यवस्थितः श्रेणिविभागः पर्यकल्प्यत। व्याकरणादिप्रसिद्धशास्त्राणामध्यापनस्य रुचिरा शैली निरधार्यत। शास्त्रिपरीक्षातोऽअधिकः,

आचार्यपरीक्षापर्यन्तः पाठ्यक्रमः प्रथमतया श्री मद्भिरेव प्रवर्तितः अन्यथा पूर्वं शास्त्रिपरीक्षापर्यन्त एवाध्ययनक्रमः समभवत्, यस्य हि सर्वतः प्रथमं शास्त्रिपदवीं लभमानाः पं. श्रीरामचन्द्रशर्माणः (ज्यौतिषिकाः) भूतपूर्वप्रवेशिका-गणिताध्यापकाः प्रमाणं सन्ति।

लेखे विस्तरो भवेत्, परं जानीयुस्तदभिज्ञा यद् राजकीयसंस्कृतकालेजस्योन्नतिक्रमः श्रीगुरुचरणैरेव तथाऽऽरभ्यत यः सम्प्रति पूर्णमात्रायां वर्तते, येन चायं कालेजः काशीकालेज-कल्पः कल्प्ते कोविदैरद्य। श्रीमतामध्यक्षताकालो यथा नियमसौष्ठवस्याऽऽरम्भकोभूत्तथैव व्युत्पन्नानां दृढपण्डित्यानां सर्वतो लब्धकीर्तीनां स्नातकानां बाहुल्यार्थमपि प्रशंसनीयोऽभवत्। एतस्मिन् काल एव ते विद्वांसो निरमीयन्त ये साम्प्रतं जयपुरराजकीयसंस्कृतकालेजस्य प्रायः सर्वेष्वेव विभागेषु अध्यापकपदमधितिष्ठन्ति। एतदतिरिक्तं भारतस्य दूरदूरप्रदेशेष्वपि जयपुरराजकीयकालेजतो लब्धविद्याः पण्डिताः प्रतिष्ठितपदान्यधितिष्ठन्ति। यस्मिन् कालेजे ३२ अध्यापका भवेयुः सर्वेपि च ते तस्मिन्नेव कालेजे अधीतवन्तोऽपि स्युः, किमिदं सौभाग्यं यस्य कस्यचिद्विद्यालयस्य भवेत् ?

**श्रीमतां शिष्येषु प्रधानतया उल्लेखनीया इमे सन्ति -**

व्याकरणशास्त्रि - पं. लक्ष्मीनारायणशर्मा चतुर्वेदी।

पं. रामकुमारशर्मा गौड़ः।

जयपुरराजगुरुश्रीहरिदत्तशर्ममैथिलाः।

दाधीच पं. भवदत्तशास्त्री (अजमेर-गवर्नमैण्टकालेजस्य भूतपूर्वः प्रधानपं.)

पं. रूपनारायणशर्मा दाधीचः।

पं. गोविन्दरामशर्मा गौड़ः।

म.म.पं. गिरिधरशर्मचतुर्वेदः (राजकीयसंस्कृतकालेजस्य वर्तमानोऽध्यक्षः)

वर्तमानराजगुरुपं. श्रीचन्द्रदत्तमैथिलमहोदयः।

पं. सूर्यनारायणाचार्यः (महाराजाकालेजस्य प्र. सं. पण्डितः)

पं. मदनाचार्य (सं. कालेजे धर्मशास्त्राध्यापकः)

मन्दमतिः एतासां पङ्क्तीनां लेखकः।

एते संस्कृतकालेजेऽधीतवन्तः श्रीमतां शिष्याः सन्ति। ये तु आङ्गलविद्यालये श्रीमतां शिष्याः समभवन्, तेषु जयपुरराज्यस्य भूतपूर्वः प्रधानसचिवः श्रीईशानचन्द्रमुकर्जी, अविनाश-चन्द्रसेनः, भगवान्दासो बी.ए. एल.एल.बी, आदयः समुल्लेखनीयाः स्युः।

गुरुचरणानां 'व्याकरणधर्मशास्त्रादिषु प्रकृष्टं पाण्डित्यं तु विश्वविदितमासीदेव, परं साहित्ये काव्यनिर्माणेपि च श्रीमतां तथा प्रौढिरासीद् यां दृष्ट्वा आजन्मतस्तत्कर्म कुर्वाणा अपि भृशं विसिष्मियिरे। अध्यक्षताकाले श्रीमद्भिः कतिचित्संस्कृतपाठ्यपुस्तकानि निरमीयन्त।

यथा- 'भारतीयेतिवृत्तसारः (भागचतुष्टयम्, भारतीयमैतिहासिकवृत्तम्, संस्कृतभाषाया इतिहासश्चापि यथोपलब्धं संस्कृते समुपनिबद्धोऽस्ति। सुरुचिरया यस्य भाषया मार्मिका अपि हृदयतः प्रसीदन्ति), प्रवेशिकापाठः (अस्मिन् प्रवेशिकाप्रधानश्रेण्याः कृते गद्य-पद्य-काव्यानां सुमनोहरः संग्रहः कलितोऽभूत्।)

राजाज्ञया निर्मितो धर्मचन्द्रोदयस्तु श्रीमतां लेखसौष्ठवसाक्षी स्यादेव, किन्तु नाऽसावस्माभिरालोकितो दृग्भ्याम्। परं स्वर्गीयमहाराजाधिराजश्रीमाधवेन्द्रस्याज्ञया निर्मितो जयपुरराजवंशस्येतिहासो मया न केवलमालोकित एव अपि तु लेखन्या लिखितोऽप्यस्ति, यस्मिन् हि श्रीगुरुचरणानां चरमं काव्यनिर्माणमार्मिकत्वं प्रत्यक्षरं खेलति स्म। तद्वृत्तान्तस्त्वयम्-यन्महाराजश्रीमाधवसिहंदेवेन कतिपयवर्षेभ्यः पूर्वं संस्कृतभाषामयं जयपुरेतिहासं लेखितुं तस्मिन्नकाले प्रसिद्धास्त्रयः पण्डिता आज्ञप्ता आसन्। तेषु सूर्यवंशादारभ्य पौराणिकराजानां कालं यावत् आदिमभागनिर्माणं श्रीगुरुचरणैरङ्गीकृतमासीत्। मध्यस्य निर्माणं गुरुवरश्रीकृष्ण-शास्त्रिचरणानामधीनम्, चरमं च म. म. पं. श्रीदुर्गाप्रसादद्विवेदानामायत्तमासीत्। मध्यं च चरमं च कियच्च कीदृशं च निर्मितमिति नास्ति विदितम्, परमादिमभागः सोयं मया स्वलेखन्या प्रायो भूयान् लिखितः। कारणमेतस्य-मदुपरि आरम्भादेव गुरुचरणानां विशिष्टोऽनुग्रहः समभवत्। प्रत्यक्षमेतस्य प्रमाणमिदमेव-यद् गुरुवरैः पाठशालानियतकालादृते स्वगृहे व्याकरणस्य सर्व एव ग्रन्था मे पठिताः सन्ति। ममैवेदं सौभाग्यं येन सिद्धान्तकौमुदी, मनोरमा, परिभाषेन्दुशेखरः, शब्देन्दुशेखरः, वैयाकरणभूषणम्, महाभाष्यं चापि श्रीमतां गुरूणामेव सकाशादधीतम्। अस्तु,

ममाक्षराणि सुन्दराणीति केवलं मदुपर्यनुग्रहं प्रकाशयन्तः श्रीमन्तो बहुधा मत्सकाशादेव यत्किञ्चिदलेखयन्। अन्यथा श्रीमच्चरणानामेव तथा सुभगानि सुभङ्गीनि चाक्षराण्यासन् यान्यालोकयतां चित्रीयते स्म चतुराणामपि चेतः। हा हन्त! पारितोषिकपत्रेषु यानि श्रीमतामक्षराणि साम्प्रतमपि विलोक्यन्ते तानि श्रीमतां लेखसौष्ठवं यथा, तथाऽन्तेवासिजने असाधारणीं कृपामपि अन्तःकरणे अकस्माज्जागरयन्ति। अस्तु, जयपुरराजाज्ञया निर्मीयमाणस्य तत्काव्यस्यादिमो भागः, यावत्स्मरामि तावत् सोयं सर्गद्वये पूरितोऽभूत्। तयोर्मध्ये प्रथमस्तु समग्र एव सर्गो मया लिखितः, द्वितीयस्य तु कश्चिदंशः। नासीदिदं पूर्वं विदितं यदस्मद्दौर्भाग्यात्तदिदं काव्यं केवलं परिश्रमप्रसूरेव भवेत्, न प्रकाश्येत, न वा लिखितमेवोपलभ्येत। अन्यथा मनोहरतमस्यास्य एका प्रतिलिपिरन्याऽप्यकारिष्यत। किन्तु हा हन्त साम्प्रतं तत्समग्रमेव लुप्तमभूत्। गुरुणां गृहमेव बद्धतालकमासीत्। एवं राजेच्छा 'क्षणे क्षणे नवा नवा भवति जायमाना' इति प्रसिद्ध्यनुसारं जयपुरेन्द्रस्यापि सा इच्छा अन्याभिर्लहरीभिरभिभूयमानाऽभवत्। अत एव तत्समग्रं काव्यवैभवमनन्तकालार्थं कालस्य क्रोड एव लीनमभूत्।

मनोरारभ्य सूर्यवंशः श्रीमद्भिराख्यातोऽभूत्, तत्र प्रथमं पद्यमद्यापि मे मनसि वर्तते। पावनी सेयं स्मृतिरिति कृत्वा, आदर्शविधया तदिदं लिख्यते। काव्यमार्मिकाः अनेनैव निर्मातुरसाधारणमधिकारम्, समञ्जसां च शब्दशय्यामंशतः परिचिनुयुः--

**'आसीदसीमसौभाग्यनिधिर्विधिरिवाऽपरः ।**
**आद्योऽस्य नरसर्गस्य नाम्ना वैवस्वतो मनुः ॥'**

श्रीमद्भिर्लेखिताः परिभाषेन्दुशेखरोपरि परिष्कारास्त्वद्यापि विद्यन्ते ये हि वादसमयस्याऽतिक्रान्तत्वादग्रे च तदाशाऽभावात्केवलं मूषकमहोत्सवायैव मे मन्दस्य गृहे दृश्यन्ते। श्रीमतामन्तरङ्गसुहृत्सु गुरुवरश्रीकृष्णशास्त्रिचरणा आसन्। पण्डितवरश्रीशिवराममहोदयान् स्वर्गीयगुरुवरश्रीजीवनाथमैथिलप्रभृतींस्तु गौरवदृष्ट्याऽपश्यन्। श्रीमतां धर्मश्रद्धा, मन्त्रशास्त्रेऽभिनिवेश्च विशेषतयोल्लेखनीय आसीत्। शिवस्तोत्रेषु स्तुतिकुसुमाञ्जलिः श्रीमतां परमप्रियोऽभूत्। हन्त संप्रति मे चक्षुषोर्गुरुचरणानां सा मूर्तिः प्रत्यक्षमुत्कीर्णेव दृश्यते, या हि अध्यापनार्थमस्मदादीन् निरीक्षमाणाऽतिष्ठत्। संस्कृतपाठशालायाः कार्यालये ( श्रीमतामध्यापनस्थानमपीदमेवाऽऽसीत्) वेत्रासनमधितिष्ठन्तः श्रीमन्तः पाठनाद-वकाशसमये-

**'यस्य शस्यमहसो निरर्गलं योगमाप्य चरणाब्जरेणुभिः ।**
**अद्भुतां दधति नीरजस्कतां तं जगत्पतिमुमापतिं नुमः ॥'**

इति कुसुमाञ्जलीयं पद्यं सभक्ति सस्वरं च जगुः। अन्तेवासिनामुपरि श्रीमतामसाधारणः स्नेहो दया चासीदिति जानन्त्येव तद्विदः। 'गुरुर्न कञ्चिच्छात्रं विद्यां पानकमिव पाययतीति' लोके कथ्यमानं श्रूयते। परमहं तु इदं सत्यं सत्यमेव जाने यस्योपरि श्रीमतां हार्दी कृपा समभवत्, स विद्वानप्यभूदिति प्रत्यक्षमेवाऽऽलोकितमस्ति मार्मिकैः। गुरुचरणानां मध्यसमयस्य शिष्याः कृपाभाजनं च म. म. पं. गिरिधरशर्मराजगुरु-श्रीचन्द्रदत्तमैथिल पं. सूर्यनारायणशर्म-मदनाचार्याः सन्ति, ये हि सोत्साहं च सदयं च सौच्चैःस्वरं च स्नेहेन पाठिताः समभवन्। किन्तु-आसां पङ्क्तीनां लेखकोयं श्रीमतामन्तिमः शिष्योऽस्ति यस्योपरि असाधारणी विशेषकृपा-ऽऽसीत् यस्या उल्लेखः पूर्वं कृतः। स समयो गुरुचरणानां वार्द्धक्यस्यासीत्, नासीत्पूर्वं इव स किल यौवनसहचरः समुत्साहः। परं कर्तव्यवशाद्दयावशात् मत्सौभाग्यवशाद्वा यद् यद् गुरुचरणैः पाठितं तत्तत्सर्वं वरप्रदानमिव मे सुस्थिरविद्यावताराय चिराय समभवत्। प्रतिदिन-व्यावहारिक-विषयेष्वपि स्नेहेने भर्त्सनया च यद्यत् शिक्षितं तत्तन्मे जीवनसाफल्याय समभूत्। अस्तु-पावनं तदिदं स्मरणमप्यंहसां निवृत्तय एवेति यदप्यनुकूलं तथापि स्मर्यमाणेनानेन हृदयान्तस्तले काचित्पीडेव समुदेतीति विरम्यते विक्षोभात्।

गुरुचरणानां पौत्रः श्रीविश्वनाथः साम्प्रतं मातामहाभिजने यवतमाल-(बरार)-प्रदेशे निवसन् व्यवसायकार्यं करोतीति श्रूयते।

*** गुरुवरश्रीकृष्णशास्त्रिचरणाः ***

**येषां धर्मकर्मणि तपसि सत्यनिष्ठाऽभव-**
**त्पाण्डित्यप्रतिष्ठाऽतो गरिष्ठाऽभूद्विसंदेहम्**
**चर्याव्यवहारे चतुराणां शुद्धभावोऽभवद्-**
**ब्राह्मणोपकारे येषां मानसममन्देहम्।**

**राजकीयविद्यालये साहित्योपदेशकास्ते**
**गुणगणनीयं स्मरणीयं येऽवहन्देहम्**
**नानादेश-नानाजन-नानाकथा-नानारस-**
**वर्षिणोऽद्य श्रीमत्कृष्णशास्त्रिणोऽभिवन्देऽहम्॥ ५२॥**

अत: (निष्ठात:) पाण्डित्यप्रतिष्ठा नि:सन्देहं प्रभावशालिन्यभवत्। अमन्देहम् अमन्दा ईहा चेष्टा यस्य तत्। ब्राह्मणोपकारे सदा सचेष्टमानसा अभूवन्नित्यर्थ:। नानादेशादीनां या नानाकथास्तासु नानाविधरसवर्षकान्॥५२॥

*** संग्रह: ***

तैलङ्गब्राह्मणानां श्रीमतामादिमो निवासो मद्रासप्रान्तस्य कुम्भघोणेऽभवदिति श्रूयते। श्रीमन्तो हि निजदेशं विहाय बाल्यादेवोत्तरभारते न्यवसन्। गृहस्थाश्रमप्रवेशात्पूर्वं भूयांसि वर्षाणि यावत् श्रीमद्भिर्बदरिकाश्रमप्रान्ते ब्रह्मचर्यनियमेन तपश्चरणमक्रियत। जयपुरेऽपि यदा प्रथमप्रथम-मुपयाता: (सं. १९४८ वि.) तदापि श्रीमन्तो ब्रह्मचारिवेष एवासन्।

एतस्मात्कालात्पूर्वमुत्तरस्यां दिशि कुल्लू-मण्डीराज्येष्वपि श्रीमतां निवासोऽभवत्। मण्डीराज्ये तु कतिचिद्वर्षाणि श्रीमद्भिर्धर्मशासनपदमपि किञ्चिदधिष्ठितमिति श्रूयते। जयपुर-मागतेषु श्रीमत्सु स्वर्गीयमहाराजाधिराजश्रीरामसिंहदेवस्य विशेषत: कृपा समभवत्। श्रीमता हि धर्मचन्द्रोदयस्य निर्माणाय पूर्वमेते न्ययम्यन्त, 'मोदमन्दिर' सभाया: सदस्याश्चकल्प्यन्त। अनन्तरं तु १९४८ तमे विक्रमवत्सरे कालेजाध्यक्षेण श्रीहरिदास-शास्त्रिमहाशयेन इमे संस्कृतपाठ-शालायां साहित्यप्रधानाध्यापका नियमिता:। श्रीमतां धर्मश्रद्धापरोपकारादिषु सुतरां व्यासक्तिर-भूदिति तु सर्वत्र सुप्रसिद्धम्। विश्वविदितं पाण्डित्यमप्यस्मादृशैरकिञ्चित्करै: प्रस्तूयेत, एषापि लघोर्मुखान्महती वार्तास्ति। द्वयोरपि शास्त्रिचरणयोर्विषये जयपुरविलासे प्रोक्तम् - **'राजीवलोचन-बुधेन समस्तशास्त्राण्यालोच्य रामवचसाऽरचि धर्मचन्द्र:। याभ्यामपूरि स ततोऽन्विह कृष्ण-लक्ष्मीनाथौ बुधौ कथय कस्य न संमतौ तौ॥'**

*** पण्डितवर-श्रीशिवरामशर्ममहाभागा: ***

**येषां शब्दशास्त्रे प्रौढपाण्डित्यं प्रसिद्धमभू-**
**द्वेदान्तेऽपि मार्मिका न केन स्माऽभिनन्द्यते**
**राजमोदमन्दिरेऽपि मान्या यद्व्यवस्थाऽभव-**
**द्विद्यायै वदान्या येऽद्य विद्भिर्मुहुरिन्द्यन्ते।**
**अध्यापनसिद्धा: शान्ति-धैर्यार्जवमुख्यैर्गुणै:**
**सर्वविधसौख्यैर्जीवने ये स्माऽतिचन्द्यन्ते**
**आदर्शायितोच्चसदाचाराञ्चितचर्या: सदा**
**श्रीश्रीशिवरामसूरिवर्या: प्रणिवन्द्यन्ते॥ ५३॥**

व्यवस्था धर्मशास्त्रीया। 'मोदमन्दिरं' जयपुरराज्यस्य धर्मव्यवस्थापक सभा। वदान्या दानशौण्डाः, यः कोऽपि विद्यार्थी व्याकरणस्य लघुं वा महान्तं वा ग्रन्थमपठत्, सप्रेम तमपाठयन्। इन्द्यन्ते परमैश्वर्येण स्तूयन्त इत्याशयः, 'इदि परमैश्वर्ये'। ये सर्वविधैः सौख्यैः जीवने अत्यन्तं चन्द्यन्ते स्म आह्लाद्यन्ते स्म। चदि 'आह्लादे'। सदाचरेण अञ्चिता पूजिता।

## * संग्रहः *

पर्वतीयसारस्वतब्राह्मणाः पं. श्रीशिवराममहाभागाः त्रिगर्तदेशस्य (काङ्गडा-प्रान्तीय 'गुलेर' ग्रामाञ्चलस्य) राजपुरोहितवंशजाः समभवन्। तत्र हि श्रीमंद्वशजानां 'मणिवन्तः', 'मणिवाले' इति प्रसिद्धिरासीत्। बाल्यावस्थायां गृहगतामतिविषमां दीनदशामनुभूय परमं विरज्यन्तः श्रीमन्तो विद्याध्ययनाय काशीं प्राऽतिष्ठन्त।

**कौमार एव जगतीतलजागरिष्य-**
**त्कीर्तिप्रभाप्रकटनेऽस्य मतिर्बभूव।**
**तस्मादसौ गुरुजनाऽविदितोऽन्वयासी-**
**द्वाराणसीमखिलवाङ्मयलास्यभूमिम्॥ १॥**

नासीत्तस्मिन्समये यात्रार्थं बाष्पशकट्यादीनां सौकर्यम्, नापि चासीदार्थिकी शक्तिरेव। अत एव सुदूरतमादपि देशात्पद्भ्यामेव व्रजन्तोतिक्लेशेन चिरात्काशीमुपागमन्।

**तत्र प्रसिद्धबुधमण्डलमान्यगौड-**
**स्वाम्यन्तिके विभवरामसमीपतश्च।**
**शब्दागमप्रमुखदुर्गमशासनेषु**
**प्राशस्त्यमाप स हि षोडशभिः समाभिः॥ २॥**

तत्र हि 'भाष्यब्रह्मचारी' ति प्रसिद्धेभ्यः श्रीअभयराममहाभागेभ्यः साङ्गं व्याकरण-शास्त्रमपाठि। भूतपूर्वजयपुरराजकीयसंस्कृतपाठशालाध्यक्षाः पं. श्रीरामभजनसारस्वतमहाभागाः श्रीमतां सहाध्यायिनोऽभूवन्। समापितविद्याः श्रीशिवराममहाभागास्तस्मिन्समये काशिकपण्डितानां संतोषभाजनमभूवन्। सभायां वादपाण्डित्यमालोक्य परमं प्रसन्ना जयपुरमहाराजाधिराजाः श्रीरामसिंहदेवाः पण्डितमहोदयान्निजराजधानीमानयन्। १९२५ तमे त्रिंशे वा विक्रमवत्सरे श्रीमतामत्रागमनमभूदिति श्रूयते।

अत्रागताः श्रीमन्तो राजकीयसंस्कृतपाठशालायामध्यापकाः, 'मोदमन्दिर' सभायाः सदस्याश्चाऽभवन्। प्राचीनव्याकरणे श्रीमतां सुदृढं ज्ञानमासीत्। अध्यापनकाले च प्रसन्नमुखाः श्रीमन्तोऽतिशान्त्या परमप्रेम्णा च विद्यार्थिनः समबोधयन्निति प्रत्यक्षमनुभूतम्। गुरुचरणानाम-ध्यक्षतायां पण्डितमहोदयाः पाठशालायां वेदान्ताध्यापकपदमधिष्ठिन्तो दृष्टाः। महाराज-श्रीरामसिंहदेवानां श्रीमाधवसिंहदेवानां चापि समये श्रीमतां परमः सम्मानः समभवत्। भूतपूर्वो

जयपुरराज्यप्रधानामात्यः श्रीकान्तिचन्द्रमुकर्जीमहोदयः पण्डितमहोदयानां परमं गौरवमकरोत्। राज्ये साधीयसी प्रतिष्ठा, लक्ष्मीदेव्याः कृपा, आज्ञाकारिणो विद्वांसश्च पुत्राः, नैरुज्यपूर्णं पूर्णं च वयः, इत्यादि सर्वविधमेव लौकिकं सुखं श्रीमतामुपपन्नमासीत्। अत एव 'सर्वसुखिनः' इति सुहृत्पण्डितगोष्ठ्यां श्रीमन्तोऽभ्यनन्द्यन्त।

पण्डितमहाभागानां त्रयः पुत्राः समभवन्। तेषु ज्येष्ठः श्रीचन्द्रधरशर्मा गुलेरी (बी.ए.) अजमेरनगरस्थमेयोकालेजस्य जयपुरराजकीयभवनप्रबन्धकर्ता (मोहोतमिद जयपुरकोठी) तात्कालिक' खेतडी 'नरेशस्याऽध्यापकश्चासीत्। एष हि महाभागो यथाऽऽङ्गलविद्यायां तथा संस्कृतपाण्डित्ये हिन्दीसाहित्ये चापि परमं परिनिष्ठितोऽभवत्। अयं जयपुरात्प्रकाश्यमानस्य 'समालोचक 'पत्रस्य काशीनागरीप्रचारिणीपत्रिकायाश्च सम्पादकोऽभवत्। एतल्लिखिताः 'पुरानी हिन्दी' इत्यादयो गवेषणापूर्णा निबन्धाश्चमत्कृतवन्तो मार्मिकसमाजम्। हन्त हन्त यस्मिन्समयेऽस्य प्रतिभा प्रकामं प्रौढिमध्यगच्छत्तस्मिन्नेव समये सोयं महाभागो माननीयश्रीमदनमोहनमालवीय-महाभागेन काश्यां नीत्वा हिन्दूविश्वविद्यालये संस्कृतविभागस्याध्यक्षो नियमितः। परं विद्वत्समाजस्मरणीयस्य सरलोदारचरित्रस्यास्य हन्त स्वल्प एव काले सर्वदार्थं काशीवासोऽभवत्। हिन्दीसाहित्ये प्रसिद्धस्यास्येतिवृत्तं 'हिन्दीकोविदरत्नमालायाम्' मुद्रितमपीति किञ्चित्स्मरामि।

पण्डितमहाभागानां मध्यमः पुत्रश्च पं. सोमदेवशर्मा गुलेरीति प्रसिद्धो मोदमन्दिरसदस्यतां संस्कृतपाठशालाध्यापकतां चात्रैवाध्यतिष्ठदिति जानन्त्येव तद्विदः। परं सोऽप्यकाल एव परलोकमगात्। कनिष्ठस्तु पुत्रः पं. जगद्धरशर्मा गुलेरी एम. ए. सम्प्रति लायलपुरनगरे (पंजाब) राजकीयस्य कृषिमहाविद्यालयस्य (एग्रिकल्चर कॉलेज)प्रबन्धकपदमध्यापकपदं च ससंमानमधितिष्ठतीति हर्षास्पदम्। पण्डितमहाभागानां विषये प्रोक्तं जयपुरविलासे -

**'आस्ते महाभाष्यमहाचमत्कृतिः स्फुरन्महा व्याकृतिपाठिनां गुरुः।**
**सारस्वतो रामभजः स यस्य स सखा सतीर्थ्यः** शिवरामपण्डितः॥'

*** विद्यावाचस्पतिपं. श्री मधुसूदनशर्ममैथिलाः ***

**धार्मिकविमर्शनेष्वभिज्ञाः सर्वदर्शनेषु**
**वेदान्तेष्वधर्षितमनीषा उपनम्यन्ताम्**
**वेदेष्वसमानां 'यज्ञमधुसूदन' नामाऽऽकरो**
**नूनं ब्रह्मविज्ञानादिग्रन्था अवगम्यन्ताम्।**
**मञ्जुनाथ सांख्यदैशिकानां चतुराणां नये**
**निगमपुराणाऽद्भुततत्त्वानि निशम्यन्ताम्**
**वादिमदसूदनसमञ्जससमीक्षाचयाः**
श्रीमन्मधुसूदन**महाशयाः प्रणम्यन्ताम्॥ ५४॥**

**राजगुरुश्रीहरिदत्तशर्ममैथिलाः**

**दो. - विवृतशब्दशास्त्रोदयान् परमसहृदयान् स्तौमि।**
**श्रीहरिदत्तमहोदयान् सदयान् संप्रति नौमि॥ ५५॥**

विवृतः कृतः व्याकरणशास्त्रस्य उदयः प्रचारो यैस्तान्, एतेषामेव द्वितीयाध्यापकतायां व्याकरणस्य मार्मिकाः साम्प्रतिकविद्वांसो निरवर्त्यन्तेति सूच्यते। परमसहृदयान्, इत्यनेन तेषां नैषधमाघादिकाव्यरसिकत्वं रसानुभवमार्मिकत्व चाभिव्यज्यते।

राजकीयसंस्कृतपाठशालायां परम्परातो व्याकरणाध्यापकानां जयपुरराजगुरु-श्रीनरहरि-शर्ममैथिलमहाभागानां ज्येष्ठतनुजन्मान एते पैतृकमध्यापकपदं राजगुरुत्वं चाऽध्यतिष्ठन्पूर्वम्। दिवं गतानामेषामनुजन्मानः श्रीचन्द्रदत्तमहोदयाः साम्प्रतं व्याकरणाध्यापका राजगुरवश्च सन्ति, येषां परिचयोऽग्रे। श्रीनरहरिशर्मणां विषये तु प्रोक्तं जयपुरविलासे -

**'सिद्धान्तकौमुद्युचितो बुधग्रणीः समुच्छलच्चामरवीजितच्छविः।**
**सन्मैथिलः सौम्यपवित्रदर्शनो राज्ञो गुरु श्रीनृहरिर्विराजते'॥**

*** प्रवेशिकाध्यापकाः काशीनाथशास्त्रिणः ***

**व्याकरणाधानात्पठदन्तेवासिमानसेषु**
**प्रोद्भासितसंस्कृताग्र्यमार्गा ये समर्ह्यन्ते**
**कविताविमर्शे सानुरागाः शब्दशास्त्रपरा-**
**मर्शे नानुमेनिरे गरिष्ठबुधवर्यं ते।**
**मञ्जुनाथव्युत्पत्तेः प्रवेशहेतवस्तेऽभव-**
**न्येषामुपदेशगिरः प्रायो नातिचर्यन्ते**
**सरलतयैव सुप्रकाशीकृतदेवगिरः**
**काशीनाथशास्त्रिमहाभागा मुहुः स्मर्यन्ते॥ ५६॥**

व्याकरणस्य आधानात् दृढसंस्कारात्। संस्कृतस्य अग्र्यः श्रेष्ठो मार्गो यैः। कविताविमर्शे सानुरागाः, अनेन रत्नाकरादिषु कविता-समस्यापूर्त्यादिकं सूच्यते। शब्दशास्त्रस्य विचारे प्रक्रान्ते, कस्मिन्नपि पक्षे दृढाग्रहे संजाते गरिष्ठमपि बुधवर्यं ते न प्रमाणीचक्रुः। न अतिचर्यन्ते उल्लङ्घ्यन्ते॥५६॥

एते हि संस्कृतकालेजे प्रवेशिकाप्रधानश्रेणौ व्याकरण-काव्याध्यापका आसन्। सुदृढाभ्यासद्वारा विद्यार्थिनः परिश्रमपूर्वकमपाठयन्निमे। दतियाप्रान्तादुपागता एते। इमे हि गुरुवराणां श्रीलक्ष्मीनाथशास्त्रिचरणानां सम्बन्धिनोऽभवन्। गुरुपितामहानां काशीनाथशास्त्रिणां पुत्री 'मङ्गलाबाई' नाम्नी आसीत्। एतस्याः पुत्रीं भाऊशास्त्री परिणीतवान् यो हि श्रीकाशीनाथचरणानां लघुभ्राताऽऽसीत्। एतेषां विषये जयपुरविलासे प्रोक्तम् -

'जीयादजस्रं जिनपाठशालागुरुः पुरुप्रीतिचरुर्गुरुश्रीः।
भङ्गाप्रकाशी कविरेष काशीनाथः सनाथः प्रततैर्यशोभिः॥'

**शब्दशास्त्रबोद्धारोऽपि हेलयाऽन्यशास्त्रगतं**
**पाण्डित्यं प्रदर्शयन्तः कैर्न वरिवस्यन्ते**
**स्थूलकृष्णकायैर्ज्ञातनानाविधोपायैरहो**
**चाणक्यैरिवैतैः किल के वा न निरस्यन्ते।**
**'श्रीजीकी मोरी'मभिमण्डयन्तो हवनभरै-**
**र्ये रीतिं श्रयन्तो वैदिकानामनुदृश्यन्ते**
**निशितसमीक्षाशराः कुपितदृशाऽस्त्रिणोऽमी**
**द्राविडास्ते** वीरेश्वरशास्त्रि**णोऽद्य शस्यन्ते॥ ५७॥**

निरस्यन्ते तिरस्क्रियन्ते। 'श्रीजीकी मोरी' इति निवासस्थाननिर्देशः। क्रूरसमालोचनैव शरो बाणो येषाम्। कुपितां दृशम् अस्त्रमिव क्षिपन्तः॥ ५७॥

**ज्योतिःशास्त्रसिद्धान्ताऽवबोधनप्रसिद्धान्, भूरि-**
**तन्त्रमन्त्रदीक्षाऽऽगमसिद्धान्प्रसमीक्षध्वम्**
**दुर्गमत्रिकोणक्षेत्रमितिकलनाढ्यान्पुन-**
**श्चातुर्वर्ण्यवर्णनाप्रवीणान् सुपरीक्षध्वम्।**
**काव्यमर्मविज्ञान् श्राव्यरचनाचमत्कृतिकान्**
**महामहोपाध्यायान्मुनिप्रायानपेक्षध्वम्**
**राजकीयपाठशालाऽध्यक्षान् स्थूललक्ष्यान् सदा**
श्रीदुर्गाप्रसाद**कृतिदक्षानभिवीक्षध्वम्॥ ५८॥**

सिद्धान्तावबोधनेति-सिद्धान्तग्रन्थाध्यापने प्रथितान्। काव्यमर्मेति. अनेन साहित्यदर्पण-टिप्पणभूमिकादिकृतिर्ध्वनिता। त्रिकोणमिति-क्षेत्रमित्योः संकलनममीभिः कृतम्। चातुर्वर्ण्येति.- एभिः कृता 'चातुर्वर्ण्यसमीक्षा'परीक्ष्यग्रन्थेषु नियता। रचनेति. देवराजचरित-प्रसादशतक दशकण्ठवधाद्याः प्रथिताः। स्थूललक्षान् वदान्यान्॥ ५८॥

**दुर्लभमहार्हग्रन्थसंपादनसिद्धहस्त-**
**मेतत्कृतटिप्पणसुशोधनमिहाऽऽनुवे**
**ओर्येण्टलविद्यालयाध्यापनप्रसिद्ध-**
**मर्थसंग्रहसुसिद्धमथ सरलमतिं ब्रुवे।**

**वार्द्धकेपि बाल्य इव व्याकरणोत्सेधवशा-**

**न्नानाविधशब्दवेधसंसक्तं न संह्नुवे**

**महामहोपाध्यायाख्यसत्तमपदकपदं**

श्रीमच्छिवदत्त**पटुपण्डितमुपस्तुवे** ॥ ५९ ॥

आनुवे स्तौमि, 'आङि नुपृच्छ्योः'। अर्थसंग्रहे धनार्जने। बाल्य इवेति. व्याकरणस्य पठनदशायामेव तदुत्सेधस्य (व्याकरणोत्कर्षस्य) वशात् नानाविधः शब्दवेधो भवति। (वीन् लुनातीति विलावी मार्जारी, जयेन ऊर्जते इति जयोर्जः 'जार्ज' इत्यादि) परम् अयं वार्द्धकेऽपि तत्संसक्तः। अत एव एतं न संह्नुवे, न गोपयितुमिच्छामि। एतत्सूचनायैव 'श्रीमच्छिवे'ति व्याकरणानुकूलः संधिः। संग्रहे द्रष्टव्यमिदम्। पदकस्य पदम् आस्पदम् ॥५९ ॥

## * चरित्रसंग्रहः *

श्रीमतो जन्म सं. १९०८ तमे वि. वत्सरे मार्गकृष्णदशम्यां समभवत्। राजकीयपाठ-शालायास्तात्कालिकाध्यक्षेभ्यः पं. रामभजनमहाभागेभ्यस्तदनन्तरं च पं. श्रीशिवरामशर्ममहा-भागेभ्यः श्रीमद्भिर्व्याकरणादिविद्याध्ययनमकारि। वैदुष्यसंपादनोत्तरं सं. १९४७ तमं वत्सरमारभ्य पञ्चवर्षाणि यावत् राजकीयसं. पाठशालायां स्वपितुः स्थानेऽध्यापनकार्यमकुर्वन्। एतदनन्तरं सं. १९५२ तः १९८४ पर्यन्तं लाहोरनगरे ओरिएण्टलसंस्कृतकालेजस्य प्रधानसंस्कृताध्यापकपद-मध्यतिष्ठन्।

म. म. पं. श्रीदुर्गाप्रसादमहोदयैः संपाद्यमाना अनेकेषां दुर्लभसंस्कृतग्रन्थानां प्रकाशयित्री 'काव्यमाला' समयेस्मिन् भूयस्तरां प्रसिद्धिमलभत। पञ्चविंशतिवर्षाणि यावत् श्रीमतापि तत्संपादनमकारि। शोधनादिकार्ये श्रीमतः प्रावीण्यं सहृदयैर्भूयस्तरामभ्यनन्द्यत। एतदतिरिक्तम्-निर्णयसागरे मुद्रितानां सटीकाऽमरकोष-शिशुपालवध-सिद्धान्तकौमुदी-काशिका-निरुक्तादीनां बहूनां संस्कृतपुस्तकानां श्रीमता संपादनं शोधनं चाऽकारि। सिद्धान्तकौमुद्याः 'सरला' नामधरं रूपान्तरमेवाऽकारि, यत्र तिङन्तं पूर्वमवस्थाप्य षड्लिङ्गकारक-समासादीनां पश्चान्निवेशोऽक्रियत। परं सेयं प्रक्रिया जनतायाः कृते कठिनाऽभवदिति नाऽस्याः प्रचारोभवत्। व्याकरणमहाभाष्यस्य तु सत्यं सत्यमुद्धार एव चिकीर्षितोऽभूद् यत्र हि (एकदेशिभाष्यम्) (आक्षेपभाष्यम्) (सिद्धान्ति-भाष्यम्) इत्यादि शीर्षकं पृथक् पृथक् प्रकोष्ठके दत्वा भाष्यविषयस्याऽत्यन्तं सुबोधता कृताऽऽसीत्। किन्तु दुर्दैववशादध्यायद्वयमेवैतादृशं मुद्रितमभवत्। अस्मिन्कार्ये महानध्यवसायः, पूर्णा च तत्वज्ञता, अपारश्च परिश्रमः समपेक्षितोऽभूत्। अनया विधया संपूर्णं चेदमुद्रयिष्यत तर्हि भाष्यस्य भूयस्तरां स्पष्टता श्रीमतां चाऽऽकल्पममरता समभविष्यत्। श्रीमतां वैदुष्यतः संतुष्टेन राजतन्त्रेण श्रीमद्भ्यः 'महामहोपाध्याये'ति विद्वत्पदकमदायि।

वार्द्धक्येऽपि पुस्तकप्रकाशनादिषु श्रीमताममन्द उत्साहोऽभूत्। व्याकरणविषये चाधीयानानामिव स्फुरत्प्रतिभता चाऽनल्पं च परिज्ञानमासीत्। आसीत्किल श्रीमतो विचारो यद्भाषान्तरस्थाः सर्वेपि शब्दाः शुद्धसंस्कृतस्यैव सन्ति। अत एव स्वर्गवासात्कतिपयवर्षेभ्यः

पूर्वं तादृश्येका पुस्तिका प्राऽकाश्यत यत्र हि हिन्दी-उर्दू-अंग्रेजी-आदिशब्दानां व्युत्पत्तिः संस्कृतव्याकरणतोऽकारि। यथा - मज़ादार (मचाधारः), जोरुः (जयोरूः जयौ ऊरू यस्याः सा), खरचः (खं शून्यतां रचयति) 'काइण्डली' Kindly (काण्डं लिनाती-त्यादि)।

महामहोपाध्यायमहाभागस्य स्वभावः अतिसरलो निरभिमानश्चासीत्। वस्त्र-विन्यासादिष्वतीव सारल्यमलक्ष्यत। अन्तिमे वयसि संन्यस्तचिह्नानां श्रीमतां १९८६ तमे वि. वर्षे पुण्यधामनि काश्यां कैलासवासोऽभूत्। पं. भवदत्तशास्त्री, पं. विष्णुदत्तशास्त्री चेत्यग्रे उपवर्ण्यमानौ श्रीमतां विद्वांसौ द्वौ पुत्रौ। श्रीमद्भिर्या किल संस्कृतभारत्याः सेवा कृता सा हि चिरकालं यावत्सहृदयानां स्मरणीया भवेत्। प्रोक्तं जयपुरविलासे -

**'व्याख्याविशेषैर्लघुकौमुदीं स्फुटीचकार यो व्याकृतिकल्पितश्रमः।**
**व्युत्पत्तिवित्तोऽमरवृत्तिशोधको न स्तूयते कैः** शिवदत्तपण्डितः॥'

**उल्लाला--** **भङ्गाऽभङ्गश्लेषपरं भङ्गारससङ्गात्**
**चङ्क्रमन्तमन्तर्गृहं तु मातङ्गाऽऽरङ्गात्**
**यस्य हि 'जयपुरपञ्चरङ्ग'मुखगुम्फमुदीक्षे।**
**बुधतल्लज-कविमल्लमिमं** हरिवल्लभ**मीक्षे॥ ६०॥**

सभङ्गे अभङ्गे च श्लेषे तत्परम्। एतस्योदाहरणानि रसिकेषु प्रसिद्धानि, तल्लिखितपञ्जिकासु स्थितानि च। मातङ्गारङ्गात् हस्तिन इव मदानुगुणप्रकारात्, हेतुः। गुम्फो रचना-जयनगरपञ्चरङ्ग-कान्तावक्षोजशतोक्ति-ललनालोचनोल्लासश्लोकबद्धदश-कुमारचरितप्रभृतिः प्रकाशिता। सं. रत्नाकरेपि च समये समये मुक्तकसूक्तयः प्रकटिताः। सूक्तिनिदर्शनसापेक्षमेतस्य जीवनवृत्तं विस्तृतमुचितं स्यादिति स्थानान्तरे प्रकाशनस्येच्छा।

**क.--** **आयुर्वेदसंहितासु मार्मिकः प्रमितवचा**
**धार्मिकः समस्तसाधुलोकैरपि शस्यते**
**भारते चिकित्साकर्मचतुराणामन्यतम-**
**श्छन्दोविचिकित्सा विदाममुना निरस्यते।**
**मञ्जुनाथ शिष्यगणघोषितविपुलयशा**
**धीरशान्तसत्यब्रह्मचारी वरिवस्यते**
**नामी वैद्यपण्डितेषु चामीकरतुल्यतनुः**
**स्वामी स हि** लक्ष्मीरामसुकृती **प्रशस्यते॥ ६१॥**

प्रमितवचाः प्रमितं वचो यस्य सः। विदां विदुषां छन्दोविचिकित्सा छन्दः-शास्त्रविषयकः संदेहः। छन्दःशास्त्रपाण्डित्यमिदं श्रीमतः पारम्परिकम्। श्रीमतां गुरवश्चन्दनदासस्वामिनश्छन्दसि निपुणा

आसन्। 'छन्दोविन्मण्डन' नामक एतेषां ग्रन्थः संमुद्रितोऽप्यस्ति। एते च सुप्रिसिद्धकविश्रीकृष्णरामभट्ट-महाभागैः 'छन्दश्चन्दनदासतः' इति छन्दोगुरुत्वेन गीताः। चामीकरं स्वर्णम्॥ ६१॥

**कुण्डलिया--** **अव्याजं बुधसमुदये समयमवेक्ष्य ददाति।**
**आर्थिकसहाय्यं सदा सोयं स्वामी भाति॥**
**सोयं स्वामी भाति संदधत्सर्वान् सुधियः।**
**औषधजातममूल्यमेव दीनेषु दिशति यः॥**
**विद्यालयमुपरोप्य चोन्नयन् स्वामिसमाजम्।**
लक्ष्मीरामस्वामिवरः **श्लाघ्योऽस्त्यव्याजम्॥६२॥**

अव्याजं निष्कपटम्, वृद्धिं विना च। संदधदिति.-- ये ये विद्वांसः प्रथिताः सन्ति ते ते श्रीमतः सुहृत्कोट्यामिति। अमूल्यं बहुमूल्यम् विना मूल्यं च। विद्यालयः 'दादूमहाविद्यालयः'। धन्वन्तर्यौषधालयस्थापनादिवृत्तावगतये स्वामिमहोदयस्य विशेषपरिचयार्थं च रत्नाकरस्य 'आयुर्वेदाङ्कः' संद्रष्टव्यः।

**क.--** **साहित्यादिमार्मिकोऽथ दर्शनविमर्शवहो**
**महामहोपाध्यायादिबिरुदोऽयमिष्यताम्**
**रत्नाकरवाही महाकाव्यसंग्रहादिपरः**
**प्रायशः प्रवासी वक्तृताऽर्थेऽयाद्यशस्यताम्।**
**ग्रहिलः कदाचिदेव, सरलः स्मिताऽऽस्यः सदा**
**कार्यशतव्यापृतः सुदीर्घाह्निको दृश्यताम्**
**वेदोदितविज्ञानप्रकाशनेष्वखेदोदयो**
गिरिधरशर्मचतुर्वेदो **भूरि शस्यताम्॥ ६३॥**

संस्कृतरत्नाकरस्य वाहकः (प्रकाशकः)। ग्रहिलः आग्रही। अखेदोदयः नास्ति खेदोदयो यस्य॥६३॥

**प्राप्य संनिधाने यस्य काव्य-कथाऽऽलापादिभिः**
**सकलजनस्य मनस्तोषं प्रसमीक्षध्वम्**
**तन्त्रे सुप्रगल्भं शब्दशास्त्रपरिष्करे पटु-**
**मौचित्योपचारे परिनिष्ठितं परीक्षध्वम्।**
**पाठशालावातायनमध्ये मञ्जुमूर्त्या स्थित-**
**मध्येतृषु, भृत्येष्वपि मृदुलमुदीक्षध्वम्**

**शान्तिकरीं मुद्रामाप्य विबुधकरीन्द्रसमं**

राजगुरुचन्द्रदत्तचौधरीं **निरीक्षध्वम्॥ ६४॥**

आ-आप्य। विबुधेषु करीन्द्रसमम्, ऐरावतसमं वा। चौधरीति मैथिल-जातीयोपाधिः ॥६४॥

**माध्यन्दिनशाखामाप्य काश्यां समधीत्य श्रुतिं**

**व्युत्पत्तिप्रकाश्यामथ विद्यामधिगत्य ताम्**

**सदसि घनान्तवेदपाठी पुनः श्रौतविधा-**

**वग्निचयनान्तक्रियाकुशलोऽवधार्यताम्।**

**जयपुरराजकीयशालावेदपाठकोऽयं**

**शिरसि विशालां दधदुष्णीषिकामिष्यताम्**

**व्यञ्जन्नात्ममानं वैद्यसंमेलने षोडशेऽथ**

गोडशेगणेशशास्त्री **वैदिको विभाव्यताम्॥ ६५॥**

आ-आप्य अवलम्ब्य। व्युत्पत्त्या प्रकाश्या विद्या. व्याकरणकाव्य कोषादिः। जयपुरे जायमाने षोडशे वैद्यसम्मेलने (प्रारम्भे) वेदोक्तमङ्गलं कर्तुं प्रार्थितो गोडशेमहोदयः-'ईदृश्यां सार्वजनिकसभायां वेदश्रवणाऽनधिकारिणो यवनादयोपि तिष्ठन्ति। अत एव वेदमर्यादाभिज्ञस्य वैदिकस्य मे नेदं कर्तव्यम्' इति सविनयं प्रत्याख्यत्। अयमासीत्पूर्वं संस्कृतकालेजस्य यजुर्वेदप्रधानाध्यापकः। इदानीमेतस्थाने वेदाचार्यः शिवप्रतापमहोदयः पाठयति॥ ६५॥

**अध्यापकमुच्चराजकीयाङ्गलविद्यालये**

**भाषामेतदीयामाप्य सिद्धं सभ्यसंचये**

**सरलसरलसाधुसंस्कृतसुशिक्षापर-**

**मविरलगाम्भीर्याभिमानमुन्नताशये।**

**हेलयैव कवितागवीनां मूर्ध्नि केलिपरं**

**सूरिसमुद्वेलितसभासु भान्तमुक्तये**

**सामाजिकशोधकरणाय मण्डलान्तः स्थितं**

**व्याकरणाचार्य**सूर्यनारायणा**ख्यं श्रये॥ ६६॥**

उच्चो राजकीयाङ्गलविद्यालयः 'महाराजा कॉलेज'। एतदीयाम् आङ्गलभाषाम्। सरलसरलेति. संस्कृतशिक्षायां सारल्यपक्षपातिनम् 'सरलसंस्कृतशिक्षक' विधातारं च। उन्नते निजस्याशये अविरलः अनल्पः गाम्भीर्यस्याभिमानो यस्य तम्। कवितागव्यः कवितागिरः। किञ्च वराक्यः कविताः गोसदृश्यो दीनाः, अत एव तन्मूर्ध्नि यः कोपि केलिकरो भवति। विद्वत्पूरितसभासु उक्तये व्याख्यानाय भान्तम् शोभमानम्। सामाजिकेति. पूर्वमयं 'समाजसुधारकमण्डलस्य' मन्त्री आसीत्॥ ६६॥

न्यायशास्त्रशैलेभ्योऽथ भाईनाथमैथिलेभ्योऽ-

धीततर्कतन्त्रं नीतमन्त्रं प्रसमीक्षध्वम्

तत्तत्कालिकेभ्यो राजतन्त्रपरिचालकेभ्यो

गाढव्यावहारात्प्राप्तलाभमभिवीक्षध्वम्।

व्यङ्ग्यवाग्रसिकमानुकूल्ये मित्रगोष्ठीप्रियं

स्वल्पप्रातिकूल्ये रक्तवदनं परीक्षध्वम्

बद्धसुहृद्भावं भूरि वैयाकरणानां गणे

नैयायिकवर्यं तं कन्हैयालालमीक्षध्वम्॥ ६७॥

शैलेभ्यः शैलवत् अविचलेभ्यः। नैयायिकप्रवराणामेतेषां विषये प्रोक्तं जयपुरविलासे-

'यो जागदीशीं सगदाधरीं विदन्नैयायिको मैथलविप्रपुङ्गवः।

प्रियाद्वयीलालितपादपङ्कजः स भायिनाथोऽस्ति सभासभाजितः॥'

स्वल्पेऽपि प्रातिकूल्ये सति क्रोधोदयेन रक्तवदनता भवतीति परीक्षध्वम्॥६७॥

लब्धाचार्यगौरवो यो ज्यौतिषेऽप्यमन्दीभवन्

पत्रादिषु दर्शनीयहिन्दीलेखमर्माऽयम्

सर्वविधसाहित्यानुरागी लघुलेखपटु-

र्मित्रमण्डलीषु मिलन्मर्मस्पर्शिनर्माऽयम्।

चक्रोष्णीषधारी भाति गुरुतां दधानोऽधुना

प्राप्तराजविद्यालयाध्यापकत्वकर्माऽयम्

वार्ताप्रौढिभावाद्भूरिवेदी परामृश्यतां च

दृश्यतां द्विवेदी गिरिजाप्रसादशर्माऽयम्॥ ६८॥

पत्रादिषु सरस्वती-माधुरी-आदिमासिकपत्रादिषु। सर्वविधं संस्कृत-हिन्दी-बङ्गला-अंग्रेजीमयम्। नर्म हासपरिहासः। गुरुताम् उभयथा, शरीरेण अध्यापनेन च। यो भूरिवेदी स द्विवेदी कथमिति विरोधः, बहुज्ञो यो 'द्विवेदी'त्यवटङ्क इति तत्परिहारः॥ ६८॥

सर्वविधपुस्तकसंग्राहकस्य यस्य गृहे

परितोऽप्युदस्य पत्रराशिमुपलालय

आगन्तुकलोकेभ्यः प्रदर्शयितुर्यन्त्रगृहं

गेह एव यस्य मुद्रायन्त्रमुपभालय।

**ज्यौतिषे गरिष्ठमथ साहित्ये निविष्टतमं**

**तं हब्बुलगारकुतुकस्थमनुपालय**

**'काव्यमाला'संपादनगीतगुणगाथमिमं**

**पण्डित**केदारनाथ**मचिरान्निभालय ॥ ६९ ॥**

यदि किञ्चित्पुस्तकं पत्रं वा तव जिघृक्षितं तर्हि गृहे परितोपि विकीर्ण पत्रराशिम् उदस्य इतस्ततः प्रक्षिप्यं उपलालय अन्वेषय। यन्त्रगृहं राजकीयज्योतिर्यन्त्रशाला 'ऑब्ज़रवेटरी', अन्यत्किञ्चिन्न बोध्यम्। मुद्रायन्त्रम् 'पण्डितप्रेस'। हब्बुलगारं त्वस्मदविदितः कश्चित्पदार्थोऽस्ति, यस्य सहयोगेन पुष्टदर्पणोपरि मन्दाघाते कृते वृष्टिर्भवतीति महोदयस्याऽस्य कौतुकास्पदं विज्ञानम्॥ ६९ ॥

**फलितोपसन्ना मतिरस्ति तव ज्यौतिषे चे-**

**ज्जगन्नाथज्यौतिषिवरिष्ठमुपढौकय**

**ज्यौतिषे गृहीताचार्यपदमुपनीताऽऽगमं**

**राजभाषाविज्ञमेतत्सूनुमनुमोदय।**

**राजकीयशालां दर्शनोपलक्ष्ये गच्छसि चे -**

**दुत्तरदिक्कक्ष्ये तर्हि दृशमुपरोपय**

**आयसशलाकान्तिके मत्तगजतुल्यस्थितं**

दुर्गादत्त**गणकवरेन्द्रमवलोकय ॥ ७० ॥**

फलितोपसन्ना फलितज्यौतिषानुगामिनी। उपढौकय अनुगच्छ। उपनीतागमम् अधीतशास्त्रम्। राजभाषा अंग्रेजी। एतत्सूनुम्, एतस्य श्रीजगन्नाथज्यौतिषिवरिष्ठस्य पुत्रम्। अनुमोदय अभिनन्द। राजकीयशाला संस्कृतपाठशाला। उत्तरदिशः प्रकोष्ठं तदस्ति यस्मिन् साम्प्रतं पुस्तकालयोस्ति। तत्रैव लोहशलाकावेष्टितस्य महावातायनस्य सविधे महोदयस्यास्य पूर्वमासनमासीत्। अत एव आलानस्य सविधे मत्तकुञ्जरवदास्थितम्॥ ७० ॥

**श्रीमत्कृष्णशास्त्रिमहाभागाज्ज्ञातसाहित्यं हि**

**मुन्शिप्रवरेण नित्यं मुदितमपेक्षेथाः**

**वृत्तावुन्नतत्वेपि च वस्त्राद्युन्नतत्वे सदा**

**भूरिसरलत्वेन प्रवृत्तं सुपरीक्षेथाः।**

**आलङ्कारिकत्वेपि च वेषेङ्गितसाम्यवशाद्**

**वाक्यसंनिवेशेऽपि च स्थौल्यगुणं वीक्षेथाः**

**नस्यभराऽऽधारीकृतनासिकानिकटतटं**

**काव्यशास्त्रपारीणं** बिहारीलाल**मीक्षेथाः ॥ ७१ ॥**

मुन्शिप्रवरः स्वर्गीयो रामप्रतापमहोदयस्तत्प्रतिवेशी। वृत्तावुन्नतत्वेपि संस्कृतकालेजे अध्यापकानां मासिकवृत्तौ उन्नतिर्जाता किन्तु असौ वस्त्रादीनाम् उन्नतिविषये सरलतया प्रवृत्तोऽभवत् अर्थात् न चकार। हन्त जीवितदशायामुपनिबद्धः सोयं सुहृत्परिहासः स्वर्गं गते तस्मिन्प्रकाश्यत इति खेदः।।७१॥

**गणितविभागे यथा भूरिपरिणद्धमतिं**
**फलितविभागे तथा विज्ञतमं जानीथाः**
**जाग्रज्ज्यौतिषागमनिविष्टमतेरस्य मुखा-**
**दद्भुतविशिष्टशतश्लोकानुपगृह्णीथाः।**
**उज्जयिनी-देहलीप्रभृतियन्त्रशालासखं**
**वार्द्धकेऽप्यखण्डगतिशक्तिमिमं मन्वीथाः**
**राजकीययन्त्रशालातन्त्रपरिभावनाय**
श्रीगोकुलचन्द्र**भावनाय नमस्कुर्वीथाः॥ ७२॥**

यन्त्रशालाः जयपुरराजकीयज्यौतिषयन्त्रशालाः, तत्सखं तासां जीर्णतोद्धारकर्तारमित्यर्थः। सखम् अखम् इति प्रासः। अखण्डा गतिशक्तिः यातायातसामर्थ्यं यस्य। तन्त्रपरिभावनाय प्रबन्धपरिचालकाय, ज्यौतिषयन्त्रशालाया ज्यौतिषिकायेत्यर्थः। 'भावन' इति 'गौड'ब्राह्मणानामवटङ्कः। 'भावनाय' इति चतुर्थी तु 'नमस्कुर्मो नृसिंहाये' तिवत्।।७२॥

*** संग्रहः ***

महोदयस्यास्य जन्म १९०९ तमविक्रमवर्षस्य शिवरात्रिदिनेऽभवत्। एपि हि प्रथमप्रथमं जयपुरराज्यान्तर्गते सवाईमाधवपुरे राजकीयप्राथमिकविद्यालयेऽध्यापनमकरोत्। ततो मथुरायाः प्रसिद्धश्रेष्ठिमनीरामस्यायं प्रधानज्यौतिषिकोऽभवत्। अनन्तरमेतस्य ज्यौतिषपटिष्ठतामवगत्य जयपुरनरेशेनास्मै १९५५ वि. वर्षे ज्यौतिषयन्त्रालये ज्यौतिषिकपदमदीयत। एष हि यथा गणिते तथा फलितज्यौतिषेऽपि स्फुरत्प्रतिभोऽभवत्। 'पञ्चाङ्गशोधनसमित्या' मोहमय्यामस्मै भूयसी प्रतिष्ठा 'विद्याभूषण' इत्युपाधिश्चादायि। एष ज्यौतिषयन्त्रशोधनादिकार्येषु नितरामनुभवी समभूत्। विश्वविश्रुतेन सवाई-श्रीजयसिंहमहाराजेन जयपुरे दिल्ल्यां, काश्याम्, उज्जयिन्यां च ज्यौतिषयन्त्र-शाला निरमीयन्त। तासां जीर्णोद्धारः अनेनैव महाभागेन पुनरक्रियत। उज्जयिनी-यन्त्रकार्यात्संतुष्टेन गवालियरनरेशेनाऽस्मै सुमहत्पारितोषिकमभिनन्दनपत्रं चादीयत। शेखावाटीप्रान्ते फतहपुरनगरेऽपि रामप्रतापचमडियामहोदयेन स्वोपवने ज्यौतिषयन्त्राणि कानिचिदस्थाप्यन्त। तेषामपि स्थापना भावनमहोदयस्य हस्तेनैवाऽभवत्।

अनेन महाभागेन-पञ्चाङ्गकल्पवल्ली-ग्रहलाघवसारिणीमेलापकसारणी-आदयो ज्यौतिषनिबन्धा निरमीयन्त। बालबोधनामकं प्रारम्भिकहिन्दीशिक्षकं प्राणायि। मिथ्याज्ञान-विडम्बनप्रहसनस्य पूर्तिः संशोधनं चाकारि। एतल्लिखितो 'भारतीयवेधपथप्रदर्शक' नामको हिन्दीग्रन्थः स्मरणीयोऽस्ति, यस्मिन् ज्यौतिषयन्त्रद्वारा वेधप्रकारस्तद्विषयकं विज्ञानं च प्रदर्शित-

मस्ति। अनेन सहैव 'ताराविलास' नामको नक्षत्रविद्याग्रन्थोपि मुद्रितोस्ति। एष महोदयः सरल-स्वभावः साहित्ये च परमसहृदयः समभूत्। संस्कृतस्य हिन्द्याश्च चमत्कृतमनोरञ्जककवितानां तु भाण्डागार एवासीत्। सरलतमो धन्यश्चायं ७६ वर्षवयस्कः सन् १९८४ तमे वि. वर्षे लोकान्तरमगात्। परलोकप्रयाणमप्यस्याश्चर्यजनकमेवासीत्। एष हि शिवरात्र्यामेव जन्म लेभे, शिवरात्रिदिन एव च कैलाशवास्यभवत्।

**संस्कृतसरस्वतीप्रविष्टोपि रसातिशया-**
**दिंग्लिशपयस्वतीनिविष्टोऽसौ निरीयते**
**गौडब्राह्मणेषु 'बावल्या' प्रसिद्धियुक्तोऽप्येष**
**विद्याग्रहणे तु सावधानो व्यवसीयते।**
**लक्ष्मणपुरस्थराजकीयाङ्गलविद्यालये-**
**ध्यापनं प्रणीयाऽधुना सुस्थमवस्थीयते**
**पूर्वं न्यायशास्त्रीभवन् एम.ए. पदजुष्टस्ततो**
बद्रीनाथशास्त्री **सप्रशंसं संनिधीयते॥ ७३॥**

यः एकस्यां नद्यां प्रविष्टः, सः अन्यनदीतः कथं निर्गच्छेत्। परमयं संस्कृतसरस्वती-प्रविष्टोऽपि विद्याध्ययने तथा रसाविष्टोऽभूद् यथा तदनुषङ्गेण इंग्लिशसरस्वतीप्रविष्टः सन् निरीयते निर्गच्छति। चतुर्थचरणे स्पष्टीकृतमेतत्। 'बाबळ्या' प्रमत्तः (जयपुरीयहिन्दी), गौडब्राह्मणानामवटङ्कश्च। लक्ष्मणपुरम् लखनऊ॥ ७३॥

छप्प.-- **धीरभावमयमुक्तिनिकरमधिसभमुपयुञ्जन्।**
**संततसुजनसभासु साधुसहभावं युञ्जन्॥**
**मुद्रायन्त्रयुतोऽपि शिथिलतन्त्रं मुहुरञ्चन्।**
**चतुरतया तु धनस्य मूलमन्त्रं न विमुञ्चन्॥**
**रामसभासंयोजनात्प्रकृतधर्ममल्लो जयति।**
**सपदि तु जपमालां करे** बालचन्द्रशास्त्री **नयति॥ ७४॥**

धीरभावमयम् धीरस्वरयुक्तम्। अधिसभं सभामध्ये। मुद्रायन्त्रं 'बालचन्द्रयन्त्रालयः'। शिथिलतन्त्रं मुहुः गच्छन्, वारंबारं तत्प्रबन्धे प्राचीनगतिमनुसरन्नित्यर्थः। प्रकृतधर्ममल्लः सत्यो धर्मवीरः॥ ७४॥

*** संग्रहः ***

१९१२ तमस्य विक्रमवर्षस्य पौषशुक्लचतुर्थ्यां श्रीमतो जन्माऽभवत्। श्रीमता हि भारतप्रसिद्धगुरूपनामकश्रीजीवनाथमैथिलेभ्यस्तथा तर्कमूर्तिश्रीभाईनाथमहाभागेभ्यश्च न्यायशा-स्त्राध्ययनमक्रियत। यस्मिन्समये श्रीमतो यौवनमासीत्तस्मिन्नेव समये भारते आर्यसमाजस्यापि

प्रसृतिरभवत्। प्रसङ्गतश्च आर्यसमाजस्य प्रवर्तकः स्वामी श्रीदयानन्दमहोदयो जयपुरं प्रापत्। धार्मिकजनतायां मा किञ्चन शैथिल्यं भूदिति विचारेण धार्मिकविदुषां साहाय्याच्छ्रीमता 'रामसभायाः' स्थापनाऽकारि, सदाचारमार्तण्डनामकं मासिकपत्रं च हिन्द्यां प्राकाश्यत। अतिसफलतापूर्वकं सेयं सभा बहूनि वर्षाणि जयपुरे धर्मप्रचारमकरोत्। धार्मिकविषयेषु व्याख्यानादिनापि श्रीमता भूयसी धर्मसेवा कीर्तिश्चातुला समपादि।

एष हि महोदयः खेतड़ीनरेशस्य अन्यान्येषां च कतिचित्सामन्तानां मन्त्रदो गुरुरासीत्। सर्वतः पूर्वं श्रीमतैव १९०३ तमे वि. वर्षे प्रजापक्षान्मुद्रणालयस्थापना जयपुरेऽकारि। एष हि महाभागो गौड़जातिपरिष्कारेऽपि भूयांसं भागमग्रहीत्। जातौ कुरीतिनिवारणस्य यानि यानि कार्याण्यभवन् तेषु तेषु श्रीमत एव प्रधानं हस्तावलम्बोभवत्। सोयं धार्मिकमल्लः श्रीमान् श्रावणशुक्लद्वादश्यां (१९९१ वि. वर्षे) धर्मसेवायाः प्रसिद्धं पन्थानं प्रदर्श्य वैकुण्ठवास्यभवत्। एतस्य पं. हरिश्चन्द्रशर्मा बी. ए. एल. एल. बी., पं. मोतीलालशास्त्री (शतपथब्राह्मणादि-भाषान्तरकर्ता) इति पुत्रद्वयमस्ति यद्धि पितुः कीर्तिमुज्ज्वलामेव कुर्यात्।

**सर्वदा प्रसन्नमुखमुद्रादर्शनीयतमं**
**वार्तारसविद्रावितरोगिरोगमीक्षेथाः**
**जयपुरराज्यपूर्वसामन्तप्रदत्तभूरि-**
**भूमिमपि सरलनिसर्गं प्रसमीक्षेथाः।**
**रामानुजसम्प्रदायसारं वहदस्य गृहं**
**विद्युच्चमत्कारं भेषजागारं परीक्षेथाः**
**रुचिरचिकित्सयैनमाबालप्रसिद्धनाम-**
श्यामलालराजवैद्य**मौलिमभिवीक्षेथाः॥ ७५॥**

सामन्तैः प्रदत्ता भूरिभूमिः यस्मै, तादृशमपि सरलस्वभावम्। रामानुजेति. - साम्प्रदायिकशैली-चित्रादियुक्तं मन्दिरं वहद् गृहम्। चिकित्सया आबालं प्रसिद्धं नाम यस्य, ईदृशम् एनम्। एतस्य महोदयस्यजीवनवृत्तादिकं तु 'आयुर्वेदाङ्के' द्रष्टव्यम्॥ ७५॥

**आयुर्वेदतन्त्रे प्राप्य मान्यमिहाचार्यपदं**
**कार्यनैपुणीं यो बहिर्भ्रान्त्वा परिचीय ताम्**
**नव्यरीतिभव्यभेषजालयमुदञ्चन्निह**
**दीर्घरोगदावदृढाऽऽघाती संनिधीयताम्।**
**अर्थेऽवदधानः क्षेमेन्द्रोक्तिचञ्चरीको भृशं**
**जोषं प्राप्य भूरिवैखरीकोऽसौ समीयताम्**

**औषधालयैकनिलयत्वाच्चारुचर्यः सदा**

**श्रीदुर्गाप्रसादवैद्यवर्यः परिचीयताम् ॥ ७६ ॥**

बहिः हरिद्वार-देहल्यादिषु। तां नैपुणीम्। उदञ्चन् उद्घाटयन्। दीर्घरोगरूपो यो दावः (अनलः) तस्य दृढतया प्रतीकारकर्ता, प्रसिद्धश्च वयस्येषु तथा। क्षेमेन्द्रोक्तिः समयमातृकादिः तंत्र भ्रमरः। जोषं प्रीतिम्, भाषाप्रसिद्धाम्, उत्तेजनां वा भूरिवैखरीकः सोत्तेजनोत्साहबहुवक्तृताकः। निलयः स्थानम् ॥ ७६ ॥

**सवै.-- चरकादिपुराणभिषङ्निगमे भृशमेतमुपेतमतिं ह्यवगच्छत**

**गुरुदत्तसमस्तभिषग्विभवं नृपवंशचिकित्सकमच्छलमृच्छत।**

**सरलस्मितभाषिणमृद्धमिमं गुणिगायकगीतिगुणानपि पृच्छत**

**तनुशोषक-रुक्परिशोषपटुं ननु** नन्दकिशोरभिषङ्मणि**मिच्छत ॥७७ ॥**

चरक-सुश्रुतसंहितादिर्यः प्राचीनो भिषङ्निगमः वैद्यकशास्त्रं तस्मिन्। एतम् भृशम् उपेतमतिं अनुगतबुद्धिम्। गुरुणा स्वामिमहाभागेन समर्पितसकलवैद्यकतत्त्वम्। अच्छलं यथा स्यात्तथा गच्छत। ऋद्धं धनशालिनम् इमं गुणिनां गायकानां गीतिवैशिष्ट्यमपि पृच्छत, संगीततत्त्वज्ञमित्यर्थः। तनुशोषिका या रुक् तस्याः निर्मूलनपटुम् ॥ ७७ ॥

**सो.-- योयं** युगलकिशोर**नामा एम्. ए. पदवहः।**

**अनुजः सोऽस्य किशोर-वयसैव हि विनयोज्ज्वलः ॥ ७८ ॥**

अस्य नन्दकिशोरवैद्यस्य। अयं संप्रति राजकीयसंस्कृतपाठशालानां निरीक्षकः ॥७८ ॥

**क.-- व्याकरणाचार्यतया व्याकुर्वन् सुरत्नमिव**

**सूत्रवृत्तिसाधनिकासाधनेऽद्वितीयताम्**

**शुद्धतया यत्किञ्चिन्मुखाग्रगतमुच्चारयन्**

**धारयन्निजाऽधिकृतकार्ये माननीयताम्।**

**मञ्जुनाथ पण्डितेषु पञ्चरङ्गहस्तिसमो**

**रक्तहस्तिमन्दिरसमीपे परिचीयताम्**

**प्रख्यापितप्रश्नवरपण्डितसमाजोन्मेष**

**एष हि** मदनमहाराजो**ऽमन्दमीयताम् ॥ ७९ ॥**

सुष्ठु रत्नं यथा प्रोयमानस्य सूत्रस्य व्यापारसाधनिकासाधने अर्थात् सूत्रगुम्फनसौकर्ये अनुपमतां प्रकटयति, तथा पाणिनीयव्याकरणस्य सूत्राणां वृत्तीनां साधनिकानाम् (सिद्धिप्रक्रियाणाम्) च साधने सम्पादने अनुपमतां प्रकटयन् (मदनमहाराजः)। निजाधिकृतेति अध्यापनादिस्वाधिकारकार्ये प्रामाणिकतां धारयन्। पञ्चरङ्गहस्तीति.- पञ्चरङ्गशालिजयपुर-राजपताकाचिह्नितो हस्ती यथा सर्वेषून्नतो भवति,

तथा सर्वपण्डितेषूत्तुङ्गः। रक्तहस्तिमन्दिरं 'लाल हाथी मन्दिर' एतन्निवासस्थलम्। प्रश्नवरः 'प्रश्नोरा' इति गुर्जरजातिभेदः। मदनाचार्यमहाभागः ईयताम् उपगम्यताम्॥ ७९॥

**जयपुरराजकीयपाठशालामध्यागतो**
**व्याकरणाध्यापनतो नन्दति गतच्छलम्**
**सायं पुनः कालीमन्दिरान्तर्मौनमुद्रासने**
**सेवते गरुडमुद्रां प्रत्यहमचञ्चलम्।**
**पञ्चकेशवैभवात्प्रपञ्चयन् स्वतान्त्रिकतां**
**नानाविधवार्तारसं यो ऽञ्चति निरञ्चलम्**
**मानसोपनीतचन्द्रशेखर-मधीतचन्द्र-**
**शेखर-मभीत** चन्द्रशेखर**मनर्गलम्॥ ८०॥**

शालाम् अध्यागतः प्राप्तः। कालीमन्दिरान्तः, तस्मिन्समये मन्त्रगुरोस्तत्रैवाधिष्ठानात्। मौनमुद्रासने स्थितः। निरञ्चलं निरवसानम् अञ्चति अनुसरति। मानसे उपनीतः चन्द्रशेखरः शिवो येन। अधीतः चन्द्रात् (चन्द्रदत्तमहोदयात्) शेखरो येन। ईदृशं चन्द्रशेखरनामानं विद्वांसम् अनर्गलं निष्प्रतिरोधम् अभीत अभिगच्छत॥ ८०॥

**सो.-- अपि नववयसि विराम-विद्या-विनय-विवेकभृत्।**
**रञ्जयते** जयराम-दासः **स्वामिसमाजगः॥ ८१॥**

नववयसि अपि। विरामः विषयेभ्य उपरामः। रञ्जयते गुणैः सर्वाननुरक्तीकरोति। लक्ष्मीराम-स्वामिमहोदयानामुत्तराधिकारी सोयं संप्रति संस्कृतकालेजे आयुर्वेदद्वितीया-ध्यापकः॥८१॥

**दो.-- धन्वन्तरिभेषजभवनभव्यभिषक्प्रवराय।**
**स्पृहय सुकृतसेवाय शुभमति**-मुकुन्ददेवाय**॥ ८२॥**

सुकृतं सेवतेऽसौ सुकृतसेवः। निम्बार्कसंप्रदायानुगतधर्मकार्याण्यनुतिष्ठतीत्यर्थः॥ ८२॥

**सो.-- चन्दनचर्चितभालमालम्बितहयरश्मिकम्।**
गोपीनाथ**मिहाऽलमालक्ष्य भिषजां वरम्॥८३॥**

आलम्बिताः हयस्य रश्मयः प्रग्रहाः (रास) येन, अग्रासनमारुह्य स्वयमेव हयशकटिं चालयन्तमित्यर्थः। राजवैद्यश्यामलालमहाभागानां भ्रातृव्यः खाण्डलविप्रवरः सोयं वैद्यके प्रसिद्धः॥ ८३॥

**क.-- चिरमजमेरुराजकीयाङ्गलविद्यालयेऽ-**
**ध्यापननियुक्तो युक्तियुक्तोयं विमृश्यताम्**
**वैयाकरणोपि चित्रमादधाति रात्रिन्दिवं**
**मीमांसां प्रतन्वन्नर्थसंग्रहसुजुष्यताम्।**

तत्रैवातिसक्तो जातु जयपुरमागतोऽपि

पण्डितसमाजे याति बहुलसदृश्यताम्

व्यञ्जितविभवदत्तगौरवाभिमानभरो

नूनं भवदत्तनामसूरिवरो दृश्यताम्॥ ८४॥

युक्तिर्मितव्ययिता, तद्युक्तः। यः वैयाकरणः सः 'अर्थसंग्रहस्य' लौगाक्षिकृतग्रन्थस्य सुजुष्यताम् उपगम्यतां कुर्वन् रात्रिं दिवं मीमांसां। (तन्नामक शास्त्रम्) कथम् आदधाति ? इति चित्रम् विरोधः। धनसंग्रहप्रीयमाणतां धारयन् अहर्निशं तद्विषयिकां मीमांसामेव (विचारम्) धारयतीति तत्परिहारः। तत्रैव अर्थसंग्रहे एव। व्यञ्जितः धनवैभवदत्तस्य गौरवस्य (शरीरिकस्य प्रतिष्ठाकृतस्य चेत्युभयविधस्य) अभिमानभरो येन॥ ८४॥

कुहचन रम्यस्थले मोदकरगोष्ठीमाप्य

विविधविनोदपूर्णवार्ता हृदि नीयताम्

शनैः शनैः कालक्रमसंचितोऽर्थकोष इव

निकटगतोऽस्य गुप्तकोषोपि प्रतीयताम्।

विजयां निषेव्य नवव्याडीव प्रचण्डवचा

रेवाड़ीपुरेऽयं चिरात्पाठयन्नभीयताम्

प्रायः प्रभविष्णुदत्तसुरुचिरचित्तवहो-

ऽवश्यं विष्णुदत्तपण्डितोयं परिचीयताम्॥ ८५॥

मोदकरी सुहृद्गोष्ठी, मोदकचिह्नेन भोजनगोष्ठी च। गुप्तकोषः एतन्निर्मितो बृहत् त्रैमासिककोषः यो बहुवर्षेष्वतिक्रान्तेष्वपि न प्रकाशितः, अत एव गुप्तः। प्रचण्ड़वचाः दुर्धर्षवचनः। नवव्याडीति. - संग्रहकर्त्ता मन्ये अभिनवो व्याडी एव समागतः। अभि ईयताम् अभिगम्यताम्। प्रभविष्णुना ईश्वरेण दत्तं निश्छलं चित्तं वहति सः॥ ८५॥

सो.-- न्यायालयाऽनुबन्धि-धर्मविषयनिर्णयकरः।

भाति निर्भरानन्दि - लालचन्द्रमैथिलवरः॥ ८६॥

'अदालत दीवानी' स्थानस्य धर्मशास्त्री (व्यवस्थाकरः)॥ ८६॥

क.-- जानुदघ्नमेकमङ्गरक्षकं विधाय तनौ

शिरसि निधाय चायमुष्णीषं युगन्धरम्

साक्षात्सुराचार्य इति प्रणतिप्रतीक्षयैव

नमति न पण्डितान्, निरीक्षते तु निर्भरम्।

**'बादरमहल 'वरणेन मन्त्रमूर्तिः स्वयं**

**नाऽऽदरमुपैति मार्मिकेषु प्रमदोत्तरम्**

**ओजायितकार्येष्वपि यो झावुकमूषसमः**

**सेव्यतां स ओझावंशभूषणो निरन्तरम्॥ ८७॥**

जानुदघ्नं जानुपर्यन्तम् अत्युच्चमित्यर्थः। अङ्गरक्षकम् 'अँगरखी' वस्त्रम्। युगन्धरम् युगयुगान्तरस्य तैलचिक्कणमतिप्राचीनमित्यर्थः। अयं साक्षात् सुराणां आचार्यः, न तु सुरायाम्। अत एव अन्यपण्डितकृतायाः प्रणतेः प्रतीक्षामेव करोति न तु पण्डितान् स्वयं नमति। एवं स्थितावपि अन्यदिङ्मुखो भवति इति न, अपि तु अप्रणमन्नेव तान् निर्भरं निरीक्षते। 'बादरमहल' स्थानकृतेन राजकीयजपदुर्गापाठ-वरणेन। अत एव मार्मिकेष्वपि पण्डितेषु हर्षपूर्वकम् आदरभावं न उपैति। ओजायितं वीरता। झावुकमूषः 'झाऊ मूसा' आत्मगोपने प्रसिद्धः॥ ८७॥

उ.-- **वेदाचार्यकपदमयन् वित्सु विनयमयमभिनयन्।**

**काश्यामध्यापनकरो** विजयचन्द्र**वैदिकवरः॥ ८८॥**

'वेदाचार्य' इति उपाधिम् अयन् प्राप्नुवन्। वित्सु पण्डितेषु। काशीराजकीयविद्यालये वेदाध्यापकः। हन्त सोयं स्वल्पवयस्येव दिवमारूढ इति खेदः॥ ८८॥

छप्प.-- **हिन्दीसंस्कृतपद्ययोजनेऽमन्दीभूतम्**

**अधिसभमेतच्छ्रावणे च निःस्पन्दीभूतम्।**

**प्राक्तनवैयाकरणकेसरित्वं कलयन्तम्**

**आङ्गलविद्यालये धनिकबालान्विनयन्तम्।**

**श्लाघयामि कृतिहेतवे सर्वजनश्लाघाकरम्।**

**सरभसमन्द्रध्वनिधरं** विजयचन्द्रपण्डित**वरम्॥ ८९॥**

अधिसभम् सभायाम् एतेषां पद्यानां श्रावणार्थं निःस्पन्दीभूतं सुस्थिरम्। धनिकबालान् सामन्तकुमारान् विनयन्तं शिक्षयन्तम्, 'नोबिलस्कूलपण्डितम्'। कृतिहेतवे स्वकार्य-सिद्ध्यर्थम्॥८९॥

**राजकीयविद्यालयमध्ये काव्यशास्त्रमध्येजयते यः।**

**विविधोपायसमाहृतलक्ष्मी**र्लक्ष्मीनाथबुधो **ह्यवसेयः॥ ९०॥**

अध्येजयते अध्यापनेन प्रभासयतीत्यर्थः। 'एजृ 'दीप्तौ। विविधोपायैः अध्यापन-ज्यौतिष-कर्मकाण्डमहानसप्रबन्धादिभिः अर्जितलक्ष्मीकः। पं. लक्ष्मीनाथशास्त्री दाधीचः। अवसेयः ज्ञातव्यः॥ ९०॥

क.-- **शास्त्रिपदधारी काव्य-साहित्यागमे श्रमेण**

**प्राप्ताचार्यचिह्नः पुनर्व्याकृतिमधीत्य ताम्**

**शुष्यन्मुखमण्डलस्य यस्य भ्रुवोर्मध्ये शोण-**

**शोभनस्त्रिकोणतिग्मतिलकः प्रतीयताम्।**

**चित्ते महामहाराष्ट्रभावनया भव्यीभवन्**

**प्रावेशिकपाठने परिश्रमी प्रणीयताम्**

**यो धर्माधिकारिपदचिह्नितो विभाति सदा**

गोपीनाथशर्मा **साधुकर्मा सोऽयमीयताम्॥ ९१ ॥**

व्याकृतिं व्याकरणशास्त्रम्। तिग्म: तीक्ष्णाग्रभाग:। पं. गोपीनाथ धर्माधिकारी ईयतां प्राप्यताम्॥९१॥

**दो.-- नेया दृङ् नैयायिके** नन्दकिशोरे **नाम।**

**यस्तर्काध्यापकपदं संप्रति समधिजगाम॥ ९२ ॥**

दृष्टिर्नेतव्या। संस्कृतकालेजे तर्कशास्त्रस्य द्वितीयाध्यापकपदम्॥ ९२ ॥

उ.-- **बहुकालादध्यापयन् अधिसंस्कृतविद्यालयम्।**

**प्रवेशिकागणितोच्चयम्** रामचन्द्रविद्वान**यम्॥ ९३ ॥**

प्रवेशिकायां प्रधानगणिताध्यापको ज्यौतिषशास्त्री पं. श्रीरामचन्द्रमहोदय:॥ ९३ ॥

**क.-- भ्रातृवरमन्नालालगणकमवाप्य सह**

**संपन्नाऽचिरप्रसिद्धिमखिलसुधीचये**

**सदाचारविद्यालय-कन्यापाठशालाधिपं**

**व्यापारादिसंपादितसंपदमुदञ्चये।**

**एका गृहकार्यायाऽपराऽथ शिक्षाकार्यायेति**

**सर्वदाऽस्य भार्याद्वयमुचितं प्रतर्कये**

**लोकहितकारिसभाकार्याणाममन्दमति-**

**मिह** शिवनन्दशर्मपण्डित**मुदीरये॥ ९४॥**

अखिलपण्डितसमूहे संजातशीघ्रप्रसिद्धिम्। अनेन हि व्यापारिणामार्थिकसहाय्यं प्राप्य 'चतुर्भुजमन्दिर'स्थ: सदाचारविद्यालयोऽस्थाप्यत। तत: स्वदत्तभवने 'सरस्वती-कन्या-विद्यालय:' स्थापित:। अधुना च 'शिवरामछात्रालय'नाम्ना प्रारम्भिकशिक्षालय: स्थापित:। उदञ्चये अभिगच्छामि। लोकहितकारीति. - यथा हि बहूनि दिनानि यावत्'सनातन-धर्ममण्डल'स्य मन्त्रिताकार्यं साभिनिवेश-मक्रियत। उदीरये वर्णयामि॥ ९४॥

उ.-- **प्रहरिवदास्थितवि[illegible]तति-महरिह वरणे योजयति।**

**डहरिमारुतिस्थानपति**-लहरिगणकवर **उल्लसति॥ ९५ ॥**

राजान्त:पुरादिषु वरणप्राप्त्यर्थं प्रहरि (यामिक) वत् गृहे अवस्थितां ब्राह्मणमण्डलीम्। अह: एकदिनं यावत् वरणे स्थापयति। डहरिमारुति: 'डहर के बालाजी'॥ ९५॥

**पञ्चाङ्गं यो मुद्रयति, समये सुमनसि संदिशति।**

**केवलगणकसुकुलमवति, स हि** नारायण **उल्लसति॥ ९६॥**

सुमनसि दिशति पण्डिते ददाति। अन्योपि निजपञ्चाङ्गं पूर्वं गोपयति, ततः समयोपरि सुन्दरमानसे कस्मिंश्चित् समर्पयति॥ ९६॥

**क.-- कैशोरे कवित्वबजीमाप्य कृतिमाकलयन्**

**लोकसाधुवादैः कृतिमानी सुकवीयते**

**साहित्यं समाप्य शास्त्रिपदवीप्रलब्धावेव**

**सिद्धिस्तव-वाणीलहरीषु व्यवसीयते।**

**नानाविधोपाधिभरैरुदरप्रशस्तिकरो**

**गर्वभरोन्नद्धो गुणजात्या गुरौ गीयते**

**नामावलदाधीचेषु नैपुणनिहितनामा**

**सूरि**र्हरिनारायण**नामा सोऽयमीयते॥ ९७॥**

कृतिं कविताम्। सिद्धिस्तव-वाणीलहरीप्रभृतिरचनासु व्यवसीयते व्याप्रियते। नानाविधोपाधिसमूहैः 'कविभूषण आशुकवि महोपाध्याय' प्रभृतिभिः (उपलक्षितः)। 'उदरप्रशस्ति' नामककाव्यनिर्माता। गुरौ गुरुविषयेपि गुणजात्या गर्वभरोन्नद्धः कथ्यते। 'नामावल' इति दाधीचानां गोत्रावटङ्कः॥ ९७॥

**सो.-- यस्य मनसि घनघोर-यत्नो वसति यशःकृते।**

**नन्दति** नन्दकिशोरनामा **नामावलवरः॥ ९८॥**

साहित्याचार्य पं. नन्दकिशोरशर्मा दाधीचः, यो हि वृत्तिं प्रदाय गवेषणाकार्यशिक्षार्थं जयपुरशिक्षाविभागेन काश्यां प्रहितः। अयं महाभागः सम्प्रति राजकीयसंस्कृतपाठशालायां साहित्यद्वितीयाध्यापकः संजातः॥ ९८॥

**क.-- पूर्वं भारतीसर्वस्वमङ्गीकृत्य, रत्नाकरे,**

**जयपुरवस्तुसङ्गी कुम्भजमुनीयते**

**शब्दोच्चारणेषु बहिरङ्गीकृतरेफगणो**

**भङ्गश्लेषभङ्गीदत्तचित्तोऽसौ समीयते।**

**पिङ्गलादधिकमेष डिङ्गलानुरागी, सभा-**

**मङ्गलाय पाण्डवीयस्यन्दन उदीर्यते**

**कार्यसाधनाऽभिधमबाधवनमालोडय-**

**न्माधवमहोदयोऽयमारात्परिचीयते॥ ९९॥**

'भारतीसर्वस्व' नाम्नो हिन्दीमासिकपत्रस्य प्रकाशनमारब्धमासीत्। जयपुरवस्त्विति.- जयपुरवस्तुप्रचारकार्यालयं विशालवीथ्यां संस्थाप्य व्यापारः प्रारब्धोऽभूत्। रत्नाकरे (संस्कृतरत्नाकरे) अगस्त्यायते, सोत्साहमङ्गीकृत्य तं प्रलोपयामासेत्यर्थः। भङ्गश्लेषस्य भङ्गी यथा-मदरसा, मदर-सा मातृवत् पोषकः इत्यादि। समीयते संप्राप्यते। व्रजभाषासाहित्यं ''पिङ्गल'' नाम्ना, राजस्थानीय 'चारण'भाषासाहित्यं च 'डिङ्गल' नाम्ना प्रथितम्। सभासु मङ्गलाचरणे 'श्रीयदुनन्दन पापनिकन्दन पाण्डवस्यन्दन हांकन हारे'इत्यादि सवैयाछन्दः प्रायोऽधिकमाकर्ण्यते स्म। स्वकार्यसाधनरूपम् अबाधं वनं गाहमानः। माधवः (वसन्तः) वनं गाहमानो भवति। साध. बाध. माध. इति प्रासाः। 'आराद्दूर-समीपयोः' उभयथापि॥९९॥

**सो.-- कतिसमृद्धि-पदशुद्धि-सिद्धिषु पटुमनुविद्धि यम्।**
**बुद्धिषु को निरुणद्धि** वृद्धिचन्द्र**वरविद्धियम्॥ १००॥**

कार्यकौशलम् शब्दानां साधुत्वम्, तेषां सिद्धिः साधनप्रक्रिया, एतेषु व्याकृतिकार्येषु यं (वृद्धिचन्द्रम्)पटुम् अनुविद्धि जानीहि। बुद्धिविषयेषु वृद्धिचन्द्राख्यस्य वर-विदः (श्रेष्ठविदुषः) धियं को निरुणद्धि? 'विद्धियम्' यमकः। व्याकरणधर्मशास्त्राचार्य पं. वृद्धिचन्द्रशर्मा॥१००॥

**श्रीमधुसूदनदत्त-वैदिकविज्ञानोदये।**
**साशं दृशमुपदत्त** मोतीलाल**महोदये॥१०१॥**

विद्यावाचस्पतिश्रीमधुसूदनशर्ममैथिलैरुपदिष्टः वैदिकविज्ञानस्योदयो यस्मै। साशम् आशया सहितं यथा तथा, एतत्सकाशात् वैदिकविज्ञानप्रचारस्य भूयसी आशेति भावः। शतपथब्राह्मणादिभाषान्तरकर्ता बालचन्द्रमुद्रायन्त्रालयाध्यक्षः पं. मोतीलालशास्त्री॥ १०१॥

**क.-- यस्य हि पितामहोऽगदंकारेषु कीर्तिमधा-**
**त्काव्यकला-लङ्कारेषु चाऽगादुपश्लोक्यताम्**
**भङ्गरससेवकोऽपि गङ्गाधरस्तातो यस्य**
**वैदुष्याऽनुषङ्गाद्ययौ सद्भिरुपढौक्यताम्।**
**मञ्जुनाथशकटिनिधानतोऽतिहानिं गतो**
**विग्रहं विधाय वंशतोऽयात्खलभोग्यताम्**
**परिहरणीयेष्वपि पर-हरिभावाऽऽकुलो**
नरहरिभट्टः **सैष सादरं विलोक्यताम्॥ १०२॥**

पितामहः श्रीकृष्णरामभट्टमहोदय अगदंकारेषु वैद्येषु उपढौक्यताम् अनुसरणीयताम्। गृहे घोटकशकट्यादिस्थापनप्रभृतिभिर्व्ययबहुलकार्यैः। मञ्जुनाथस्य शकटिरिति त्वर्थो नोचितः। वंशतः स्ववंशजैः सह कलहं विधाय गृहभेदसंतोषिणां खलानामुपभोग्यताम् अयात्। गृहे कलहप्रवर्तकतया सर्वस्वभक्षकतया च परिहरणीयेषु दूरतस्त्यक्तव्येष्वपि वाक्कील-'कामदार' प्रभृतिषु 'अयम् अपरः हरिः (भगवान्)' इति आदरभावा-ऽऽकुलः॥१०२॥

दो.-- **धनविलासविन्मतिबलात्कृतिलालित्यमुपैति।**

**चित्रकलालवलास्यधृक्** कलाधरः **समुदेति॥ १०३॥**

कृतिलालित्यम् दोहादिकवितामाधुर्यम्। कलाधरः कलाधरभट्टमहोदयः। अन्यः कलाधरोपि चन्द्रोऽपि चित्रं यथा तथा कलानां लास्यधृग् सन् उदेति। किञ्च तस्मिन्सयमये धनविलासविदां कामिनां मतिबलात् कामकलनालालित्यं प्राप्यते॥ १०३॥

क.-- **बहुलं प्रजासु कर्मपाटवं विवृण्वन्नेव**

**क्रमशोऽयं राजकीयकार्यगो निरीक्ष्यताम्**

**कर्मकाण्डकूटस्थले कौशलेन जल्पन् वच-**

**श्चातुरीबलेन लब्धकीर्तिः प्रसमीक्ष्यताम्।**

**कर्मकाण्डतुल्यमेव नर्मकाण्डवेदी भृशं**

**प्रासङ्गिकवार्तापटुः प्रचुरं परीक्ष्यताम्**

**अधुनोपलभ्यमानवैदिकसच्चूडामणिः**

**सोयं बत** बच्चूलालचौबे **चिरमीक्ष्यताम्॥ १०४॥**

कर्मपाटवं याजमानिककार्यकौशलम्। नर्म परिहासः। उपलभ्यमानेषु वैदिकेषु सन्॥१०४॥

सो.-- **साहित्योन्नतिदायि-हिन्दीविद्यालयधरे।**

**गौरवमतिमुपयाहि** गौरीलालकवीश्वरे**॥ १०५॥**

हिन्दीविद्यालयः 'कविमण्डल-हिन्दीसाहित्यपाठशाला', तत्परिचालके। कान्यकुब्जवंशप्रसूतो जयपुरराजकीयकवीश्वराणामन्यतमः सोयं महाभागो निःस्वार्थभावेन हिन्दीसाहित्यपाठशालाया अध्याप-कत्वमन्यान्यच्चानुषङ्गिकं तत्कार्यं निरुह्य तामेतां पाठशालां बहूनि वर्षाणि यावत्साफल्यपूर्वकं परिचाल-यामास। अस्यां पाठशालायामधीत्य, 'हिन्दीसाहित्य-संमेलन' परिचालिताः प्रवरपरीक्षाश्च समुत्तीर्य बहवः स्नातका हिन्दीसाहित्यधुरां धरन्ति। हन्त सोयमकाण्ड एव लोकान्तरमुपययौ!॥१०५॥

दो.-- **कविवरपद्माकरकुलजमसहजकविता यस्य।**

**गणय** गिरधरकवि**मिमं कविगणने विन्यस्य॥ १०६॥**

गोविन्दरावेतिख्यातनामकस्तैलङ्गभूसुरोऽयम्॥ १०६॥

सो.-- **यत्पाठः पुनरायमिश्रो भाति फलोदयात्।**

**सोयं** सुन्दररायमिश्रो **मञ्जुमना लसति॥ १०७॥**

येन कृतो वाल्मीकिरामायणादेर्वरणपूर्वकः पाठः आयेन धनागमेन मिश्रः। अयं हि पारिश्रमिकं धनं नियतीकृत्य पाठपुण्येन लोकानां कार्याणि साधयामास॥ १०७॥

* * *

# उद्यानवीथी

### * रामनिवासः *

साङ्गानेरगोपुरसमीपवर्तिद्वारदेश-
मुल्लङ्घ्येममातुरचिकित्सालयमीक्षेथाः
'मेयो'मूर्तिमालोक्यैव जन्तुशालानिकटपथा-
द्वर्तुलविशालां बैण्डवेदिं प्रसमीक्षेथाः।
मञ्जुनाथ नानाविधविटपिनिरुद्धरवि-
रश्मिपुञ्जमेतं लताकुञ्जमभिवीक्षेथाः
वाञ्छसि सुखेन यदि संतापोपराममये
'श्रीरामनिवास' नामपौराऽऽराममीक्षेथाः॥ १ ॥

साङ्गानेरगोपुरसमीपस्थं द्वारम् उल्लङ्घ्य। एतेन इत आरभ्यैव तद्दर्शनक्रमः सूच्यते। वायसराय लॉर्ड मेयोमहोदयस्य स्मारकरूपे स्वर्गीयमहाराजाधिराजश्रीरामसिंहदेवेन 'मेयो हॉस्पिटिल' नाम्ना आङ्गलचिकित्सानुसारी सोयमातुरालयो निर्मापितः। अत्र हि नागरिका विना मूल्यमेव चिकित्सां लभन्ते। भारतवर्षीयप्रसिद्धातुरालयेषु परिगणितेऽस्मिन् सुयोग्याः सिविलसर्जना एव प्रधाना भवन्ति। अनेके च डाक्टरास्तदायत्ता नियतचिकित्सां कुर्वन्ति। अत्र हि दूरदूरतो नेत्र-व्रणादिरोगिणः समायान्ति। प्रतिवर्षं परोलक्षमुद्राव्ययो भवति। चिकित्सालयः आतुरनिवासश्चेत्युभय-संबद्धः सोयम्! वर्तुलां वृत्ताकारां विशालां च बैण्डवाद्यवेदिं 'बैण्ड स्टैण्ड'। अये! यदि संतापोपरामं वाञ्छसि॥ १ ॥

### * जन्तुशाला *

केसरसटावान् हरिरेकतोऽयमुद्गर्जति
मृग-शश-कीशादिकमन्यतोऽपदिश्यताम्
कङ्क-कलहंस-कोक-बक-जलकुक्कुटादेः
संमुखे कपोत शुक-लावादिकमिष्यताम्।
गर्तगतभल्लूकान्तिकेऽसावुष्ट्रपक्षी भाति
नानाजातिजन्तुसहसंस्थितिर्विमृश्यताम्
लम्बलोहजालाच्छन्नजन्तुगृहमाला, पुरः
सेयं राजकीयपशुशाला परिदृश्यताम्॥ २ ॥

अपदिश्यतां दर्शनाय व्यवह्रियताम्। गर्तगतो यो भल्लूकः ऋक्षः तस्य समीपे, उष्ट्रपक्षी 'शुतरमुर्गः', अनेन द्वयोः स्थानसंनिवेशो दर्शितः। नानाजातीयानां शुक-लावक-तित्तिरादीनामेकपञ्जरे स्थितिर्जन्तुस्वभावालोचकानां विशेषकौतुकावहेति सूच्यते। दीर्घेण लोहजालेन परिवृता जन्तूनां गृहमाला यस्यां सा॥ २॥

* ऐलबर्टभवनम् 'ऐलबर्ट हॉल'*

**सूर्याचन्द्रमोभ्यां परिपालितमिवोपरितो**

**जैपुरनरेशैरग्रतोऽधिष्ठितमीयताम्**

**उपरिविलम्बि-विद्युद्वर्तिशतदन्तुरितं**

**काचमणिदीपाधारयुगलमुदीक्ष्यताम्।**

**श्रीमद्रामसिंहमहाराजेनैलबर्टकृते**

**निर्मापितमादर्शोऽयं शिल्पिकृतेर्वीक्ष्यताम्**

**हंहो प्रतिवत्सरं परीक्ष्यमाणबालमिदं**

**विशदविशालमेलबर्टहालमीक्ष्यताम्॥ ३॥**

एलबर्टभवनस्य उपरिभागे एकतः सूर्यस्य अपरतश्चन्द्रस्य रथाधिष्ठितं चित्रं काचाच्छन्नजालिकायामालोक्यते, तत्रोत्प्रेक्षा। द्वाराग्रभागे च-महाराजपृथ्वीराजमारभ्य अर्वाचीन-स्वर्गीयमहाराजश्रीमाधवसिंहदेवपर्यान्तानां जयपुरराजानां विशालचित्राणि सन्ति, अतस्तदधिष्ठितमिदम् ईयतां प्राप्यतमाम्। विद्युद्वर्तिशतैः दन्तुरितम् उन्नतदन्तशोभितम्। दीपाधारयुगलं 'झाड'द्वयम्। महामूल्यं महाविशालं चेदं शिल्पकलाभृतं लोकानां विस्मापकमस्ति। इदं शिल्पिनां कृतेः रचनायाः आदर्शभूतम्। परीक्ष्यमाणाः बाला यस्मिन् तत्। प्रतिवर्षं परीक्षाभवन (Examination Hall) रूपे व्यवहृतिः सूच्यते।

**ऐतिहासिकवृत्तम्**-- प्रजानामानन्दार्थम् 'एलबर्ट एड्वर्ड प्रिंस आफ् वेल्स' महोदयस्य स्मरणार्थं च स्वर्गीयमहाराजश्रीरामसिंहदेवेन तदिदं निर्मापयितुमारब्धम्। ६ फरवरी सन् १९७६ समये प्रिसं आफ् वेल्समहोदयेन निजहस्तद्वाराऽस्य शिलान्यासः कृतः। स्वर्गीयमहाराजश्रीमाधवसिंहदेवस्य समये तदिदं पूर्णतया निर्मितमभूत्। 'एड्वर्ड ब्राडफोर्ड' महोदयेन (एजेन्ट गवर्नर-जनरल राजपूताना) २१ फर्वरी सन् १८८७ समये स्वहस्तेनोद्घाटितम्। अस्य निर्माणे ४९४५४) रूप्यकाणां व्ययः समभूत्॥ ३॥

**विचित्रवस्तुभवन् ( म्यूज़ियम )**

**रोचितचतुर्दिक्चतुर्गुल्मटिकागुल्मवृता**

**मर्मरकृताऽसौ चारुचूडा परिलोक्यताम्**

**मर्मरगवाक्ष-जाल-कट्टहरश्रेणिभृता**

**शिल्पिकृता पञ्चतलपङ्क्तिरुपश्लोक्यताम्।**

मञ्जुनाथ नीचैस्तले बौद्धकालचित्रच्छटा-

रुचिरपटावृतेऽत्र दृष्टिरुपढौक्यताम्

विभवविलसोदयात्स्वर्गपरिहासोद्यतं

श्रीरामनिवासोद्यानहर्म्यमवलोक्यताम्॥ ४॥

शीर्षदेशमारभ्य वर्णनमिदम्। रोचिताः शोभिताः चतुर्दिशो येन ईदृशेन चतुःसंख्याकेन गुल्मटिकागुल्मेन (गुम्बज-बुर्ज-छतरी) वृता मर्मरपाषाणनिर्मिता चूडा शिरोभागः। कट्टहरः 'कटहरा'। पञ्चतलानां खण्डानां पङ्क्तिः समूहः उपश्लोक्यतां श्लाघ्यताम्। बौद्ध-कालिकचित्रच्छटया रुचिरे, पटैः आस्तरण-जवनिकादिरूपैः आवृते।

**ऐतिहासिकवृत्तम्** - स्वर्गीयमहाराजश्रीरामसिंहदेवेन फतहसिंहराठोढस्य मन्त्रित्वे १८७६ तमे ख्रिष्टाब्दे तदिदं निर्मापयितुमारब्धं स्वर्गीयमहाराजश्रीमाधवसिंहदेवेन च कान्तिचन्द्रवन्द्योपाध्यायस्य मन्त्रित्वे १८८७ तमे ख्रिष्टाब्दे च तदिदं पूरितम्। एतद्भवनस्य निर्माणे ५१००३६) रूप्यकाणां व्ययोऽभवत्। वस्तूनि तु पृथक् समगृह्यन्त यानि अनन्तमुद्रामूल्यानि सन्ति। भवनस्य निर्माणं कर्नल एस्. एस. जेकबमहोदयस्य निरीक्षणे मीर तजम्मुल हुसेनस्य प्रबन्धे समभूत्। लालारामबख्श-शङ्करलाल-छोटीलालादिभिश्चित्र-शिल्पिभिः चन्दर-तारादिभिश्चित्रकारैश्चाप्यत्र निजशिल्पं प्रकटितमस्ति। दर्शनीयवस्तूनां संग्रहस्तु लेफ्टिनेंटकर्नल टी. एच् हेंडलीमहोदयस्य निरीक्षणेऽभवत्। अस्य कार्यारम्भः सन् १८८१ वर्षे, उद्घाटनं च १८८७ वर्षस्य फर्वरीमासे समभूत्। श्रूयते यत् तस्मिन्काले नवनिर्मिते कौंसिलभवने नानादिग्देशागतैः समृद्धव्यापारिभिः 'मीना बाजार'नाम्ना नानाविधानि विविधदेशीयानि च शिल्पवस्तूनि प्रसारितान्यासन्। अतिबुद्धिमता यशस्विना च महाराजेन श्रीमाधवसिंहदेवेन तानि सर्वाणि राजकोषतः क्रीतानि। एतान्येव च वस्तूनि 'म्यूज़ियम' भवने प्रतिष्ठाप्य कार्यारम्भः कृतो योहि सांप्रतमत्युन्नतिं गतः। एतद्भवनं विश्वविदितेषु शिल्पस्मारकगृहेषु परिगण्यते। भूमण्डलस्य चतुर्दशाश्चर्येषु तदेतद्भवनमपि ससंमानमाख्यायते लौकैः। विचित्रवस्तुसंग्रहालयश्चायं भारतीयेषु एतेषु (म्यूज़ियम) अन्यतमः। अस्य हि दर्शनीयसामग्री शिल्प-इतिहास-शिक्षा-अर्थशास्त्र-इति चतुर्षु विभागेषु वर्गीकृता। या हि सम्प्रति भूयस्तरामुन्नतिं वृद्धिं च गमिता। अस्येतिहासो 'राजवीथ्यां माधवसिंहमहाराजस्य जीवनचरिते'पि द्रष्टव्यः॥४॥

कुहचन नानाविधधातुवरशिल्पभृतं

कुहचिदनल्पशिलाशिल्पमुपभाल्यताम्

कुत्रचिदनेकदेश-भूषा-वेष-मर्त्यवृन्द-

मौषधिविशेष-जीवजातमधिपाल्यताम्।

क्वापि चैतिहासिकमनुष्य-मुद्रा-मूर्ति-युतं

क्वचिदुचितं नु चित्रजातमुपलाल्यताम्

**विश्वमिव विष्वग्विधिविरचनचित्रवृतं**

**विविधविचित्रवस्तुवेश्म विनिभाल्यताम्॥ ५ ॥**

रौप्य-ताम्र-पित्तलादिधातूनां वरेण शिल्पेन मूर्ति-पात्रादिरूपेण भृतम्। शिलाशिल्पं पाषाणस्य मूर्ति-गृहादिकलारूपम्। नानादेशीयानां भूषण-वेष-विन्यास-मनुष्याणां वृन्दम्। अधिपाल्यतां दृश्यतामिति यावत्। विष्वक् समन्ततः विधिविरचनस्य विधातुः सृष्टिरचनायाः चित्रैर्वृतं विश्वं जगत्। सर्वदृष्ट्या, चित्रैः जगति आश्चर्यभूतैर्वा पदार्थैर्वृतम्॥ ५ ॥

**क्रीडाक्षेत्राणि**

'क्रिकेट' **धावित्वाऽपरेण क्षिप्तमेतद्विकिटान्तरतो**

**लकुटाहतं चोच्छलत्खे गेन्दुकमीक्ष्यताम्**

'टैनिस' **मध्ये जालमालम्ब्याऽथ जालकाष्ठपट्टिकया**

**गेन्दुकमाहन्यमानमेतत्सुपरीक्ष्यताम्।**

'फुटबाल' **देशक्रीड़ाजातमिव पादघातमाहत्यैत-**

**दितस्ततः क्षिप्तं पादकन्दुकं समीक्ष्यताम्**

**पूर्वतनक्रीड़ानां प्रसह्य कण्ठपीड़ाकरं**

**नानाविधमेतच्छिशुक्रीड़ागृहं वीक्ष्यताम्॥ ६ ॥**

अपरेण 'बॉलर' इति ख्यातेन धावित्वा क्षिप्तम्। 'विकिट' उभयप्रान्ते रोपितं यष्टित्रिकम्। लकुटेन 'बैट' इति ख्यातेन आहतम् अत एव खे उच्छलत्। जालकाष्ठपट्टिका 'टैनिस' क्रीड़ायाः रैकट। क्रीडाजातं क्रीडा समूहः। पादघातं पदेन हत्वा, णमुल्। पदेन आहत्य इतस्ततः क्षिप्तं देशीयक्रीड़ावृन्दमिव स्थितं पादकन्दुकं 'फुटबाल' दृश्यताम्। आभिः क्रीड़ाभिः कबड्डीपालादिप्राचीन-क्रीडानां निर्वासनेन तासां कण्ठपीड़ा कृतेत्याशयः॥६ ॥

*** 'बैण्ड' वाद्यम् ***

**नानाविधपुष्पभरैर्नेत्रे परितर्प्य भृशं**

**शाद्वलहरित-हारि-क्षेत्रे परिघूर्ण्यताम्**

**शिमलागृहेऽन्तर्ग्रीष्मविद्रावणमारचय्य**

**श्रावणसुभाद्रपदसुषमा निर्वर्ण्यताम्।**

**सरलसोपानपथमारुह्याऽथ दक्षिणेन**

**मञ्जुनाथ वाग्भिर्जलकुण्डमुपवर्ण्यताम्**

**सायं सोमसौम्ययोः समन्तादवबध्येक्षणं**

**बैण्डवेदिमध्ये बैण्डवाद्यमिहाकर्ण्यताम्॥ ७ ॥**

शाद्वलेन हरितदूर्वापट्टेन हरिते हारिणि सुन्दरे क्षेत्रे 'फील्ड'। घूर्ण्यतां परिभ्रम्यताम्। श्रावण-भाद्रपदमासयोः सुषमा शोभा। अनेन-जलयन्त्र-साहाय्येन परितो भवन्ती वर्षा सूच्यते। अत एव 'सावन-भादवा' इति नाम्नाऽस्य स्थानस्य लोके ख्यातिः। दक्षिणेन मेयो हास्पिटलद्वारतः प्रविश्य पशुशालामुल्लङ्घ्य प्रत्यङ्मुखमागच्छतः पुरुषस्य कृते दक्षिणदिशि। सौम्यो बुधवारः। ईक्षणम् अवबध्य दर्शनव्यापारं त्यक्त्वा। नेत्रे निमील्य वा अनेन 'लय'शून्यस्य आङ्गलसंगीतस्य क्रमः सूचितो यो ह्यस्मिन् वाद्ये उपादीयते। लयमाधुर्यमन्विष्यता संगीतमार्मिकेण तदिदं वाद्यम् असह्यतया नेत्रे निमील्य यथाकथंचिदाकर्ण्यत इत्यर्थः॥७॥

*** मानप्रकाश 'सीनेमाभवनम्' ***

**सवै.-- बहुदूरत एव मिलत्प्रमदैर्निनदैर्जनमानसमोदमुदीक्षे।**
**निकटे त्विह रामनिवासतटे चपला-रुचिरुत्प्रकटेति परीक्षे॥**
**स्फुटवाग्भिरुदञ्चितचित्रपटैः प्रकटैव हि नाट्यकलेति समीक्षे।**
**नवकौतुकिनामभिलाषहुताशविकाशकमानप्रकाशमपीक्षे॥८॥**

मिलन् प्रमदः (हर्षः) येषु अर्थात् हर्षोत्पादकैः निनदैः गीतिस्वनैः दूरत एव जनानां मोदं पश्यामि। चपलारुचिः (विद्युत्प्रकाशः) उत्प्रकटा अत्युन्नततया दूरतो दृश्या। स्फुटा मनुष्यवाक् येषु तैः उदञ्चितैः, चलद्भिः चित्रपटैर्नाटकीया लीलाऽविकलं प्रदर्श्यत इति भावः। अपि ईक्षे। 'मानप्रकाश'चित्रभवनमपि पश्यामीत्यर्थः॥८॥

*** नवनिर्मितः कालेजपरिसरः ***

**स्वस्वविषयेषु भूरिनिपुणो विपश्चिद्गणो-**
**ऽध्यापयति च्छात्रान् यत्र हर्म्यतले निस्तुले**
**विज्ञानोपयोगिबहुमूल्यवस्तुजालेनेह**
**वैज्ञानिकशालेयं विभाति नित्यनिर्मले।**
**क्रीड़न्ति हि छात्रा यत्र सायन्तनकाले पुरः**
**प्राङ्गणान्तराले दिव्यदूर्वाहरितस्थले**
**मानमहीपालेनोपवेशितो विशाले स्थले**
**राजकीयकालेजोऽयमालेख्यो मनस्तले॥९॥**

विपश्चिद्गणः विद्वत्समूहः। निस्तुले अनुपमे 'सुन्दरे'। नित्यनिर्मले कालेजे वैज्ञानिकशाला 'लैबोरेटरी' बहुमूल्यवस्तुसमूहेन विभाति। राजकीयकालेजः 'महाराजास् कालेज', मनस्तले आलेख्यः अङ्कनीयः॥९॥

* फतह टीबा 'तोपध्वनिः' *

गगनमवाप्य गाढगन्धवहाद्वेणीभवन्

बाढमवगूर्णो गिरिश्रेणीमभिगम्य ताम्

ध्वनितो दिगन्तरेषु यातो गिरिगह्वरेषु

मिलितो रवेण विहगानां परिभ्राम्यताम्।

मारुतमहिम्ना घनवृक्षमण्डलीषु मिलन्

कर्णशष्कुलीषु किरन् मोदं परिभ्राम्यताम्

क्लीबानभिधुन्वन् फतेटीबामध्यदेशेऽधुना

क्षीबायितः सोयं तोभनिर्घोषो निशम्यताम्॥ १०॥

गाढगन्धवहात् प्रबलवायोर्वशात् वेणीभवन् वेणीरूपेण उपरि गच्छन्नित्यर्थः। गिरिश्रेणौ प्रतिध्वनिना बाढम् अवगूर्णः गुञ्जितः। घनासु निबिडासु वृक्षमण्डलीषु। परिश्राम्यतां श्रमजीविनाम्, पूर्वं हि मध्याह्ने तोपध्वनिश्रवणोत्तरं तेभ्यः अवकाशोऽदीयत। क्षीबायितः मत्त इव सर्वतः प्रसरन्। तुभ्यते अनेनेति तोभः 'णभ तुभ' हिंसायाम्॥ १०॥

श्रीमानगुल्मटिका ('स्टेच्यू-सरकिल')

दक्षिणतो यस्य मानसैन्योपनिवेशो भाति

नव्योपनिवेशो यस्य चोत्तरतो वीक्ष्यताम्।

पश्चिमतश्चोभूपतिसदनं समीक्ष्य, ततो

ह्यामुखतो भव्यभेषजायतनमीक्ष्यताम्।

चत्वारो विशालपथाश्चञ्चन्ति हि चतुर्दिक्षु

यस्य मञ्जुता च महत्ता च सुपरीक्ष्यताम्

मानमह्यमानसरमिरजाप्रसाद्यमान-

मानभूरिमान 'मानगुल्मट' मुद्वीक्ष्यताम्॥

मानसैन्योपनिवेशः 'मानगार्ड'। नव्योपनिवेशः 'न्यूकौलोनी' [प्राचीन गन्दी-मोरीसमीप-वर्तिनवीनसंनिवेशः]। भव्यभेषजा.-- 'लेडी विलङ्गडन हॉस्पिटल'। मानमह्यमान. - मानेन श्रीमन्मानसिंहनरपालेन मह्यमानः सत्क्रियमाणो यो मिरजा इस्माइलमहोदयस्तेन प्रसाध्यमानम् अलंक्रियमाणम्। मानभूरि.-- मानेन दैर्घ्यायामादि-परिमाणेन बहुमानम् (अधिकसमादरम् भूरिकृतादरमित्यर्थः)।

'मानगार्ड'

'रामोद्यान'सदेशविनिवेशितपुरुपरिसरम्।
'मानसैन्यविनिवेश' मभिनिवेशतो व्रज सखे॥

'रामबाग' समीपे स्थितः पुरुः (भूयान्, विशालः)परिसरो यस्य तम्। 'मानसैन्यसंनिवेशः' ['मानगार्ड'] अभिनिवेशतः (आग्रहेण उत्साहेन)।

'हास्पिटल'

नासा-नेत्र-कर्ण-दन्तरोगाणां चिकित्सां यत्र
रोगिणः पृथक् पृथग् विभागशोऽवकोकेरन्
विस्फोटकगुल्माश्मरीदीर्घरोगिणोऽपि यत्र
चित्रं शस्त्रकर्मणा सुशान्तिमुपढौकेरन्।
आतुरनिवासमथ 'एक्सरे' विभासमितो
वस्तूनां परीक्षणविलासमुपश्लोकेरन्
वैद्यकचिकित्साक्रमे येषां विचिकित्सा भवे-
न्नूतनचिकित्सालयमेते परिलोकेरन्॥ १ ॥

अवलोकेरन् प्राप्नुयुः।'कुकु वृक' आदाने। उपढौकेरन् प्राप्नुयुः। वस्तुपरीक्षाविलासः 'लैबोरेटरी'। उपश्लोकेरन् श्लाघेरन्।

* मोतीडूंगरी *

साँगानेरगोपुरमतीत्य दक्षिणायां दिशि
पक्षिरवरम्योद्यानपद्धतिरुदीक्ष्यताम्
मध्ये मञ्जुवाटिकासु पौरजनगोष्ठीसुखं
गायद्भूरिबिम्बोष्ठीकदम्बकमपीक्ष्यताम्।
मञ्जुनाथ, भङ्गाघूर्णमाननयनानामिदं
चूर्णमादिभव्यभूरिभोजनं समीक्ष्यताम्
दधती पुरस्ताद् गणनाथनाम ज्योती रहो
रम्याराममञ्जु 'मोतीडूंगरी' निरीक्ष्यताम्॥ ११ ॥

पक्षिरवेण रम्याणाम् उद्यानानां पङ्क्तिः। भङ्गापानेन घूर्णमाने नयने येषां (जनानाम्)। चूर्णमा 'चूरमा' 'चूर्यूँ'। पुरस्ताद् गणनाथ (गणेश)नामकं ज्योतिः रहः दधती। रम्यारामैः मञ्जुः॥ ११ ॥

* टीबेश्वर *

भ्रमणरसक्षीवेषु टीबेश्वरभूरपि सुखा।
भङ्गाऽऽश्रयिजीवेषु जीवातुर्जलमुत्तमम्॥ १२॥

भङ्गासेविनो जीवाः उत्तमं जलमेव जीवनौषधं मत्वा एवंविधेष्वपि स्थानेषु अनुरज्यन्तीत्यर्थः॥ १२॥

* झालाना *

प्रावृषि प्रफुल्लकच्छकेतककुसुममिदं
चक्रे जलबन्धान्मुदं नन्दनाऽवहेलकम्
निर्यज्जलनिर्झरे ननन्द यत्र चोपवने
गोष्ठीगतमिन्दुमुखीवृन्दमतिवेलकम्।
मञ्जुनाथ भाग्यवैभवेन वनमेतदभू-
द्दग्रद्रुमभूमौ भ्रमद्भूयिष्ठक्रमेलकम्
बालानामिदानीं पूर्वकालानां कथेयमभू-
ज्झालानाधरणिजातमञ्जुतममेलकम्॥ १३॥

नन्दनवनस्यापि तिरस्कारकमिदमुपवनं पूर्वं 'जलबन्ध' कारणान्मुदं चक्रे। अतिवेलं भृशम्। उपवनमपि शुष्कबालुकामयत्वादुष्ट्रगम्यं वनमभूदित्यर्थः। झालानास्थाने जातं वनसोमवारमेलकं साम्प्रतिकानां बालानां कृते इतिहासकथेवाभूदित्याशयः॥ १३॥

* रामबाग *

कलितकपाटतुङ्गतोरणवितानयुता
विततविटङ्कवरवातायनजालेयम्
पुष्पितपलाशिभिः प्रशस्तपवनेन सुखा
विद्युद्दीपदर्शनीयचारुचन्द्रशालेयम्।
मञ्जुनाथ नानाविधवास्तुशिल्पकौशलेन
प्राघुणिकीभूतभूरितोषितनृपालेयम्
श्रीमन्मानसिंहमहीपालेनोपनीतोन्नति-
रारामान्तराले रामबागहर्म्यमालेयम्॥ १४॥

वितताः विटङ्का वराणि वातायनानि जालिकाश्च यस्यां सा। विटङ्कः कपोतपालिकासाम्यात् तुङ्गतमो देशः, 'किरीटवेदिकाविटङ्कपीठोल्लुठितारुणाङ्गुलि' इति बाणः। चन्द्रशालाः शिरोगृहाः। वास्तुशिल्पं भवन-निर्माणकला। शिल्पकौशलेन-आगन्तुकीभूताः भूरि तोषिताः नृपालाः यया सा॥ १४॥

* नगरसमीपस्थानि कतिचिदुद्यानानि *

**विहर विनायकास्थदेवीमुपगम्य सुखं**

**पश्य स्नानसेवी बलदेवदुर्गरम्यताम्**

**किं धावसि दूरे चन्द्रशिखरे' हजारिबुर्ज'-**

**सेतु-रङ्ग-निर्झरेषु निर्भरं विरम्यताम्।**

**मञ्जुनाथ 'वाटिकाहनूमान्' 'तातवाटिका'वा**

**'चन्दूवाटिका'वा गानगोष्ठीकृते गम्यताम्**

**हरिते दिगन्ते स्थलचिन्तेयं नु किं तेऽभव-**

**ज्जयपुरनगरपुण्यपर्यन्तेषु रम्यताम्॥ १५॥**

'विनायका'ग्रामस्था देवी। तदिदं मन्दिरं दर्शनीयवनशोभं सिंहाद्यधिष्ठितत्वात्साह-सिभिर्गम्यम्। बलदेवदुर्गं ('बुर्ज') पुरातनघट्टस्योपरिष्टात् पर्वतकूटे वर्तते। वर्षाकाले पूरितजल-टङ्कमिदं स्थानं स्नानाय वनशोभादर्शनाय चानुपमम्। 'चन्द्रशिखरं' नाहरगढ़ीयपर्वतस्यैकतमं शिखरम्। 'सेतुनिर्झराः', 'पाज की खोल', 'रङ्गनिर्झराः', 'रांग की खोल' इति प्रसिद्धाः। एतानि स्थानानि नाहरगढ़स्याधस्तात्। 'वाटिकाहनूमान्' 'बाडी का बालाजी' अजमेरीगोपुराद् बहिः शाकक्षेत्रान्तरतः। तातवाटिका 'दादाबाड़ी' मोतीडूंगरीमार्गे। चन्दूवाटिका 'चन्दू का बाग' आम्बेरस्य मार्गे। अत्र हि विशालं हर्म्यं सुन्दरं कुण्डं चेति गोष्ठ्यां सङ्गीतप्रबन्धार्थं रम्यमभवत्सांप्रतं तु राजपरिकरप्रबन्धः। वर्षाकाले परितो दिगन्ते हरिते जाते जयपुरस्य चतुर्दिक्ष्वेव रम्यतमानि स्थानान्युपलभ्यन्ते। अतः केयं ते स्थलचिन्तेत्याशयः॥ १५॥

* चरणमन्दिरं गणेशगढं च *

**शैलशिखरेऽस्मिन्नीरनिर्झरनिनदधरे**

**सलिलभरेण सस्यसुषमामपेक्षेथाः**

**दंशरकवृक्षैर्भृते भ्राम्यन्भूरि शैलपथे**

**चरणचकासि हरिमन्दिरमिहेक्षेथाः।**

**दूरदूरदृश्यान्यथ पश्यन् गिरिशृङ्गगतं**

**नत्वा गणनाथमध्वखेदमप्युपेक्षेथाः**

**बान्धवगणेगस्त्वं गणेश्वरचतुर्थ्याः पर**

**गहन' गणेशगढ़' गौरवमवेक्षेथाः॥ १६॥**

दंशरकाः 'डांसर्या' इति ख्यातास्तेषां वृक्षैर्भृते। भगवच्चरणाभ्यां चकास्ति शोभते तादृशं मन्दिरं 'चरणमन्दिरम्'। इदं स्थानं 'जयगढ' दुर्गसमीपस्थमिति न सर्वदा साधारणैर्गम्यं केवलं भाद्रशुक्लपञ्चम्यां

(गणेशचतुर्थ्या द्वितीयदिने) मेलकदिने दर्शनीयम्। बान्धवगणे गच्छतीति बान्धवगणेगः तत्पुरुषे कृतीत्यलुक्। संघीभूतैरेव तादृशं स्थानं गम्यते विनोदाय सिंहादिभयापनोदाय च। गणेशगढ़वर्णनम-स्मत्पूर्वजश्रीकृष्णभट्टकविकलानिधीनां 'साहित्यवैभव'स्य वंशवीथी ५६६ पृष्ठे द्रष्टव्यम्॥ १६॥

*** लालडूंगरी ***

**पूर्वदिशि सूर्यदेवगोपुरमतीत्य ततो**
**वामभागतोऽसौ वनमार्गः पर्यवेक्ष्यताम्**
**घनतमबालुकासमुद्रमवरुह्य मनाक्**
**मध्येवनमेषा वृक्षवाटिका परीक्ष्यताम्।**
**रामगढबन्धाऽऽनीतनीरयन्त्रशालामेक्ष्य**
**गणपतिमूर्तिः सुविशालाऽसौ समीक्ष्यताम्**
**धाराधरकाले दृश्यवैभवमयीयमद्य**
**मृत्तिकामयीव लालडूँगरी निरीक्ष्यताम्॥ १७॥**

जयपुरनगरस्य पूर्वदिशि 'सूर्यपोल'गोपुरम् उल्लङ्घ्य वामभागे। समीक्ष्यतामित्यनेन अपरभागे मोतीडूंगरीस्थाने यादृशी गणपतिमूर्तिस्तादृश्येव विशाला लालडूंगरीस्थाने स्थापितेति द्वयोरालोचना सूच्यते। अद्य ग्रीष्मादिकालेषु॥ १७॥

*** गलता ***

**जयपुरनगरपूर्वगोपुरमुपेत्य पुरा-**
**शिल्पपरिपाटीकृता 'घाटी' स्यात्पुरोगता**
**मध्ये गिरिसानुगतमुन्नतमुदेति दृशोः**
**श्रीमद्भानुमन्दिरं हि यस्मै जनता नता।**
**मञ्जुना कदम्बकुण्डनिकटगतेन यथा**
**यज्ञवेदिकुण्डतटगाऽसौ सरणिर्गता**
**मालवमहीव नक्तमालवनविच्छुरिता**
**गालवमहर्षिमधुराश्रममही मता॥ १८॥**

पूर्वदिशो गोपुरम् 'सूर्यपोल'। पुराशिल्पपरिपाटी प्राचीनस्थापत्यप्रकारः। घाटी पर्वतारोहमार्गः। नक्तमालः चिरबिल्ववृक्षः॥ १८॥

सवै.-- परितो गिरिराजिरुदञ्चयते परितोषमियं मरुता चलता
नवनीपसमिद्धसुगन्धवहाऽप्यवनी बहु भाति विरूढलता।
अयि मञ्जुलनाथ विभाति मनाक् सरसी कृतसीकरशीतलता
गिरिगह्वरगोमुखतो गलता सलिलेन सुखं कुरुते गलता॥ १९ ॥

गिरिसमूहः चलता पवनेन परितोषं जनयति। विरूढाः लताः यस्यां सा। नीपः कदम्बः। कृता जलसीकरैः शीतलता यया ईदृशी सरसी (सूर्यकुण्डः)। गलता पतता सलिलेन॥ १९ ॥

* गलतामेलकः *

क.-- कोविदकमठबन्धात्सिक्तजनखण्डेऽधुना
स्वैरं सूर्यकुण्डे स्नानकौतुकमुदीक्षेथाः
नीचैर्बृहन्मन्दिरेषु भूरिभक्तवृन्दोच्चितं
दर्शनीयहिन्दोलनसंभारं निरीक्षेथाः।
कदलीकुलान्ताः किल केलिकुण्डमेतं सखे
स्वच्छसुखसलिलसमिद्धमभिवीक्षेथाः
हिन्दोलकमेलकेषु किं दोलितचित्तोऽस्ययं
गालवाश्रमेऽद्य सुखसंदोहं समीक्षेथाः॥ २० ॥

कमठबन्धः--जले कूर्दनकालिकः 'कमठा' इति ख्यातो बन्धविशेषः। सिक्ताः जन-खण्डाः यस्मिन्। कमठबन्धस्य एषैव प्रशंसा यावदुपरिभागात् कूर्द्यते तावत्पर्यन्तं जलोच्छलनं भवेत्। अत एव अहमहमिकया कूर्दनकोविदैर्घाट्या गच्छन्तो जनसमूहाः सिच्यन्ते। केलिकुण्डः 'केल का कुण्ड'। अये दोलितचित्तः इतस्ततो भ्रान्तचित्तः किम् असि। संदोहः संभारः॥२० ॥

वाणी-भारती-सरस्वतीत्याद्युपनामकानामस्मत्पूर्वजश्रीद्वारकानाथ*कवीन्द्राणां

## गालवगीतम्

* छप्पय *

''निर्यन्निर्झरनीरनिनदनृत्यन्मायूरे
क्वचन कोकिलाकण्ठकुहूकलनिःस्वनपूरे।
घनतरुलताविचित्रशिखरिसुन्दरकन्दरवति
मृदुतरशाद्वललसितमृगीमृगशावकरुचिभृति।
इति सरस्वती भणति स्फुटं गालवस्य नामाङ्किते
इह कस्य मनो नाश्रमपदे लग्नं मुक्तजनाश्रिते॥ १ ॥''

मायूरं मयूराणां समूहः। कुहू इति कलो निःस्वनपूरो यस्मिन् (आश्रमपदे) ॥ १ ॥

इह पर्वतदेशेषु वृक्षवीरुद्गुल्मेषु
स्फुटबद्धेषु सुमेषु फलेषु कलेषु दलेषु।
स्वैरं नीरनदेषु विशेषस्थलवलयेषु
स्थितिशालिषु गतिमत्सु पशुषु पक्षिषु मनुजेषु।
प्रेमप्रियाणि 'वाणी' मुखादिति वचांसि शृणु संनिधौ
श्रीरामनाम लिखितं श्रुतं सिन्धोरिव बन्धनविधौ ॥ २ ॥

यत्रोपक्रममेत्य कोकिलः कूजति चूते।
तमनु कलापिकुलं नु गायति क्ष्माभृति पूते।
परे पत्ररथगणा वाद्यझङ्कृतिमथ सुवते
गुणिनो मरुतः परं लतासु स्वस्ति ब्रुवते।
श्रीराममहारसविलसितं शिक्षन्तः किमु तत्पराः
तन्वन्ति रासमण्डलमधिस्तबकं स्तबकं मधुकराः ॥ ३ ॥

सिन्धुसेतुबन्धने पाषाणेषु यथा रामनाम लिखितं तथाऽस्मिन्स्थाने पर्वतदेशदिषु लिखितमित्याशयः॥ २ ॥ पत्ररथाः पक्षिणः। 'स्तबकेषु स्तबकेषु अधि'-अव्ययीभावः। मधुकराः कोकिलगानादिना सह रासमण्डलमिव कुर्वन्ति ॥ ३ ॥

रोषादिव मा कृथा वृथा नयनद्वयमरुणम्
तद्रूपं तव वपुर्जातमित्यूचे करुणम्।
वाचंयमता शुभा तादृशो वाचः पक्षात्
अस्मन्मतमातिष्ठ हरित्वं भविता पक्षात्।
किं कुहूकुहूकथने वरं कुरु चित्तं वैष्णवमखे
उपदिशति शुकः पिकनिकरमिह रामनाम वद हे सखे ॥४ ॥

तादृश्या वाचः पक्षात् (अपेक्षया) वाचंयमता शुभा। पक्षात् (मासार्द्धात्) ॥४ ॥

यन्दन्मकरन्दस्य बिन्दुभिश्चन्दनचर्चाम्
वृन्तकच्छपीकलितपुष्पमणिपुष्पैरर्चाम्।
निर्यन्निर्यासेन सुरभिधूपं दधुरग्रा-
च्चम्पककोरकदीपमथो फलभोगमुदग्राः।

मैलिन्दमञ्जुगुञ्जारवैः सामस्तोत्रं पर्वते
पञ्चोपचारमिव रघुपतेरुरवस्तरवः कुर्वते॥ ५॥
व्यासाश्रम इव शुकप्रचुरवचनामृतशाली
वल्मीकाश्रम इव प्राप्तकुशलवपरिपाली।
कौशिककाश्रम इव प्रणयिलक्ष्मणानुषङ्गी
वाशिष्ठाश्रम इव स्वरसशिष्टागमसङ्गी।
समरचतुराश्रमपूजाविधौ यत्र हरिः कुक्षिम्भरिः
श्रीगालवाश्रम इति मतो वरीवर्त्ति सर्वोपरि॥ ६॥

वृन्तकच्छपी, पुष्पवृक्षविशेषः। मैलिन्दैः मिलिन्द(भ्रमर)संबन्धिभिः। उरवः विशालाः तरवः ॥५॥ शुकादयः श्लिष्टाः। समाः समानतया स्थिता ये ब्रह्मचार्याद्याश्रमाः तत्कृतपूजाविधौ ॥६॥

शुकपिकचातकचटककोककलहंसचकोराः
निजनिजभावभरेण मनःकृतरामकिशोराः।
परितो हरितो मिलत्सुधारससरितो रोधे
क्रीडन्ति स्म सुखेन मग्नकरणा भृशबोधे।
किमुताऽनुरागशीला जना रासरसामृतचुलुकिनः
संततसमाधि-निर्बाधहरिचिन्तनधृततनुपुलकिनः॥ ७॥
शिखरिणि यत्र विचित्रसानुमति सरः पवित्रम्
मणिनिबद्धनिःश्रेणि सुरभि शिशिरं मधुमित्रम्।
गालवतपःप्रभावसदासमुदितपीयूषम्
पयोहारियोगीन्द्रकृष्णदासस्थितिभूषम् ।
नक्षत्रशतप्रतिफलमिलद्यस्य जलं जाने बुधाः!
सुस्नातदेवरमणीपतद्भूषणमिति सन्नो मुधा॥८॥

मनसिकृतो (ध्यातः) रामरूपःकिशोरो यैस्ते। शुकादिपक्षिणः सरितो दिशाश्चैव यत्र ब्रह्मज्ञाने मग्नकरणाः तन्मयेन्द्रियाः, तत्राश्रमपदे जना हरिस्मरणपुलकिनः स्युः किमुत किमाश्चर्यम्॥७॥

कृष्णदास स्थितिरेव भूषा यस्य तत्। नक्षत्रप्रतिबिम्बयुक्तं यस्य जलं स्नोतोत्थितदेवरमणी-पतद्भूषणयुक्तमिति सत् सत्यं, मुधा नो॥ ८॥

सुकृतसमयमधिकृत्य समागतशिष्टनृदेवम्
स्नानदानजपहोममानितश्रीपतिदेवम् ।
क्वणितरणितभणितेषु यस्य शब्दितमतिमधुरम्
नामध्वनिकलितं नु लक्ष्यते कलकलविधुरम् ।
नित्यं निसर्गनिर्गतजलं यत्र गोमुखं राजते
केनापि कृता मालेव यत्परितः पदवी भ्राजते ॥ ९ ॥

समागताः शिष्टाः नृदेवाः राजानः यस्मिंस्तत्। वाद्यादिशब्देषु सत्स्वपि यस्य गोमुखस्य शब्दितं कलकलरहितं नामध्वनियुक्तमिव लक्ष्यते। गोमुखस्य चतुर्दिक्षु मार्गः मालेव भ्राजते ॥९ ॥

गालवमन्दिरमहितमेरुवरभालवकलिता
भित्तिसूत्रसंचरज्जानपदजनमणिललिता ।
अच्छाऽतुच्छसमुच्छलत्कजलसच्छविकिरणा
प्राक्तनसुकृतविपाकजातनवगुम्फाऽऽभरणा।
केनापि निबद्धा पद्धतिर्गोमुखस्य मालेव या।
मणिमध्यनायकप्रतिकृतिः सरोवरस्थिरतिशया ॥१० ॥
मन्दिरमतिसुन्दरं यत्र मन्दरमनुकुरुते
दर्पणमसृणशिलासु रुचिः प्रतिबिम्बं कुरुते।
भित्तिषु विपिनविचित्रमहीरुहलतिकाललितम्
केकिकोककलविङ्ककुभकोकिलकुलकलितम्।
तुङ्गं विजेतुमुत्थितमेव प्रतिरवमिषतो गर्जयत्
दिवि मारुतधुतवसनाञ्चलैः कलिमागतमिवतर्जयत् ॥११ ॥

गालवमन्दिरमेव मेरुवरः मालायां सुमेरुस्तस्य भालवेन कान्तिलेशेन कलिता। जानपदा-जनपदवासिनो ये जनाः त एव मणयः तैः ललिता। उच्छलज्जलमेव मालायाः किरणाः। प्राक्तनसुकृतेन अस्या मालाया गुम्फो जातः। सरोवरस्थितिः नायकः-- मध्यमणिसदृशी। गालवमन्दिरं मालायाः सुमेरुः, सरोवरं च नीचैर्लम्बिततरलस्थानीयम्। सूत्र-मणि-किरण-सुगुम्फनादिभिश्च गोमुख्याः सविधस्थिताया उत्प्रेक्षणमित्याशयः॥ १० ॥ यस्य मन्दिरस्य कान्तिः प्रतिबिम्बम् उत्पादयति। कलिं विजेतुं तुङ्गतया उत्थितम्, अत एव गर्जत् ध्वजैस्तर्जयच्च ॥ ११ ॥

उरसि यस्य वनदाम, शिरसि शिखिपक्षापीडम्
अलिके गैरिकतिलकमीक्षते यः सव्रीडम्

मञ्जुलकर्णतटाऽवलम्बिगुञ्जासरशोभी
मकराकृतिकुण्डलविटङ्किकर्णस्थललोभी।
पीतोत्तरीयकच्छांशुकः श्रृङ्गवेणुवादनरतिः
गोपालवेषधारी सदा यत्र विहारी रघुपतिः॥१२॥

श्रीरामोपि गोपालवेषधारी सदा विहरति। एवं हरिरपि रामवेषधारी लसतीत्यग्रे सूक्तिः॥ १२॥

हेमहीररवरजटितकिरीटप्रसृमरकान्तिः
श्रुतिविटङ्किकुण्डलमरीचिभृतकुन्तलतान्तिः।
कुसुमदामवक्षा ललामकञ्चुकपरिधानः
कृपाशालिदृक्पालिकटाक्षच्छटा दधानः।
सुरतरुच्छायमणिवेदिकारत्नपीठमध्यम्भरिः।
भुवि सकलसतां निर्वाणदो धनुर्बाणहस्तो हरिः॥ १३॥

रूपजलनिधौ कोकनदप्रसरः करचरणम्
चिकुरनिकरमपि वेद्मि तत्र शैवालस्फुरणम्।
मुखमिन्दुर्नयनद्वयं नु मीनायितमस्मिन्
वचनममृतमधरो विरोचिकुरुविन्दममुष्मिन्।
तत्रैव कौस्तुभो भानुमान् किरतितरां परितः करान्
उल्लस्य तनुः कादम्बिनी वर्षति मधुरिमसीकरान्॥ १४॥

कुण्डलकिरणैः भृता केशान्तं तान्तिर्विस्तारो यस्य सः। दृक्पाल्याः कटाक्ष-च्छटाः॥१३॥ भगवतो लावण्यरूपे जलधौ करचरणं कोकनद (रक्तकमल) विस्तारः, चिकुरादयः शैवालादयः इति॥ १४॥

व्यतिभाते सीतावरस्य चरणे नखललिते
स्थिते वैरमवधूय किं नु पद्मे शशिकलिते।
पुनरुद्भवति स्मरे विभौ सेवितुमभिजातम्
किं च तूणयुगलं नु पञ्चपञ्चेषुविभातम्।
अथ सरस्वती भणति प्रियं भक्तभवाम्बुधितारणे
स्थाने सदैव जानेतरां नौके सुखविस्तारणे॥१५॥

नखललितयोः चरणयोः चन्द्रसहितयोः पद्मयोः संदेहः। अत एव वैरत्यागोत्प्रेक्षणम्। एवमेव चरणयोः तूणयुगलसंदेहः। पञ्चाङ्गुलयः पञ्चबाणस्थानीयाः। किञ्च भवाम्बुधितारणे इमे चरणे नौके जानामि इति स्थाने॥ १५॥

*** नया घाट ***

**पर्यन्ते पलाशि–वरवल्ली–वितानयुता**

**मध्ये मञ्जुकञ्जा जललहरी प्रकाशते**

**फुल्लल्लोलपाटलाप्रसूनमकरन्दवहाः**

**सन्ततममन्दगन्धवाहाः समुपासते।**

**मञ्जुनाथ गायत्कञ्जनयनाविलासवशो**

**निबिडनिकुञ्जमसौ लोको न जिहासते**

**कान्ताजनविभ्रमविराजदुदकान्ता सेयं**

**नौविनोदकान्ता 'नवघट्ट'भूर्विभासते॥ २१॥**

पलाशिनो वृक्षाः। पाटलम् 'गुलाब'। निबिडनिकुञ्जं न जिहासते न हातुमिच्छति, 'ओहाङ्'। ध्वनिना समागमलालसापि सूच्यते। विराजन् उदकान्तः (जलतटम्) यस्याम्। नौविनोदेन कान्ता मनोहारिणी, सति राजपरिचये नौकारोहणसौकर्यं सूच्यते॥ २१॥

*** जलयन्त्राणि ***

**पर्यन्ते बहुलतमबालुकासनाथमपि**

**चित्रं वीरुदन्ते जलं स्रवति समन्ततः**

**श्रावणसुमासि वनसोमवारदिव्यदिने**

**दीव्यति हि दोलारूढयुवति समन्ततः।**

**मञ्जुनाथ नीचैरवरुह्य पश्य यन्त्रगृहं**

**विस्मयावहं यद् धृतिं धुवति समन्ततः**

**अनलबलेन चलन्नलजलनालमिदं**

**'नव्यघाट'मक्ष्णोर्मुदं सुवति समन्ततः॥ २२॥**

बालुकामये स्थानेपि जलस्रवणं चित्रम्। वीरुदन्ते लतानामन्तिके। श्रावणस्य शोभने मासि, सुवृष्टियुक्तं इत्यर्थः। दोलारूढाः युवतयो यस्मिन् तत्। यन्त्रगृहम्। 'Water Works' धृतिं धुवति

कम्पयति। यन्त्रप्रभावं दृष्ट्वा जनश्चित्रितो भवेदित्यर्थः। अग्निबलेन चलन्तः नलानां 'पाइप' जलनालाः यस्मिन्॥ २२॥

*** झाड़खण्डः रावलजलबन्धश्च ***

**मार्गे मञ्जुमीलन्मधुमालतीसुगन्धयुत-**
**रावलरचितजलबन्धमभिवीक्षेथाः**
**निर्यज्जलकोलाहलकौतुकमुदीक्ष्य ततः**
**समयं समीक्ष्य नवनौविनोदमीयेथाः।**
**मञ्जुनाथ पश्चिमेन सेनासंनिवेशतटे**
**नीरनिकटेऽमुं नवप्राकारं प्रविन्देथाः**
**खेलत्खण्डपरशुपरीष्टये प्रयातं दिवः**
**खण्डमिव मोदाज्झाड़खण्डमभिवन्देथाः॥ २३॥**

मीलन्त्यः उन्मीलन्त्यः (मालत्यः)। समयानुसारम् (यावान् समयो भवेत्) नौचालनविनोदम् ईयेथाः प्राप्नुयाः, ईङ् गतौ। क्रीडतः खण्डपरशोः शिवस्य परीष्टये प्रतीक्षायै आगतं दिवः खण्डमिव स्थितम्॥ २३॥

*** पुराना घाट ***

**परितो हरितशस्यशालिशैलमाला भाति**
**तदधो विशालाऽऽक्रीडसरणिर्विभासते**
**भ्राम्यन्ती कुसुमवाटिकासु पादपानां तले**
**शोभायामतुल्या जलकुल्या भूरि भ्राजते।**
**मञ्जुनाथ चित्रं गिरेरङ्के चन्द्रशाला भान्ति**
**कर्कशशिलानामङ्के बालुका प्रकाशते**
**विभ्रमविहारभूमिरिव भोः प्रकृतिदेव्या**
**भाग्यैः सुखसेव्या घाटवसुधा विराजते॥ २४॥**

आक्रीड़ानाम् उद्यानानां सरणिः पङ्क्तिः। यदा हि 'झालाना' जलबन्धः पूरितोऽभूत्तस्मिन् समये प्राचीनघट्टे आरामेषु वृक्षाणां तले भ्राम्यन्ती जलकुल्या भूरि शोभते स्म। पर्वतस्य अङ्के उत्सङ्गभागे शिरोगृहाः, शिलानां समीपे च बालुका प्राप्यते इत्येव चित्रम्। यः किल पर्वतमयः प्रदेशस्तत्र स्वर्णसदृशी कोमलबालुका दुर्लभा, यश्च बालुकाप्रदेशस्तत्र पाषाणाः अप्राप्याः। इह तु द्विविधमपि सौष्ठवं दृश्यते, अत एव प्रकृतिदेव्याः विलाससूचिका विहारभूमिः॥ २४॥

आरम्भादन्तपर्यन्तो घाटसंनिवेशः

विशदशिलाऽवबद्धमुल्लङ्घ्याऽवरोहपथं
श्रेष्ठिनिर्मितोपवने मोदमधिविन्दामः
पश्चाच्चूडसिंह-व्यास-रम्यारामगुद्वीक्ष्याल-
माज्ञया निरीक्ष्यान् भूभृदारामान्निरिन्दामः।
मञ्जुनाथ पौरन्दरमारामं निरीक्ष्य ततो
जैनचैत्यशिल्पं वीक्ष्य चेतसाऽतिचन्दामः
घाटगोपुरस्य पुरः प्राचीरं प्रलङ्घ्य परं
प्राचीनप्राञ्चले प्राचीनघाटमभिनन्दामः॥ २५॥

अवरोहपथः 'गूणी'। श्रेष्ठिनिर्मितं माणिकचन्द्रस्योपवनम्। राजाज्ञया दर्शनीयाः विद्याधर-रुपनिवासाद्याः राज्ञः आरामः। निर् इन्द्रामः 'इदि परमैश्वर्ये' द्रष्टुं समर्था भवाम इति यावत्। जैनचैत्यं 'नसिया'। चन्दामः प्रसीदामः, चदि आह्लादे। प्राचीरं कोट्टः। प्राचीप्राञ्चले पूर्वदिग्भागे॥२५॥

फुल्लकुसुमासु लसदारामावलीषु यत्र
रामा विहरन्ति गीतगोष्ठ्यां मोदमागता
भूपतिनिवासोचितसौध-सुखसज्जायुता
यद्रूपनिवासोद्यानमाला महदायता।
मञ्जुनाथ निर्यज्जलवेणीविरहेण सेय-
मद्याऽऽरामश्रेणी हन्त तान्तिं समुपागता
नन्दनवनीव मोदजननी विबुधहृदा-
मन्यथा बभूव सेयमवनी सतां मता॥ २६॥

मोदमागताः भूपतिनिवासेत्यत्र मध्ये विसर्गलोपो बोद्धव्यः। जलवेणी कुल्या। तान्तिं शोभाकार्श्यम्। अन्यथा जलवेणीसत्तायाम्। नन्दनवनी विबुधानां देवानां मोदजननी, इयमवनिः देवानां पण्डितानां च॥२६॥

* घाट के बालाजी *

वारिदधरेषु वल्गुवर्षावासरेषु सखे
बालुकोत्करेषु हारि हारित्वं प्रतीयताम्
मञ्जुनाथ घाटस्योत्तरेण वनवीथिपथे
दर्शनमनोरथेन यात्रा प्रविधीयताम्॥

पर्वतसमीपे पुरः प्राकारेण गूढतरे

तुङ्गमन्दिरेऽस्मिन् साधुसोपाने ह्यभीयताम्

नूनं नेत्रराजीवेन वीक्ष्या वनराजी तर्हि

घाटोद्यानराजी बत बालाजी समीयताम्॥ २७॥

बालुकोत्करेषु बालुकास्तूपेषु 'टीबा'। नेत्रकमलेन यदि वनपंक्तिर्दर्शनीया तर्हि घाटोद्याने राजते तच्छीलः णिनिः, 'बालाजी' हनुमान् समीयताम् उपगम्यताम्॥ २७॥

* प्रभातपुरीनिर्झरः *

हरितमनोज्ञशस्यशाली गिरिरस्ति पुरः

पुष्पितकदम्बभूरुहालीयं विमृश्यताम्

उच्चैः शैलमौलितः प्रपातिगिरिनिर्झरोऽसौ

तत्स्रुतजलाशयोऽसौ स्नानार्थं निविश्यताम्।

मञ्जुनाथ धारावर्षिधाराधरकालेऽधुना

किमसि विषण्णमना जोषं नोपविश्यताम्

अम्बरनगरमार्गमध्यादुपयातपथा

सुप्रभातमायेच्चेत्प्रभातपुरी दृश्यताम्॥ २८॥

तस्मात् गिरिनिर्झरात्स्रुतस्य जलस्य आशयः ह्रदः। असौ निर्झरः असौ जलाशय इति प्रत्यक्षमङ्गुल्या निर्देशः। किमिति खिन्नचित्तः असि ? उत्तिष्ठ, जोषं तूष्णीं न स्थीयताम्। अम्बरमार्गात् उपयातः पन्थाः यस्याः सा। यदि सुप्रभातम् आयेत् आगच्छेत् तर्हि। स्थानस्या-लौकिकसौन्दर्यं व्यज्यते॥ २८॥

* आम्बेर *

अम्बरनगरपरिदर्शनमभीप्ससि चे-

च्चेतो ध्रुवगोपुरमतीत्य बहिर्गम्यताम्

मध्ये मानसागरमवेक्ष्य जलसौधान्यपि

कालमहादेव-गोविन्दोपवने रम्यताम्।

मञ्जुनाथ घाटीमधिरुह्य नूतनेन पथा

देलरामशिल्पपरिपाटीयं निशाम्यताम्

अम्बरनरेश-राजसौधसुषमामयीह

विपुलविभामयी शिलामयी प्रणम्यताम्॥ २९॥

हे चेतः! ध्रुवगोपुरम् 'ध्रुव पोल'। जलसौधानि 'जलमहल'। देलरामशिल्पम् 'दलारामस्य' आरामे। निशाम्यताम् दृश्यताम्। राजसौधस्य शोभासर्वस्वभूता शिलामयी भगवती ॥२९॥

**ऐतिहासिकवृत्तम्**-- शिलामयी मानसिंहमहाराजेन उडीसादेशादानीता। इयं हि गायत्र्याः अनेकपुरश्चरणानां केवलं सिद्धशिलैवासीत् पूर्वम्। सेयं प्रतापादित्यस्य इष्टदेवताऽभूत्। पश्चाच्च कायस्थराजं केदारं विजित्य आम्बेरनगरमानीय राजसौधेषु प्रतिष्ठापिता। महाराजमानसिंहस्योपरि भगवत्याः पूर्णानुग्रहोऽभूत्, अत एव तदादेशानुसारमस्यां शिलायां महिषमर्दिन्या मूर्तिराम्बेरनगरे उत्कीर्णाऽभवत्। एषैव सिद्धमूर्तिराम्बेरराजभवेनषु प्रतिष्ठितास्ति, यस्या दर्शनार्थं वङ्गादि-दूरदूरदेशतस्तद्भक्ताः समायान्ति। एतस्याः पूजकाः वङ्गदेशादानीताः सन्ति ये साम्प्रतं जयपुरीयाचाराः समभवन्। शिलामय्याः कृते प्रत्यहं जयपुरराजप्रबन्धतश्छागबलिर्दीयते, नवरात्रेषु विशेषतः। प्रत्यक्षप्रभावाया अस्या मूर्तेर्विषये बह्वयः किंवदन्त्यः प्रसिद्धाः सन्ति। एतस्याः स्तुतिपद्यं 'साहित्यवैभवस्य' छन्दोवीथी ३७३ पृष्ठे द्रष्टव्यम्॥ २९॥

*** आम्बेरराजभवनानि ***

**कारुकार्यरम्यं राजसभागृहमेक्ष्य ततः**
**प्रथमं गणेशगुण्यगोपुरमुदञ्चयेः**
**जगज्जयसौभाग्यादिमन्दिराण्यवेक्ष्य ततो**
**निजबहुरूपतामथैकतो निदर्शयेः।**
**अन्तःपुरदेशे चन्द्रशालाश्चारुचित्रशाला**
**मज्जनगृहेषु जलजालान्यभिलोकयेः**
**स्वर्गोपमालाभोचितामुन्नतगवाक्षमाला-**
**मम्बरनरेशहर्म्यमालामवलोकयेः॥ ३०॥**

राजसभागृहम् 'दीवाने आम', एतद्धि देहलीसम्राजो राजसौधानुकारेण निरमीयतेति प्रसिद्धिः। गणेशगोपुरम् 'गणेशपोल' एतद्धि जयपुरनगरप्रतिष्ठापकेन जयसिंहमहाराजेन निर्मापितम्। जगन्मन्दिरम्, जयमन्दिरम्, सौभाग्यमन्दिरम् एतदादिनामकानि। एकतः काचमणिमण्डिते मन्दिरे च निजस्य बहुरूपतां पश्येः, तत्र हि काचान्येवंरूपेण भित्तौ जटितानि सन्ति येष्वेकस्यैव पदार्थस्य युगपद्बहवः प्रतिबिम्बा दृश्यन्ते। जलजालानि जलवेण्या आगमनस्य तथा जालमार्गा निर्मिताः सन्ति येभ्यो निष्पतज्जलं प्रसृतपटाकारम्'चादर' अद्भुतं विलोक्यते। किञ्च राजमहिषीणां पदप्रक्षालनकौतुकाय भुवि मर्मरपाषाणस्य सुन्दरनालिकास्तथा निर्मिताः सन्ति यासु श्यामपाषाणस्य लहररिचना जलप्रवहणकाले अद्भुतैवालोक्यते। उन्नता उत्कृष्टा गवाक्षमाला 'झरोखे' यस्यां सा। विशालविशालेषु वातायनेषु एकस्मिन्नेवातिव्यायते बहुमूल्यमर्मरपाषाणे तथा जालशिल्पं दर्शितमस्ति यद्धि शिल्पमार्मिकानपि चित्रयते॥ ३०॥

* जयगढ़ *

दूरादवलोकय पताकामिवाऽऽलोकगृहं

द्वारं वैरिलोकदुर्निरीक्ष्यं सुसमीक्ष्यताम्

निशितशतघ्नीशतस्थानान्यवगच्छ पुरः

प्राकारे नियच्छ दृशं शिल्पं सुपरीक्ष्यताम्।

लक्षावधिसैन्यजलसौकर्याय सन् योऽगोपि

रत्नाकरसागरोऽपि भाग्ये सति वीक्ष्यताम्

दुर्दान्तैर्द्विषद्भिरपि दुर्गं दृढ-दीर्घतया

ध्वस्तवैरिवर्गं जयदुर्गं प्रसमीक्ष्यताम्॥ ३१ ॥

आलोकगृहम्--एतद्धि दुर्गस्याग्रतस्तुङ्गे स्थाने तथोन्नतं निर्मितमस्ति यथा अस्मिन् प्रकाशे प्रज्वालिते पर्वतस्याधस्ताद्दूरदूरपर्यन्तं प्रकाशो भवेद्येन समवेतस्य सैन्यस्यान्धकारक्लेशो न स्यात्। वैरिलोकदुर्निरीक्ष्यम्, एतद्द्वारपर्यन्तं वैरिणामागमनमेव दुःसंभवं मध्य एव विजितानां तेषां पलायनात्। किञ्च अस्य दुर्गस्य प्राचीरे द्वारं तथा शिल्पेन निर्मितं यथा पर्वतोपरि स्थितस्याप्यस्य सर्वः प्राकारो दूरतो दृश्यते, न तु द्वारम्। शतघ्नी'तोभः'। दुर्गे यदि सैन्यसंग्रह आवश्यको भवेत्तर्हि तस्य जलसौकर्याय 'रत्नाकर सागर' नामको जलबन्धो निर्मितोस्ति, यो हि विशेषावसरं विना न केनचिद् द्रष्टुं शक्यते। एष सागरो गुरोः रत्नाकरपौण्डरीकस्य नाम्ना जयसिंहमहाराजेन प्रसेधितः। दुर्गं दुःखेन गन्तुं शक्यम्। एतद्धि दुर्गं प्राचीनेन मानसिंहमहाराजेन, 'मिर्जाराजा' जयसिंहदेवेन चाधिकाशंतो निर्मापितम्। जयपुरनगरप्रतिष्ठापकेन सवाईजयसिंह-महाराजेन चेदं सर्वाङ्गतया पूर्णीकृतम्। अस्य निर्माणारम्भः षोडशशताब्द्याम् पूर्तिश्च अष्टादशशताब्द्यामासीत्॥ ३१ ॥

* आम्बेरस्य कतिचित्स्थानानां क्रमशो दर्शनम् *

दादुद्वारमालोक्यैव न्यायालयपार्श्वात्तत-

'श्छीलाबाय'वाराह्यादिदेशः स्पर्शनीयस्ते

जगति शिरोमणिमवेक्ष्य महन्मन्दिरं तत्

श्रीमन्नरसिंहोऽप्यम्बिकेशो मर्शनीयस्ते।

मञ्जुनाथ नृत्यन्नरमुण्डे स्नानकालावधि

पन्नामियाकुण्डे धर्मखेदः कर्शनीयस्ते

धर्मेपि हि भूरिवहत्पाथोरवरम्यस्ततो

गीतगुणगाथो हर्षनाथो दर्शनीयस्ते॥ ३२ ॥

न्यायालयः 'निज़ामत तहसील'। 'छीलाबाय' चातुर्मास्ये पूरितातिस्वच्छजला। गभीरतमा वापिका। 'वाराही देवी', अत्र हि शिशुमातरः शिशूनां शीतलाद्यारोग्यार्थं यात्रां कुर्वन्ति। आदिपदेन 'बटुकभैरव-दांदू का भैरवादयो बुध्यन्ताम्'। शिल्पेन जगति शिरोमणिस्थानीयं 'जगतशिरोमणि' इति ख्यातं विष्णुमन्दिरम्। इदं हि मानसिंहमहाराजस्य ज्येष्ठपुत्रश्रीजगत्सिंहस्य स्मरणार्थं वि. सं. १६७७ तमे तन्मातुरादेशान्निरमीयत। नरसिंहमन्दिरं प्राचीनराजहर्म्याणां सविधे वर्तते, अत्र प्रातरष्टवादनपर्यन्तमेव देव-दर्शनं कर्तुं शक्यम्। अम्बिकेशः अतिप्रत्नः शिवः। इदं मन्दिरं भूमेरधस्ताद्वर्तते, चातुर्मास्ये जलपूरितं भवति। स्नानकालपर्यन्तं मेलकावसरेषु नृत्यन्ति तरतां जनानां मुण्डानि यस्मिन् सः। तरणसमये उपरितः पश्यद्भिर्मस्तक-मात्रमेवावलोक्यते। पाथोरवरम्यः जलकलकलमनोहरः। हर्षनाथभैरवमन्दिरे 'रत्नाकरसागरस्य' कुल्या सर्वदा प्रवहति॥ ३२॥

*** भूतेश्वरः ***

**हर्षनाथभैरवविभूतिमनुभूय तत-**
**स्तूत्तरेण पर्वतचरेण पथाऽभीयेथाः**
**शैलशिखरस्थगोप्यगोपुरमतीत्य ततो**
**हरितघनेषु दूरविपिनेषु लीयेथाः।**
**हरितवनान्ते साधु सोपानं समधिरुह्य**
**सानन्दं शिवेन शान्तशमलो विधीयेथाः**
**पूर्वं पुरुहूतेन प्रभूते वारि वृष्टे ततो**
**जीमूतेऽथ भूते भूरि भूतेश्वरमीयेथाः॥ ३३॥**

हर्षनाथस्योत्तरतः। अभीयेथाः अभिगच्छ। मार्गे शैलशिखरोपरि राजप्रबन्धात् गोप्यं गोपुरं लभ्यते। शान्तशमलः शान्तपापः। पूर्वम् इन्द्रेण प्रचुरे वारि जले वृष्टे, तदनन्तरमपि जीमूते मेघे भूते जाते सति। प्रचुरवारिवर्षया स्थाने स्थाने जलनिर्झराश्च वनहरितता च, मेघाडम्बरेण आतपरक्षा प्राकृतशोभा च। एतादृशमेव स्थानमिदम्। अत्र हि राजानुमतिपत्रं विना न गन्तुं शक्यम्॥ ३३॥

**प्रसङ्गेन जयपुरराज्यान्तर्गतानामन्यस्थानानामपि वर्णनम्**

**जमुआ रामगढ़ ( बन्ध )**

**दूरदूरवर्तिशैलमालाप्रतिरोधनेन**
**विस्तृतिं विशालां वीक्ष्य विस्मितो विधीयेथाः**
**वर्षासमये तु घनघोरवारिवर्षामाप्य**
**पयसः प्रकर्षात्पूरवृद्धिं प्रसमीक्षेथाः।**
**तटनिकटे च जगदम्बामवलोक्य, निशि**
**केसरिकदम्बानां निनादेनापचीयेथाः**

तिसृषु दिशाषु शैलसन्धावम्बुसंधानेन

रामगढ़जातजलबन्धान्मुदमीयेथाः ॥ ३४ ॥

जलबन्धस्य विस्तृतिम्। तिसृषु दिक्षु पर्वताः, एकतस्तु जयपुरराज्यनिर्मापिता वेला, इत्यनुमीयतां महाविस्तारः। घना निबिडा घोरा च वर्षा। सिंहसमूहानां नादेन अपचीयेथाः भयात् दुर्बलो भवेः। शैलसंधौ पर्वतानां मध्यावकाशे, जलप्रतिरोधनेन। 'कर्नल जैकब' निर्मापितः सोऽयं जलबन्धस्तथा कौशलेन रचितो यथा वारिवृद्धौ उपरितो जलनिर्गमेऽपि नास्य भङ्गभयम्। अयं तथा विशालो यथाऽस्य भङ्गे सति भरतपुरराज्यस्याऽलवरस्य च विनाशो भवेदत एव एतत्कृते जयपुरस्य दायित्वम्। अस्य कुल्याभिर्बहुक्रोशपर्यन्तं कृषिसेकः समभूत्। सांप्रतं तु विद्युद्यन्त्रद्वारा जयपुरनगरे जलनलप्रबन्धः कृतोस्ति। अस्मिन् हि पञ्चाशल्लक्षेभ्योप्यधिक-मुद्राणां व्ययः समभूत्। लार्ड इरविनमहोदयेनाऽ-स्योद्घाटनम-क्रियत ॥३४ ॥

### * सवाई माधवपुरम् *

गोपुरसमीपे तुङ्गमन्दिरमुपेत्य ततो

भैरवादिदर्शनतो भरितो भवेः सुखे

जयनगरानुकारिणीषु राजरथ्यास्वहो

चिनुहि चतष्पटीक्रमं च बत संमुखे।

नानाफलपुष्पशाखिशालिन्यामुपत्यकायां

सावधानमेया न चेदेया मृगराण्मुखे

धावद्धूमधोरणीप्रधानस्थितिधामधरे

माधवपुरेऽस्मिन्नचिरेण विचरेः सखे ॥ ३५ ॥

पूर्वगोपुरस्य समीप एव हस्तिद्वयाधिष्ठिततोरणमतितुङ्गं भैरवमन्दिरं तत्समीपे च गोपालादिमन्दिर-मस्ति। अत्र हि राजपथानां निर्माणं जयपुरवत् वर्तते, तथैव च 'चौपड'क्रमः। उपत्यकायां पर्वतासन्नभूम्यां सावधानम् एयाः (आ इयाः आगच्छेः), न चेत् मृगाधिपतिमुखे एयाः। संभावनायां लिङ्। धावन्त्याः धूमशकट्याः प्रधानं यत्स्थितिस्थानम् (जंक्शन् स्टेशन) तद्धारके। इदं नगरं सवाईजयसिंहमहाराजस्य पुत्रेण श्रीमाधवसिंहदेवेनावासितम्। महाराष्ट्रान् विजित्य पूर्वं रणस्तम्भवरदुर्गमधिकृतं तत्समीपे च-१८१२ तमे विक्रमवर्षे इदं नगरं प्रतिष्ठापितम् ॥३५ ॥

### * रणथंभौरदुर्गम् *

छप्पय-- माधवपुरपश्चिममहिभृति मानसमुपढौकय

रणस्तम्भवरदुर्गसर्गमद्भुतमवलोकय।

यत्र तड़ागद्वितयतटे पशुपतिरधिराजति

तत्सविधे हम्मीरवीरमस्तकमुद्भ्राजति।

**अतिनिबिडशैलमालावृते गणपतिमानम दिनमुखे।**
**हम्मीरवीरलीलासखे दुर्गेस्मिन् विहरेः सखे॥ ३६॥**

पश्चिमपर्वते मानसम् उपढौकय प्रेरय। दुर्गसृष्टौ अद्भुतता सेयं यन्महाविशालमपि तदिदं दुर्गं समीपागमनं विना दूरतो न कैश्चिद् दृश्यम्। दुर्गस्थस्तु पुरुषो बहुक्रोशान्तरितमपि पश्यति। दुर्गस्य परितः पर्वतवेष्टनानि सन्ति। तड़ागद्वितयम् 'जौंरा, भौंरा'। दिनमुखे प्रातः। पश्चाद् गणपतिदर्शनसौकर्यं न भवेत्।

**ऐतिहासिकवृत्तम्**-- हम्मीरः सम्राट्पृथ्वीराजवंशजः। अस्य पिता जयत्रसिंहोऽभूत्। पृथ्वीराजे दिवंगते तत्पुत्रो गोविन्दो दिल्ली-अजमेरादीनां राजाऽभवत्। एष हि पृथ्वीराजभ्रात्रा राज्यादपवाहितः सन् रणस्तम्भवरदुर्गे न्यवात्सीत्। अस्यैव वंशे जयत्रसिंह आसीत् यस्य पुत्रो महावीरो हम्मीरोऽभूत्। अनेन भूयांसि युद्धानि विजितानि। अस्य प्रशंसामयानि प्रसिद्धानि बहूनि काव्यानि। अस्य दुर्गस्योपरि जलालुद्दीनस्य अलाउद्दीनस्य च भयंकराक्रमणान्यभूवन्। अन्ते १३५८ तमे विक्रमवर्षे हम्मीरो वीरलीलां प्राप, रणस्तम्भवरदुर्गे च खिलजीसम्राजोधिकारः समभूत्। अस्मिन् दुर्गे कियत्कालपर्यन्तं उदयपुरराजस्य बुंदीराजस्य चाप्यधिकारः समभूत्। किन्तु, अकबरसम्राजः समये तेन विजित्य तदिदं दिल्लीसाम्राज्ये संनिवेशितम्। पुरश्च औरङ्गजेबोत्तरं यदा दिल्लीसाम्राज्यं शिथिलमभूत्तदा दुर्गोपरि महाराष्ट्राणामाक्रमणान्यभवन्। एतस्मिन् समये शिथिलेन दिल्लीसाम्राज्येन महाराष्ट्रानपसारयितुं जयपुरराज आज्ञप्तः। सप्तानां सेनापतीनामाधिपत्ये जयपुरस्य सैन्यं दुर्गाभिमुखं प्रतस्थे। भयङ्करयुद्धोत्तरं महाराष्ट्रान् पराजित्य जयपुरराज्येन स्वाधिकारः कृतः। आसीत्तस्मिन् समये जयसिंहमहाराजाधिराजस्य द्वितीयः पुत्रः श्रीमाधवसिंहदेवो जयपुरराज्यस्य स्वामी॥ ३६॥

## शेखावाटी

**खेलच्चण्डवेगमरुल्लहरीतरङ्गायिता**
**स्वर्णरुचिरङ्गा बालुकाऽसौ परिमृश्यताम्**
**वारिणे तपस्यन्निव कानने निरुद्धकरो**
**मार्गे चित्ररूपो दुर्गकूपोयं विमृश्यताम्।**
**मञ्जुनाथ नानाविधनामभिर्विशाला मनाक्**
**श्रेष्ठिस्थापिताऽसौ पाठशालाततिरिष्यताम्**
**श्रेष्ठिगणलक्ष्मीलवलेखालालितापि मिलन्-**
**मरुरुचिरेखा शेखावाटी परिदृश्यताम्॥ ३७॥**

चण्डवेगो यो मरुत् (पवनः) तल्लहरीभिः तरङ्गायिता तरङ्गाकारयुक्ता, सुवर्णकान्ति-सदृशरङ्गा बालुका। ग्राममार्गेषु-दुर्गसदृशाः अत्युन्नतवेदिकः, चतुर्दिक्षु रचितचतुर्गुल्मः अत एव विचित्राकारः, चतुर्हस्तानुत्थाप्य वारिणे जलाय (जलप्राप्त्यर्थम्) तपश्चर्यां कुर्वन्निव कूपः। उन्नतवेदिकायां दूरतो

दृश्याश्चत्वार: स्तम्भास्तथा प्रतीयन्ते यथा हस्तानुत्थाप्य अभिसूर्यं स्थित: कूपो दुर्लभजलप्राप्त्यर्थं तपश्चर्यां करोतीत्याशय:। साधारणेन एक-मात्रेणाध्यापकेनाश्रितापि 'वेद-वेदाङ्ग-पाठशाला' इत्यादिभिराडम्बरयुक्तैर्नामभिर्विशाला। कलिकत्तादिप्रदेशेषु धनमुपार्जितवत: श्रेष्ठिगणस्य लक्ष्मीलवलेखया (धनलेशसरण्या) लालिता शोभितापि वास्तवे मिलन्ती मरुदेशस्य रुचिरेखा (कान्तिलेखा) यस्याम्। श्रेष्ठिनां धनवैभवतो मण्डितापि प्रकृतिनियमानुसारं शुष्कायां मरुभूम्यामियमधिविष्टेत्याशय:॥ ३७॥

**दो.-- कियदिव वीरा सा धरा यद्वणिजोऽप्यधिशान्ति।**
**दूरादपि भूपरिसरान्नीत्वा श्रियमायान्ति॥ ३८॥**

अन्यत्र देशेषु क्षत्रियादयो वीरा: दूरदेशेभ्यो युद्धादिद्वारा श्रियं नीत्वा (विजित्य) आयान्ति। अत्र तु हीनबलत्वेन ख्याता वणिज: अपि, अधिशान्ति युद्धादिकं विना शान्त्यैव, वर्मादिदूरदूरभूप्रदेशात् श्रियं गृहीत्वा आयान्ति। अत एव इयं भूमि: कियद्वीरा स्यादित्यनुमीयताम्॥३८॥

* * *

# अभिनन्दनवीथी

## चित्रचत्वरः

सो.-- चारु चिकीर्षसि 'चित्र-चत्वर' चयनं चित्त! चेत्।
चरणं चित्रचरित्र - चित्रणचतुरं चिन्तये:॥ १॥

विचित्रस्य चित्रणे (प्रत्यक्षप्रकटने) चतुरम्॥ १॥

### * शिबिकाबन्धः *

भास्वद्वंशावतंसङ्गुणगणगणनाऽतीतमातङ्कतङ्कं
सापत्सापत्नपङ्क्तौ सकलकविकलाविश्रमास्थानभूमिम्।
सक्षेमं पालयन्तं विपुलजयपुरीमुल्लसद्भूरिभोगां
साधून् संमोदयन्तं हयवदनहरिर्मानसिंहं विपुष्यात्॥ २॥

गुणगण.-- गुणगणस्य गणनम् अतीतम्, अगणनीयगुणमित्यर्थः। सापत्.-- सापदाम् आपत्तियुक्तानां सापत्नानां (शत्रूणाम्, सपत्न एव सापत्नः, प्रज्ञाद्यण्) पङ्क्तौ आतङ्कौत्तङ्कनकरम्, आतङ्कदायकमिति यावत्॥ २॥

### * चक्रबन्धः *

यद्राज्याऽवनिमावसन् कलयते संमोदसौख्यं जनः
यश्चायं गुणपुञ्जमञ्जुलतमः संमोदते निर्भरम्।
स श्रीमाननवद्यनीतिललितैः प्रीणात्यलं सुव्रतै-
स्तैस्तैरायतगेयकीर्तिसरसैर्नः सत्पुरं चेष्टितैः॥ ३॥

स श्रीमान् (मानसिंहदेवः) अनवद्यया निर्दोषया नीत्या ललितैः, सुश्लाघ्येन व्रतेन नियमेन युक्तैः आयतया (सर्वत्र विस्तृतया) गेयया च कीर्त्या सरसैः, तैस्तैः चेष्टितैः (सत्कार्यैः) नः अस्माकं जयपुरं प्रसादयति। पूर्वार्द्धं स्पष्टम्॥ ३॥

### * अष्टकोणबन्धः *

लोकानां भव्यदानाय यज्ञानां प्रसवाय च।
समिद्धधनपूर्णश्रीर्भासते मानभूपतिः॥ ४॥

**अपि भूमौ च नाके च यः सदा गणनाऽतिगः।**

**विभवायतधर्मिष्ठः स नः पूरयते श्रियम्॥ ५॥**

समिद्ध-- समिद्धेन दीप्तिशालिना धनेन पूर्णा शोभा यस्य सः॥ ४॥

गणनातिगः लोकगणनामतिक्रान्तः, अनुपम इति यावत्। विभवा.-- विभवेन आयतः महान्, धर्मिष्ठश्च। सः (माननरेन्द्रः) नः श्रियं पूरयति॥ ५॥

*** छत्रबन्धः ***

**मानसिंहमहीपालः माननीयगुणोज्ज्वलः।**

**वाहयन्धरणीभारं वामगुण्यो जयेच्चिरम्॥ ६॥**

धरणीभरं वाहयन् परिचालयन्। वामगुण्यः वामानां विरुद्धानामपि कृते प्रशस्तगुणयुक्तः॥६॥

*** चामरबन्धः ***

**यः प्रजारञ्जनोन्माननवकीर्तिसुधालयः।**

**नभस्ततमोमोकोन्नतचन्दिरसद्यशाः ॥७॥**

**न कोन्मो मोतततभः, नतदृक्कविवाग्वशा।**

**तस्य नीतिलसच्छास्तितन्त्रस्य मतिरस्ति या॥८॥**

**तद्वैभवभरा शास्ति तन्त्रस्य मतिरस्तिया॥**

यः (भूपतिः) प्रजारञ्जकः (अस्ति), तथा उत्कृष्टमानायाः नवकीर्तिरूपायाः सुधायाः आलयः (अस्ति) तथा नभसि (आकाशे) ततः विस्तृतः, तमोमोके अन्धकारविनाशे उन्नतश्च, यश्चन्दिरः (चन्द्रः) तद्वत् सत् यशो यस्य सः॥ ७॥

किञ्च-- (सः) कोन्मः न? कवत् विरञ्चिवत् उत्कृष्टा मा लक्ष्मीर्यस्य तादृशः नास्ति? अपि त्ववश्यमस्तीति काक्वा अर्थः। किञ्च-- मया लक्ष्म्या ऊता (मोता), तता (विस्तृता) च भा (कान्तिः) यस्य तादृशः सोस्ति। नतदृशां कवीनां वाक् तस्य (राज्ञः) वशा। तस्य राज्ञो महिमानमालक्ष्य कवयो नतदृशः सन्तः प्रभावातिशयेन स्ववाचं तद्वशां कुर्वन्तीत्याशयः। नीतिलसच्छासनतन्त्रस्य तस्य (राज्ञः) या तन्त्रस्य (प्रजानियमनस्य) मतिः तद्वैभवयुक्ता, अस्तिया ('अस्ति' परलोकादिकमिति विश्वासं यातीति) आस्तिकविश्वासयुक्ता मतिः शास्त्रमतिरेव शास्ति प्रजाः पालयति। राष्ट्रशासनबुद्धैर्वैभवं सहकारिरूपेण सह आदाय तस्य धार्मिकमतिरेव प्रजाः शास्तीत्यर्थः। तस्य शासने राष्ट्रशासनबुद्ध्या आस्तिकतामतिर्न अभिभूता, प्रत्युत आस्तिकतामतिरेव शासने प्रधानम्। राष्ट्रशासनबुद्धिस्तु उपकरणभूता इत्याशयः ॥ ८॥

*** खड्गबन्धः ***

**सारः सर्वक्षितीशानां सम्पत्सौभाग्यभाजनम्।**

**नन्दयेद्वसुधामेतां मानसिंहनृपोऽञ्जसा॥ ९॥**

**साऽऽटोपाऽरिकुलध्वंसी दुर्द्धर्षः क्षात्रतेजसा।**

**साडम्बराऽसिविलसद्दोर्दण्डो नृपसिन्धुरः॥ १०॥**

साटोपं सदर्पं यदरिकुलं तस्य नाशकः। सोपकरणः साटोपो वा यः असिः, तेन विलसन् भुजदण्डो यस्य सः। नृपसिन्धुरो राजश्रेष्ठः॥ ९-१०॥

*** धनुर्बन्धः ***

**दाक्षिण्यपुण्यविभवो विद्वत्कुमुदचन्द्रमाः।**

**माराऽभिरामो जयतान्मानसिंहनृपः सदा॥११॥**

माराभि.-- कामवद् अभिरामः। चन्द्रमाः माराभिराम इत्यत्र विसर्गलोपो बोध्यः॥११॥

*** शरबन्धः ***

**कच्छवाहकुलोत्तंसो दिगन्तविततप्रभः।**

**तेजसा सादिताऽरातिः सुचिरं रञ्जयत्विलाम्॥ १२॥**

तेजोबलेनैव सादिताः नाशिताः अरातयः (शत्रवः) येन सः। इलां पृथिवीम्॥१२॥

*** शक्तिबन्धः ***

**जयपत्तनमूर्द्धन्य धन्य दत्ताऽऽश्रिताऽभय!।**

**यज भक्ताऽऽर्तिहं शौरिममरेन्द्रसमप्रभ।।१३॥**

भक्तार्तिहं शौरिम् (विष्णुम्) यज पूजय॥ १३॥

*** गोमूत्रिकाबन्धः ***

**राजन् जयपुरीनाथ प्रजासापेक्षकार्यकृत्।**

**राकाब्जविपुलोन्नाहा प्रशंसा रक्षणेऽर्यमन्!॥ १४॥**

प्रजासापे.- प्रजानाम् अपेक्षासहितानि (प्रजानुमतानि) कार्याणि करोति सः। रक्षणे अर्यमन् सूर्यस्य! रक्षाकार्ये ते प्रशंसा (कीर्त्तिः) राकाचन्द्रवत् विपुलोत्कर्षा॥१४॥

*** हारबन्धः ***

**सदाशिवस्स्वयं धत्ते यदभेदमभागतः।**

**सदा शिवमयं द्राक् ते प्रदत्तादभ्रभागतः॥ १५॥**

स्वयं सदाशिवः (शम्भुः) अभागतः भागं विना निःशेषमिति यावत्, यस्य (तव, मानभूपस्य) अभेदं धत्ते धारयति। लोकपूज्यतायां शिवादभिन्नस्त्वमित्यर्थः। अभ्रभा-गतः कण्ठे मेघकान्तियुक्तः अयम् (शिवः) सदा सर्वदा झटिति ते तुभ्यं शिवं मङ्गलं प्रदत्तात् देयात्॥ १५॥

*** अष्टदलकमलबन्धः ***

**समस्तसामन्तसमर्हणीयः**
**असीमशौर्योत्तरनीतिशाली।**
**कवीन्द्रसंगीतयशःप्रशस्तिः**
**प्रमोदतां संततमेष देवः॥ १६॥**

असीमशौर्यम् उत्तरं प्रधानं यस्यामेवंविध-नीतिशाली॥ १६॥

*** 'लाकेट'बन्धः ***

**सौभाग्यभृतराज्यश्रीः श्रीमानमरराडिव।**
**बन्धः सुमनसां नूनं नन्दतान्मानराडसौ॥ १७॥**

सौभाग्येन युता राज्यलक्ष्मीर्यस्य सः। अमरराट् (इन्द्रः) सुमनसां देवानां वन्द्यः, अयं तु सुमनसां साधुचेतसां वन्द्यः। अत एव इन्द्रसदृशः असौ मानराजो नन्दतात्। चित्रकाव्ये विसर्गादीनां भेदो न परिगण्यत इति राज्यश्रीः श्रीमानिति विसर्गाभावः समाधेयः॥१७॥

*** श्रीफलबन्धः ***

**राकेशसुन्दरमुखः सुधोपमवचश्चयः।**
**यः सताममृतं सूते यद्गुणज्ञा वसुन्धरा॥ १८॥**

चन्द्रवत्सुन्दरमुखः, सुधोपमो वचनसमूहो यस्य सः। यः सज्जनानाम् अक्षय्यं सुखमुत्पादयति। स जयपुरेन्द्रो जयत्विति प्रकरणाल्लभ्यमेव॥ १८॥

* * *

# भाषासमकम्

## 'हिन्दी'

[अर्थात् हिन्दीभाषामयमपि पद्यं संस्कृतबद्धं भवति]

**दो.-- हे शङ्कर आनन्द कर सदा सु मङ्गल चार।**
**मानसिंह भूपाल के अव कर जय जय कार॥ १९ ॥**

हिन्दीभाषायां स्पष्ट एवार्थः। संस्कृते तु आनन्दं करोति तत्सम्बुद्धौ हे आनन्दकारक! सदा सुङ्गलं चारयति प्रजासु विस्तारयति तादृश!। अवकर! अवौ (रक्षकौ) करौ यस्य तत्सम्बुद्धौ, स्वहस्ताभ्यां लोकस्य रक्षाकारकेत्यर्थः। हे शङ्कर! मानसिंहभूपालके जयकार त्वं जय। मानसिंहभूपतौ विजयं सृजन्नेव त्वं सर्वोत्कर्षेण वर्तस्वेत्यर्थः॥ १९ ॥

**जय जयपुरधरणीधनी दारद भय कर दूर।**
**सदा छत्रछाया तले प्रजा सु सुख भर पूर॥२०॥**

संस्कृतम्-- दारदभयकरदूर! विषभयकारकान् दूरयति तत्सम्बुद्धौ, प्रजाऽनिष्ट-कारकेभ्यो रक्षकेत्यर्थः। 'दारदो वत्सनाभश्चे'त्यमरः। निजच्छत्रच्छायायास्तले प्रजासु सुखभरं पूरयति तत्सम्बुद्धौ। जयपुरधरण्याः स्वामी त्वं जय॥ २० ॥

**जयपुरधरणी धरण हित, जय जय मान महेन्द्र।**
**सकल नरनि चित कामा पूरण कर मनुजेन्द्र!॥ २१ ॥**

संस्कृतम्-- जयपुरधरण्या धरणे हितकारक ! सकलनरनिचितकामनापूरणकर! सकलनरैः निचितानां कामनानां पूरणकारक! मनुजेन्द्र हे मानमहेन्द्र! त्वं जय जय॥२१॥

## * जयपुरीयहिन्दी *

**विघ्न हरण मङ्गल करण, नमो नमो गणराज।**
**अव वाञ्छा पूरण करो, देवो बुद्धि दराज॥ २२ ॥**

संस्कृतम्-- (बुद्धिदानां राजा तत्सम्बुद्धौ, बुद्धिदायकेषु देवेषु श्रेष्ठतमेत्यर्थः) वाञ्छापूरणकारकः देवस्त्वम् अव, श्रीमन्तं मानसिंहदेवं रक्षेत्यर्थः। अन्यत्स्पष्टमेव॥२२॥

## * भाषाचित्रम् *

[अग्रतः पृष्ठतो वा पठनेन यत्र भाषान्तरवाक्यं निःसरति।]

### * विवाहकालिकं हिन्दीचित्रम् *

**अग्रतः**

**श्रीमद्भानुवंशवैजयन्ती भासतेऽसौ पुरो**
**मानमुन्नयन्ती कच्छवाहानां कुलक्रमे**
**नव्यसुमहार्हवरवसनविभासिनोऽमी**
**भूपा भूषयन्ति सभामग्र्या मानसंभ्रमे।**
**पण्डिताः प्रगल्भन्ते कवित्वे मञ्जुनाथगिरा**
**कीर्तिस्ते दिगन्ते भातु भूयो जगत्संक्रमे**
**जयपुरराजमान मानमहाराजमणे!**
**यशसा विराजसे विवाहोत्सवसंगमे॥ २३॥**

कुलक्रमे वंशपरम्परायाम् कच्छवाहानां तद्वंशीयराजपुत्राणां संमानम् उन्नयन्ती उच्चैः कुर्वती असौ भानुवंशस्य वैजयन्ती [पञ्चरङ्गध्वजः] भासते। मानसंभ्रमे मानमर्यादायाम्, अग्र्याः श्रेष्ठाः भूपाः सभां भूषयन्ति। जगत्संक्रमणे [कल्पान्तेऽपि] ते कीर्तिर्भातु। अत्र हि अग्रिमाक्षराणां पठनेन 'श्रीमानभूप की जय' इति वाक्यं सिध्यति॥२३॥

## * उर्दूचित्रम् *

[अग्रतः पृष्ठतश्चापि पठनेन यत्र उर्दूपद्यखण्डो निःसरति]

**चैत्रे मासि मोदन्ते मृगाङ्कं वीक्ष्य यद्वन्नरा**
**नन्दति तथैव त्वयि वीर! सुप्रजा प्रजा**
**जैत्रीयं विभाति भूमिभर्त्री सुर-धेनु-विप्र-**
**पुञ्जपरिपालनोपकर्त्री भवतो भुजा।**
**रञ्जयसे मर्त्यान्मञ्जुनाथ निजनीतिक्रमे**
**मेदिनीयमामोदं दधाति त्वयि नीरुजा**
**रज्ज्यल्लोकलोचनचकोरकृते चन्द्रबिम्ब**
**हे नृप तवावलम्बमर्हति महाऽब्धिजा॥ २४॥**

सुप्रजा सुसन्ततियुक्ता प्रजा। देव-गो-ब्राह्मणसमूहस्य रक्षणे उपकर्त्री, भूमिभारधारिणी ते जैत्री भुजा भाति । भुजः स्त्रीलिङ्गेऽपि -'अथो भुजा। द्वयोर्बाहौ करे॥' इति मेदिनी। रज्यतां लोकलोचन-चकोराणां कृते चन्द्रबिम्बसदृश! हे नृप! महाब्धिजा लक्ष्मीः, तवाऽवलम्बनस्य योग्या। त्वं तस्यै अवलम्बं ददासीति योग्यमेवेत्याशयः। अत्र हि अग्राऽक्षराणां अन्त्यवर्णानां च योगेन 'चैन जैपुरमें रहै राजा प्रजा में जा ब जा ('स्थाने-स्थाने') इति उर्दूपद्यखण्डो निःसरति॥ २४॥

*** सांकेतिकभाषाचित्रम् ***

**दो.-- जन्तयपुन्तुररन्तसारन्तमणे दन्तक्ष।**
**अन्तयि चिन्तिरमिन्तिमान्मन्तनुजान्रन्तक्ष॥ २५॥**

लोकाः मध्ये, 'न्त', 'द्र' इत्यादिवर्णान्संमिश्र्य सांकेतिकभाषां सुहृद्भिर्व्यवहरन्ति। तदनुसारम्-- 'जयपुररसारमणे दक्ष! अयि चिरमिमान्मनुजान् रक्षेति' वाक्यं संपद्यते।।२५॥

*** बहुभाषामिश्रणचित्रम् ***

['जौहरीबाजार'स्थले नानादेशीयजनाः दशहराद्वितीयदिनभावि' सलक' मेलकं विलोकयन्तः संलपन्ति।]

**क.-- 'ओह लुक दैट एलिफ़ेन्ट इज़ कमिङ्ग हियर'**
**'ज़र्क बर्क़ अस्प मानिन्दे परिन्द ये तमाम'**
**'एइ दिके एसो हेरो की बहार पोशाकेर'**
**'किंमत कुबेरनी करी छै जरा जूओ आम।'**
**'वाह वा सरस सहनाई ये सुनो तो सही'**
**'कांई खयी जाय यां चिरागच्यां को भार्‍यो काम'**
**'महाराजां चे भाऊ बन्धु आले हे पहा मित्र'**
**'मानमहीपाले मङ्क्षु दृष्टिर्दीयतांतमाम्'॥२६॥**

अष्टभाषामयेऽस्मिन् तत्तद्देशीयानां स्वभावरुचिः सूचितेति सूक्ष्ममालोचनीयम्। अंग्रेजमहोदयो ब्रूते-- Oh look ! that Elephant is coming here' अयि पश्य, स हस्ती इत एवाऽऽगच्छन्नस्ति!' पञ्चरङ्गध्वजयुतं हस्तिनं विलोकयतो द्वीपान्तरवासिनस्तद्दर्शनात्कौतुकं प्रतीयते। उर्दूभाषामुल्लपन्'पर्शियन' पण्डितः कश्चिन्माहम्मद आह-- 'जर्क बर्क.' 'सुवर्णमयाः सर्वेऽपीमे अश्वाः गमने पक्षिसदृशाः।' अनेन हि धनचाकचक्यलोलुपता अश्वगुणवेदिता च व्यज्यते। वाङ्गमहाशयो भाषते-- 'एइ दिके.' इत एहि, पश्य,वस्त्राणां कीदृशी शोभा। एतेन वङ्गीयानां स्वाभाविकी वस्त्र' पारिपाट्य' रुचिः परिचीयते। धनवैभवं विलोकयन्विस्मितो गुर्जरदेशीयः कथयति-- किंमत कुबेरनी.- 'कुबेरस्यापि मूल्यं कृतम्, इतस्तु किञ्चित् पश्य!'। अनेन गुर्जराणां धनव्यापाररुचिः सूच्यते। ब्रजवासी जल्पति-- 'वाह वा सरस.'-- 'साधु साधु! सरसं सहनायीवाद्यं तु शृणु तावत्। अनेन हि सर्वत्रापि रसिकतां प्रकाशयतो व्रजवासिनः सहजसुभगैरक्षरैः कवितानुकूलं हृदयं परिज्ञायते। जयपुरीयः संलपति 'कांई खई जाय' 'किंवा कथ्यताम्, एतेषां दीपाधारवाहिनां विषमं कार्यम्'। पूर्वं हि राजपरिचारका द्विशृङ्गकान्दीपाधारान्

('दुसंखा') आदाय अग्रतश्चलन्ति स्म, येषामुभयतो बद्धा लेखा रुचिरा प्रतीयते स्म। कदाचिदतिनिकटमागतानां दर्शकानामपसारणकार्यमप्यनेन अग्न्याधारेण विधीयते स्म। तादृशमेव व्यतिकरं प्रत्यक्षमात्मोपर्यनुभवतो जयपुरीयनागरिकस्य सेयमुक्तिरिति प्रायो बहुत्र व्यग्रता, व्याकुलता वाभिव्यज्यते। महाराष्ट्रमहोदयो व्याहरति 'महाराजाचे.' नरेन्द्रस्य भ्रातृबान्धवाः आगताः, पश्य मित्र!, अनेन स्वाभाविकवाक्येन मरहट्टबन्धूनां प्रेमप्रवणता प्रतीयते। 'मानमहीपाले.'-- अनेन तु सर्वमवमुच्य तत्त्वोपरि दृष्टिः संस्कृतभाषाप्रणयिनः प्रकटीभवतीत्यलं विज्ञेषु ॥ २६ ॥

*** भाषाद्वयचित्रम् ***

**कीर्तिपटलस्य यस्य सा काचन लक्ष्मीर्भाति**
**राकापतिरीक्ष्यते यदग्रे पुरुपिण्याकी**
**तादृगसौ गीयतेऽद्य राजसम्पदायां यतो**
**यस्य तुलनायां नरैर्नीयते न वै नाकी।**
**मञ्जुनाथ यस्य यशो गीतिमुपवर्णयितुं**
**त्वमपि विभासि देशभाषासूक्तिसम्पाकी**
**"तेज तुङ्ग ताजा बीर विक्रमके बाजा बजैं**
**राजा हू नजर करैं मानमहाराजा की ।।" २७॥**

पुरुपिण्याकी अत्यन्तं खलयुक्तः। निःसार इत्यर्थः ।'तिलकल्के च पिण्याकः' अमरः। राजवैभवे असौ (मानमहाराजः) तादृग्गीयते यस्य तुलनायां नाकी (इन्द्रः) अपि न नीयते। हे मञ्जुनाथ ! यस्य यशो वर्णयितुं त्वमपि देशभाषासूक्तिषु सम्पाकी परिपाकयुक्तः(अर्थात् प्रौढः) भासि। का सा देशभाषा, तामाह--"तेज तुङ्ग." तेजोयुक्तानि तारस्वराणि वा, उन्नतानि नवीनानि यस्य नरेशस्य वीरपराक्रमस्य वाद्यानि ध्वनन्ति। सीकरखेतरी प्रभृतीनां राजानोऽपि यस्य महाराजस्य राजसभायामुपायनमुपहरन्ति ॥२७ ॥

*** वर्णपरिवर्तनचित्रम् ***

[अर्थात् एकस्य वर्णस्य स्थाने वर्णान्तरस्थापने यत्रार्थान्तरचमत्कारः संपद्यते।]

**लास्यलीलाभाजनं भृतश्रीर्बलकर्षी सदा**
**नूनं नव्यवाहननिविष्टोऽसौ सुखायते।**
**मीननयनोऽथ मन्यमानो वरणीयधनो**
**वाहाऽऽकुलगेहो मतस्नेहो जनैः ख्यायते।**
**मञ्जुनाथ तावद्वर्ण्यतेऽसौ तव वैरिगणो**
**यावन्मुखभागे हेतिसङ्गो न विभाव्यते**

**श्रीमन्मानमेदिनीश! पश्यामोऽर्थविकलमिमं**
**सकलपदादौ हेतियोगो यदि जायते ॥२८॥**

हे श्रीमन्मानमेदिनीश! मुखभागे संमुखतः यावत्तव हेतीनां शस्त्राणां सङ्गः न दृश्यते, तावत्तव वैरिगणः--'लास्यलीलाभाजनम्' (नृत्यादिदर्शनपात्रम्) भृतश्रीः, (संभृता शोभा लक्ष्मीर्वा यस्य), बलकर्षी (सैन्यं कर्षति सह नयति तच्छीलः), नव्येषु अश्व-रथादिवाहनेषु निविष्टः, सुखकारको भवति। तथा मीननयनः, लोकैः मन्यमानः, वरणीयं गुणिजनद्वारा प्रापणीयं धनं यस्य सः, वाहैः संकुलं गेहं यस्य, मतस्नेहः (जनैः आदृतः स्नेहो यस्य सः) च ख्यायते।' यदि तु सकलपदादौ सकलानां शत्रूणां पदादौ चरणाद्यङ्गेषु, हेतियोगः शस्त्रसम्बन्धः जायते, तर्हि तव इमम् वैरिगणम् अर्थेन पुरुषार्थेन विकलं रहितं पश्यामः। तव शस्त्रस्पर्शे जात एव सर्वेपि वैरिणो निरर्थकाः (मृतप्रायाः) भवन्तीत्याशयः। वास्तवे तु सकलानां कृतसमासानां पदानाम् आदौ 'ह' इतिवर्णस्य सङ्गो यावन्न दृश्यते तावदेव 'लास्यलीलाभाजनम्' इत्यादिरूपेण तव वैरिगणः वर्ण्यते। यदि तु सकलसमस्तपदानाम् आदौ 'ह' इतिवर्णस्य योगः जायते तर्हि पूर्वेण वाच्यार्थेन विकलं पश्यामः। अर्थात् आदौ 'ह' कारपरिवर्तनेन अर्थान्तरमेव संपद्यते यथा-- 'हास्यलीलाभाजनम् जनानाम् (उपहासपात्रम्), हृतश्रीः, हलकर्षी (राज्यच्युतत्वात् हलकर्षणेन जीवनशीलः), अत एव असौ हव्यवाहननिविष्ट एव अग्निसात्कृत एव सुखं लभते, पूर्वमनुभूतराज्यसुखत्वादस्य मरण एव सुखं भवेदित्याशयः। हीननयनः, हन्यमानः, वनं गतः वनेचरादिद्वारा हरणीयधनः, हाहाकाराऽऽकुलगेहः, अत एव जनैः हतस्नेहः असौ ख्यायते ॥२८॥

*** मकारादिचित्रम् ***

**मत्तारातिकुलस्य मानहरणो मित्रार्तिचिन्ताहरो**
**मीलन्मानिजनाय मुक्तविभवो मूर्द्धाभिषिक्ताऽग्रणीः।**
**मेधावन्मनुजेषु मैत्ररुचिरो मोघेतरश्रीसखो**
**मौर्वीभृन्महिपेषु मंजुमहिमोन्मः स्यात्स मानप्रभुः ॥२९॥**

मत्तस्य वैरिकुलस्य मानहारकः, मित्राणाम् आर्तिचिन्ताया हारकः, मीलते दैन्यं गच्छते मानिजनाय दत्तवैभवः, बुद्धिमत्पुरुषेषु मैत्रेण (मित्रभावेन) रुचिरः, अमोघायाः श्रियाः सखा, मौर्वीभृत्सु (धनुर्धारकेषु) राजसु मञ्जुमहिम्ना श्रेष्ठमाहात्म्येन उन्मः उत्कृष्टलक्ष्मीकः सः (प्रसिद्धः) मानसिंहप्रभुः स्यात्। प्रार्थनायां लिङ् ॥२९॥

*** बहिर्लापिका ***

[प्रश्नस्योत्तरं पद्यतो बहिर्भूतमेवेत्यर्थः]

**दो.-- संबोधय संमानमथ कः स्वामी विपिनेषु।**
**जयपुरमण्डलमविति कस्तिलकः क्षितिपालेषु॥ ३०॥**

संमानं संबोधय, अर्थात् मानस्य किं सम्बोधनम्? उत्तरम् 'मान'! । विपिनेषु कः स्वामी? उत्तरम्-- 'सिंहः'। क्षितिपालेषु तिलकायितः कः जयपुरमण्डलम् अवति? संमिलितमुत्तरम्-- 'मानसिंहः'॥ ३०॥

### * अन्तर्लापिका *

[प्रश्नस्योत्तरं पद्यान्तर्गतम्]

**सिंहमाह मुग्धा नु किम्, मनुजैः क्व रतिरभाजि।**
**क्व मुदमयति जयपुरधरा, 'मानसिंहनरराजि'॥३१॥**

मुग्धा नायिका हस्तादिषु स्पृशन्तं सिंहम् किम् आह? उत्तरम्-- 'मा' 'न' सिंह! (हे सिंह! मा स्पृश, न खेदयेत्यादि)। प्रजाजनैः क्व प्रीतिः अभाजि(अकारि? उत्तरम्-'नरराजि') ॥३१॥

### * द्वादशराशिचित्रम् *

**मेषयुद्धमङ्गणेषु, भूरिभारवाही वृषो,**
**मिथुनं तवैव, रथं कर्कोऽञ्चति सोत्सवम्**
**सिंहस्यापि विक्रमं विहंसि, पुरे कन्याः शतं**
**न्यायतुला द्वारे, याति वृश्चिकः पराभवम्।**
**किं बहुना हस्ते धनुर्मकरोस्ति कुण्डलेषु**
**कुम्भो जलवाही, मीनमीक्षे तव दृक्स्तवं**
**स्फीतयशोराशिसुप्रकाशिगुणवश्यतया**
**भाषितमिदं ते राशिवलयेन वैभवम्॥३२॥**

तव अङ्गनेषु 'आतिश प्रभृति-पशुयुद्धक्रीडाक्षेत्रेषु मेषाणां युद्धम्' (भाति)। मिथुनं तवैव, त्वमेव श्रीश्रीमत्या महाराज्ञ्याः सहकारेण मिथुनीभूतोऽसीत्यर्थः। तव रथं कर्कः (श्वेतोश्वः) वहति। 'पृष्ठ्यः स्थौरी सितः कर्कः' अमरः। मृगयाक्रीडायां सिंहस्यापि पराक्रमं पराकरोषि। राशिचक्रे एकैव कन्या (राशिः), भवतः पुरे शतं कन्य इत्याशयः। भवतो द्वारे न्यायस्य तुला, भवतः शासने विवदमानानां जनानां सुसमीक्षितो न्यायो भवतीत्याशयः। वृश्चिकः (तत्सदृशो दुष्टः) तिरस्कारं गच्छति। मीनं तव दृशोः स्तुतिकारकं वीक्षे। स्तौतीति स्तवः, दृशोः स्तवः दृक्स्तवः, पचाद्यच्। विशदेन यशोराशिना सुप्रकाशिनो ये गुणाः तद्वशीभूततया, राशिवलयेन एवं ते प्रभुत्वं सूचितम्, अर्थात् राशिचक्रमपि तवानुगामि सदनुवर्तत इत्याशयः। क्रमशो मेषवृषादिराशयः सूचिता इति रत्नावली॥३२॥

### * षड्ऋतवः *

**हेमन्तागमोऽस्ति मदमत्तमल्लिकाभरेषु**
**क्षेमं तावदस्तं कीर्तिशिशिरेऽरिकञ्जानाम्**
**सूरिसहकारकुले वीक्ष्यते वसन्तोदयो**
**दृश्यते दुरन्तो ग्रीष्मगरिमाऽङ्गगुञ्जानाम्।**
**मञ्जुनाथ वैरिवधूवीक्षणेषु वर्षाऽऽगमो**
**लसति सहर्षा शरत्कारुकाशकुञ्जानां**

**सपदि समस्तानृतूनेवमिह तूल्लिखामि**

**मध्येऽहं महीन्द्रमानसिंहयशःपुञ्जानाम् ॥३३॥**

मदोन्मत्ता जना एव मल्लिकावृक्षसमूहाः तेषु तव यशःपुञ्जाः हेमन्तर्तुविकाससदृशाः। हेमन्ते यथा मल्लिका म्लायन्ति तथा तव यशः श्रुत्वा मदमत्ता भयेन स्वाविनयं त्यजन्तीत्याशयः। कीर्तिरूपे शिशिरर्तौ वैरिरूप-कमलानां क्षेमम् अस्तम्। शिशिरर्तौ कमलानीव, तव कीर्त्या अरयः प्राप्तपराभवाः क्लेशं लभन्त इत्याशयः। अज्ञरूपाणां गुञ्जावृक्षाणां दुरन्तो ग्रीष्ममहिमा दृश्यते। ग्रीष्मे यथा गुञ्जाः शुष्यन्ति तथा मूढास्तिरस्क्रियन्ते। वैरिवधूनेत्रेषु प्रावृडागमः, दयितविरहाकुलास्ताः सर्वदा रुदन्तीयर्थः। कारवः कृतिशीलाः शिल्पिनस्तद्रूपाणां काशगुल्मानां शरत्, भवतः सकाशात्प्राप्तपारितोषिकाः कर्मचतुराः प्रफुल्लन्तीत्यर्थः। इह तु--एवं यशःपुञ्जमध्ये षडपि ऋतून्समर्थयामीत्याशयः॥ ३३॥

*** द्वादशमासाः ***

**चैत्ररथचारावमी आरामे विभान्ति द्रुमा**

**वैशाखाऽवनम्रा अपि ज्येष्ठा गुणं जानताम्**

**आषाढोपपन्ना मुनयोऽपि यशःश्रावणाय**

**भाद्रपदे भान्तो यान्ति चाश्विनोपमानताम्।**

**कार्तिकसमस्य ते भयेन मार्गमीयुश्चलाः**

**पौषकमलाकरा इवाऽगुः खला म्लानतां**

**माघे भानुभास इव मन्दाः संयदन्ते द्विषो**

**वीक्षन्तेऽनिशं ते फुल्लफाल्गुनसमानताम्॥ ३४॥**

वै (निश्चयेन) शाखावनम्रा अपि गुणाभिज्ञलोकानां कृते ज्येष्ठाः (प्रशस्ताः) अमी द्रुमाः, चैत्ररथवत् कुबेरारामवत् चारौ सुन्दरे तवाऽऽरामे भान्ति। पलाशदण्डेन युक्ताः मुनयोऽपि, भद्राणामिदं भाद्रम्, भद्रलोकसंबन्धिनि पदे (सिंहासन इत्यर्थः) भान्तः सन्तः प्रख्यातस्य तव यशसः श्रावणाय शुभ्रवस्त्रावृतत्वात् आश्विनसमानतां यान्ति। श्वेतवसनधारिणो मुनयोऽपि त्वामागत्य तव प्रशस्तिं गृणन्तीत्याशयः। चपला राजानः गुहसमानवीरस्य तव भयेन मार्गं सन्मार्गम् ईयुः अनुसस्रुः। पौषमासे कमलषण्डा इव खला म्लानताम् अगुः प्रापुः। माघमासे या भानोः भासः(द्युतयः) तथा मन्दीभूताः वैरिणः, संयदन्ते (समरान्ते) नवपराक्रमस्य फाल्गुनस्य अर्जुनस्य समानतां ते वीक्षन्ते। सदा युद्धे त्वामर्जुनवत्पराक्रमिणं वैरिणो जानन्तीत्याशयः॥३४॥

*** सप्त वाराः ***

**श्रीमानयमादित्यो विभाति तव वंशधरो**

**नित्योदितसोमसोदरास्ते कीर्तयोऽञ्चन्ते**

**मङ्गलमनोज्ञास्तव सर्वविधयोऽमी बुधा-**

**स्तुलितबृहस्पतयो नित्यमुपतिष्ठन्ते।**

**मञ्जुनाथ कविमण्डिता ते सभाभूमिर्भाति**
**शनिवदशनिहता: शत्रवोऽद्य वेपन्ते**
**अन्योन्यं विभज्यमान-सेवाऽवसरास्त्वाममी**
**सप्ताऽपि च वासरा: सरागमभिषेवन्ते ॥३५ ॥**

अयम् आदित्य: तव वंशप्रवर्तक:। नित्योदितसोमस्य(चन्द्रस्य)सोदरा: समानास्ते कीर्तय: अञ्चन्ते परित: प्रसरन्ति। प्रसद्धिश्चन्द्र: क्षयमपि गच्छति, परं नित्याभ्युदय-शालिनश्चन्द्रस्य समानास्त्वत्कीर्तय इत्याशय:। तव सर्वविधय: (सर्वकार्याणि) मङ्गलेन अभ्युदयेन मनोज्ञा:, तव सर्वकार्येषु स्वत एव मङ्गलं भवतीत्यर्थ:। बृहस्पतिसमाना: अमी पण्डितास्त्वां नित्यं संगच्छन्ते। यथा शनिग्रहेण हतास्तथा अशनिनापि(इन्द्रवज्रेणापि) आहतास्ते शत्रवो भयात्कम्पन्ते। एवं परस्परं त्वत्सेवावसरं विभज्य, आदित्यसोमाद्या: सप्तापि वासरास्त्वां सेवन्ते। कवि: शुक्रोपि ॥३५ ॥

*** श्लोक: ***

**आदित्यस्तव कीर्त्यतां कुलगुरु:, सोमोपमानं यशो**
**भूमौ भातु, सदैव मङ्गलमयी मूर्तिस्तवाऽऽलोक्यताम्।**
**स्तौतु त्वां बुधमण्डली, गुरुजनस्त्वामाशिषा मण्डयेत्**
**श्रीमन्मानवशक्र! शुक्रमपि ते शत्रौ शनिर्जायताम्॥३६ ॥**

ते शुक्रं शौर्यम्, शत्रौ शनि: (शनिवद् भयङ्करम्) भवतु ॥३६ ॥

*** अलङ्कारा: ***

**उपमाविचित्रचारुचूडामणिचित्रा, श्लेष-**
**कुण्डलविचित्रा, हेतुहारमियमीयते**
**ललितललन्तिका प्रतीपपत्रपाश्यासुखा**
**रूपककेयूरमल्पमूर्मिकाऽप्युदीयते।**
**काव्यलिङ्गकङ्कणनिरुक्तियुक्तिकाञ्चीयुता**
**सारहंसको विनोक्तिनूपुरोऽपि नीयते**
**दीव्यदलङ्कारैर्भूरिझङ्कारितदेहलता**
**सेयं सूक्तिसुन्दरी त्वदङ्काऽऽगममीहते ॥३७ ॥**

उपमाऽलङ्कारविचित्राऽलङ्कारावेव चारुचूडामणिस्थानीयौ ताभ्यां चित्रा आश्चर्य-कारिणी। इयं (सूक्तिसुन्दरी) हेत्वलङ्काररूपं हारमीयते प्राप्नोति। प्रतीपालङ्कार एव पत्रपाश्या (ललाटभूषणम्) तया सुखकारिणी। रूपकरूपं केयूरम्, अल्पालंकार एव ऊर्मिका (अङ्गुलीयकम्) उदीयते। काव्यलिङ्गं कङ्कण:, निरुक्तियुक्त्यलङ्कारौ काञ्ची एताभ्यां युता। सारालङ्कारो हंसक: पादकटक:। दीव्यद्भिरेभिलङ्कारै:

झाङ्कारयुक्ता देहलता यस्याः सा इयं सूक्तिसुन्दरी भवदङ्काऽऽश्रयं वाञ्छति। कविताऽधुना भवतः अङ्कागताऽस्ति, इदानीं तत्सभाजनं त्वदधीनमिति सूच्येते ॥३७॥

*** श्लोकः ***

**दृष्टान्तस्त्वमिलाभृतां परिकरस्ते प्रत्यनीकाऽपहः**
**सारो वाचि, विकस्वरास्तव गुणाः, कस्ते प्रतीपो भवेत्।**
**उल्लासो मनसि, प्रहर्षणगुणाद्वक्रोक्तिरस्तं गता**
**नानाऽलङ्कृतिसार भास्करकुलाऽलङ्कार जीव्याश्चिरम्॥ ३८ ॥**

त्वम् इलाभृतां (राज्ञाम्) दृष्टान्तभूतः। ते परिकरः (परिजनः) शत्रुनाशकः। प्रहर्षणगुणात् सदाप्रसन्नतारूपाद् गुणात्, वक्रभाषणं त्वयि नास्त्येव। नानाविधभूषणानां सारभूत! (अर्थात् भूषणनामपि भूषक)। पक्षे दृष्टान्तादयोलङ्काराः सूच्यन्त एवेति मुद्रा ॥३८॥

*** छन्दांसि ***

**श्रीस्ते पञ्चचामरमरुद्भिर्मदलेखाऽऽवहा**
**लक्ष्मीरतिलेखा तव हस्ते लोकनीयेयम्**
**पृथ्वी त्वपराजिता जयाय ते रथोद्धताऽद्य**
**चित्रं स्वागताय संप्रहर्षिणी त्वदीयेयम्।**
**आर्याणां मनोरमा नरेन्द्र गुणगीतिरहो**
**चित्रा वैरिलोकेष्विन्द्रवज्रायिता जातेयं**
**वंशस्थाऽङ्कशालिनी सुवृत्तपरिपालिनी ते**
**कीर्तिर्जयमालिनी मनःसु माननीयेयम्॥। ३९ ।।**

तव श्रीः(लक्ष्मीः शोभा वा) पञ्च-चामराणां पवनैः, मदचिह्नधारिणी। त्वं चामरपवनैः प्रमदितचित्तो भासीत्याशयः। तव हस्ते राजलक्ष्म्याः रतेः प्रीतेः लेखा(रेखा) दर्शनीया, तव हस्ते तथा सौभाग्यरेखास्ति यथा-- राजलक्ष्मीस्त्वां प्रतीत्येव सदानुसरति। तव जयाय(विजययात्रायै) रथद्वारा उद्घृष्टा, अपराजिता अन्येन राज्ञा न विजिता, त्वदीया इयं पृथिवी, तव स्वागतविधानार्थं प्रहर्षयुक्तास्तीति चित्रम्। हे नरेन्द्र! तव गुणगीतिः आर्यजनानां मनोरञ्जिकाऽपि वैरिषु इन्द्रवज्रसदृशी पीडाकारिणी जाता इति इयं गुणगीतिर्विचित्राऽस्ति। अत एव वंशस्थेन अङ्केन (चिह्नेन पञ्चरङ्गध्वजादिना) शोभमाना सद्वृत्तपालिका विजयमालाधारिणी ते कीर्तिः सज्जनानां मनसि संमाननीया। अत्र हि क्रमशः श्री-पञ्चचामर-मदलेखा-लक्ष्मी-रतिलेखा-पृथ्वी-अपराजिता-जयकरी-रथोद्धता-चित्र-स्वागता-प्रहर्षिणी-आर्या-मनोरमा-नरेन्द्र-गीति-चित्रा-इन्द्रवज्रा-वंशस्थ-शालिनी-कीर्ति-मालिनी छन्दांसि नामतः सूचितानि भवन्ति। बहूनि वृत्तरत्नाकरे, बहूनि च छन्दःप्रभाकरे (हिन्दीग्रन्थे) द्रष्टव्यानि ॥३९॥

* श्लोकः *

मन्दाक्रान्तामव तव यशःशालिनीं वीर पृथ्वी-
मार्योन्नेयां प्रथयतु भवान् भानुवंशस्थगीतिम्।
विद्युन्मालाललितभवने श्रीर्जयस्रग्धरा स्ता-
त्कामक्रीडा तव रिपुगणेष्विन्द्रवज्रायिताऽस्तु।।४०॥

हे वीर! साम्प्रतं मन्दजनैराक्रान्ताम् तव यशःशोभमानाम् इमां पृथ्वीम् (जयपुरवसुन्धराम्) अव मन्दान् बहिनिःसार्य रक्ष! भानुवंशस्थां यशोगीतिं भवान् आर्यजनवर्द्धनीयां विदधातु। विद्युद्दीपमालाभिर्ललिते भवद्भवने राजलक्ष्मीः विजयमाल्यधारिणी भवतु। तव कामकेलिः रिपुगणेषु इन्द्रवज्रमिव पीडाऽऽवहास्तु।।४०॥

* सिंहावलोकनम् *

मीयन्तां मधुद्रवेण वाचो मानभूमिपते-
र्नीतिनैपुणेन परिपन्थिनो विनीयन्ताम्
नीयन्तां समस्तसुखसौभगं विनीताः प्रजाः
कीर्तयो दिगन्तरेषु निर्भरं निधीयन्ताम्।
धीयन्तां प्रजामनःसु मुद्राः शुभकार्यशतै-
र्धर्मविपरीताः क्रूरकृतयो विगीयन्तां
गीयन्तां शुभाशिषो गृहे गृहेऽद्य मञ्जुनाथ
मानमेदिनीन्द्रगृहे संपदः समीयन्ताम्।।४१॥

मानभूपालस्य वाचः क्षौद्रद्रवेण उपमिता भवन्त्वित्याशीः। नीतिनैपुणेन प्रतिकूला अपि विनीताः क्रियन्ताम्। आज्ञाकारिण्य इमा जयपुरप्रजाः सुखसौभाग्यं अनु (भवता) प्राप्यन्ताम्। शुभकार्यशतद्वारा प्रजामानसेषु निजप्रभावस्य मुद्राः अङ्क्यन्ताम्। तथाविधानि प्रजाहितावहकार्याणि क्रियन्तां यैर्हि प्रजानां मनसि भवतः प्रभावस्य मुद्रा अङ्किता भवेदित्याशयः। क्रूराः कृतयः (प्रजानामुत्पीडककार्याणि) विगीयन्तां मनसः अपसार्यन्ताम्। अत एव 'मानभूपस्य गृहे संपत्तयः समेताः (संगताः) भवन्तु' इति शुभाशिषः प्रजानां गृहे गृहेऽद्य गीयन्ताम्। एवं सत्कार्यैः सुप्रसन्नाः प्रजाः गृहे गृहे भवतः संपदभिवृद्धेराशिषः प्रददत्विति कवयितुराशीः।।४१॥

* * *

# * नीतिनिवेदनम् *

## * सोरठा *

जयपुरनगरनरेश भानुवंशवारिधिविधो!।
अवधारय सनिवेशमेतां सुजननिवेदनाम्।।४२ ।।

सनिवेशम् अभिनिवेशपूर्वकम् अवधानपुरस्सरमित्यर्थः ।।४२ ।।

क.-- भारतविभासमानश्रीमन्मानभूमिभुजा
कीर्तिवल्लरीयं परिगोपिता निषिच्य ताम्
विद्यास्वनुरागवता तदनु विवर्द्धिताऽसौ
जयसिंहभूमिभृता पुष्यन्तीं विविच्य ताम्।
गुणिजनतोषकेण श्रीमद्रामभूमिपेन
मञ्जुनाऽथ माधवेन पुष्टाऽसौ विविच्यतां
भानुवंश्यभूमिपतिकुञ्जर महीप मान
सेयं भवताऽद्य दानवारिणा निषिच्यताम्।।४३ ।।

भारतवर्षे सर्वत्र विभासमानेन (प्रख्यातेन) श्रीमता मानसिंहभूपालेन (प्रथमेन) तां (मानसिंह-कालिककीर्तिवल्लर्याः हृदये स्मरणेन परोक्षनिर्देशः) अथवा तां मूलकन्दलीं (जड़) निषिच्य, इयं (अस्मिन् समये वर्तमानेति समक्षनिर्देशः) कीर्तिरूपा वल्ली परिगोपिता रक्षिता। तदनु तदनन्तरम्, विद्यासु अनुरागवता सवाईजयसिंहदेवेन (द्वितीयेन) तां पूर्वोक्तां कीर्तिवल्लरीं पुष्यन्तीं विकसन्तीं विविच्य ज्ञात्वा असौ कीर्तिवल्लरी वर्द्धिता। श्रीमज्जयसिंहदेवस्य प्रख्यातो विद्याऽनुरागः। अनेनैव हि स्थाने-स्थाने ज्यौतिषयन्त्रशालाः स्थापिताः सन्ति, या विस्मापयन्ते दर्शकान्विदुषः। तदनन्तरम्-- गुणिजनानां सन्तोषकेण श्रीमद्रामसिंहदेवेन (अर्वाचीनेन)। अथ पित्रा प्रतिष्ठापिताया राजपद्धतेः, गुणिजन-जीविकायाश्च यथावन्निर्वाहणात् मञ्जुना अभिरूपेण (प्रशस्येन) श्रीमन्माधवसिंहदेवेन (अर्वाचीनेन) च असौ कीर्तिवल्ली पुष्टा (सुतरां वर्द्धिता), इति विविच्यतां विचार्यताम्। तस्मात् भानुवंश्यानां भूमिपतीनां मध्ये कुञ्जर श्रेष्ठ! हे मानमहीप! सा इयं कीर्तिवल्लरी अद्य भवता दानवारिणा मदजलेन निषिच्यताम्। कुञ्जरो मदजलेन निषिच्य स्वाभीष्टां वल्लीं यथा वर्द्धयति तथा भवता दानसामयिकेन अर्घ्यजलेन निषिच्य इयं कीर्तिवल्ली वर्ध्यताम् इति माननरेन्द्रं प्रति दानौदार्यं प्रार्थ्यते। किञ्च शब्दशक्तिमहिम्ना-- "भवता दानवारिणा दानवानां दैत्यानाम् अरिणा विष्णुरूपेण सता" निषिच्यतामयमर्थोपि ध्वन्यते। "समये समये आविर्भूय यथा हरिर्दुष्टान्दमयित्वा त्रिभुवनीरूपां कीर्तिलतां गोपायति, तथा दानवानामरिणा दुष्टदण्डकेन सता भवता, इयं कीर्तिवल्ली निषिच्यताम्।" तथा च नरेन्द्रस्य विष्णुसमानत्वं ध्वन्यते ।।४३ ।।

**सर्वविधशोभाशालि जयपुरराज्यमहो**

**पालितं पुराणैः प्राज्यमेतत्परिगीयते**

**श्रीमद्भानुवंशोप्यद्य यावद्भाविभूपवरै-**

**र्लम्भितप्रशंसोऽस्तीति केन न वा स्तूयते।**

**मञ्जुनाथ राज्यस्याऽस्य जातः कर्णधारो भवान्**

**भानुकुलाऽऽधारोऽप्यद्य भवति निरूप्यते**

**जयपुरराष्ट्रस्याऽष्टचत्वारिंशल्लक्षदृशा-**

**मेकमात्रलक्ष्यमसि श्रीमन्मानभूपते।।४४।।**

प्राचीनैः राजभिः पालितं जयपुरराज्यमिदं शिल्प-कलादिद्वारा मनुष्यकृतशोभया, गिरि-निर्झर-बालुकाप्रान्तरादिबहुलतया प्राकृतिकशोभया च भूषितं प्राज्यं सुसम्पन्नं च परिगण्यते। भानुवंशोप्ययम् अद्ययावत्संजातैः राजवरैः प्रापितप्रशंसः। एतदवधिसंजातै-र्नृपैर्भानुवंशस्य प्रशंसैव प्रचारितेति सर्वैरेव स्तुतिः क्रियते। निरूप्यते दृश्यते। राज्यनिवासि-चतुर्विंशतिलक्षसंख्याकलोकानाम् अष्टचत्वारिंशल्लसंख्यानां नेत्राणां त्वमेव एकमात्रं लक्ष्यमसि। निजोन्नतिनिमित्ते सर्वाः प्रजास्त्वामेव साभिलाषमीक्षन्ते इत्यर्थः।।४४।।

**राज्याऽनुग्रहेण नलयन्त्राज्जलमाप्यतेऽद्य**

**मार्गमार्गमध्ये दीपपङ्क्तिर्दीप्यते भृशम्**

**प्रान्ते प्रान्त एव शिक्षासत्रमुपपन्नमस्ति**

**यत्र निर्निरोधमेषा शिक्षां लभतेऽनिशम्।**

**एवमनपायां भवदीयच्छत्रच्छायां प्राप्य**

**भूयोऽप्युन्नतीनामद्य सैषा वहते तृषं**

**हंहो भूपतीनामीश! सेयं त्वदधीना प्रजा**

**तव भुजदण्डोपरि दीना दधते दृशम्।।४५।।**

अग्रे यद्भवेत्तदस्तु, परम् अद्य (वर्तमानसमये) राजतन्त्रस्यानुग्रहेण जलयन्त्रेभ्यो जलं प्राप्यते। राजद्रव्येणैव प्रत्येकमार्गस्य मध्ये विद्युद्दीपपङ्क्तिः प्रकाशते। प्रान्ते प्रान्ते राज्यस्य प्रायो बहुषु स्थानेषु शिक्षायाः सत्रम् 'सदावर्तः' उपपन्नं सुलभम्। सत्रपदेन 'शुल्कं विनैव राज्ञा विद्यालयेषु शिक्षा प्रचारितेति शुल्कपक्षपातिषु राज्याधिकारिकतिपयेषु पूर्वतनराजानामौदार्यनियमः सूच्यते। एषा(प्रजा)। अनिशमिति 'हिन्दीसाहित्य-रात्रिपाठशाला' प्रमुखविद्यालयेषु रात्रिशिक्षापि प्रचारिते'ति सूचितम्। अनपायाम् हानिभयरहितां त्वत्कृतां रक्षां प्राप्य इदानीम् इतोऽधिकानामुन्नतीनां तृष्णां धारयति। जल-आलोक-शिक्षादीनां निःशुल्कप्राप्तिरूपा उन्नतिस्तु पूर्वत एवास्ति, इदानीं श्रीमता निजराज्यप्राप्तेरुपलक्ष्ये का नवीना अस्याः प्रजाया उन्नतिः क्रियते इति उन्नतिविषये त्वत्सापेक्षिणी अत एव दीना प्रजा तव

भुजदण्डोपरि दृशं दधते स्थापयति 'दध धारणे'। भवान् हि सीकर-खेतरीप्रभृति-राजपदाङ्कित-सामन्तानामीशः। अत एव अतिसमृद्धस्य तव प्रजानामुन्नतिकार्ये द्रव्यविनियोगः सुकर एवेति स्वत एव भवता विचार्य समयोचिता उन्नतिः कार्या। राजभक्ता जयपुरप्रजा तु प्राप्याधिकारबलं प्रदर्श्य न किञ्चित्प्रार्थयितुमर्हति, तदेव 'दीना' इत्यनेन ध्वनितम्। अन्यथा अस्मिन्समये अन्यान्यदेशेषु प्रजा तु राज्ञां सकाशाद्बलेन निजमधिकारं लिप्सते इति तां नीतिं प्रति जयपुरप्रजाया उपेक्षा च सूचिता ॥४५॥

**नानाविधकाम्यकरजालात्परिमोचिताऽऽसी-**
**न्निजनरपालादुन्नताऽसौ सुकृतैरहो**
**निःशुल्कौषधालयादिसंस्थाभिः सुरक्षिता च**
**निःशुल्कं सुशिक्षिता च साधुशिक्षितैरहो।**
**हंहो जयपत्तनपुरन्दर! धुरं दधत-**
**स्त्वत्पुरोऽर्थयन्ते बुधा विनयशतैरहो**
**पूर्वतोऽनुभूतभूरिभव्या भवदीया प्रजा**
**न व्याजेन वञ्च्या भवेन्नव्याधिकृतैरहो ॥४६॥**

पूर्वैर्जयपुरराजैः नानाविधात् काम्यात् (स्वेच्छया योजितात्) करजालात् ('टैक्स' समूहात्) इयं प्रजा रक्षिता। सुकृतैः (सौभाग्यवशात्) निजात् नरपालादेव चेयमुन्नता अभूत्। शुल्करहिताभिः औषधालय-'हॉस्पिटल'-'म्युनिसिपिलटी' प्रभृतिभिः संस्थाभिः इयं प्रजा पालिता, निःशुल्कम् उत्तमशिक्षणैः शिक्षिता च। हे नरेन्द्र! जयपुरराज्यभारं गृहीतवतः तव पुरस्तात् इमे बुधाः (बुद्धियुक्ताः, अत एवैषां विनीता प्रार्थना नोपेक्ष्येति) शतविनयपूर्वकं प्रार्थयन्ते-- "त्वत्कृपया, पूर्वकालादारभ्य अनुभूतनानाकल्याणा सेयं प्रजा नवीनतया अस्या आन्तरिकीमावश्यकतामजानद्भिर्नवीनैः पदाधिकारिभिः केनापि मिषेण न प्रतारणीया भवेत्" ॥४६॥

**भूरिलक्षमुद्राभिर्न्यवेशि विद्युदस्मिन्पुरे**
**'गैस' रुचिरेखां बहुमूल्यामपनीय ताम्**
**लक्षव्ययैः कृष्णश्लक्ष्णपृष्ठा कृता राजपथा**
**राजगृहा रङ्गादिभिर्नीता रमणीयताम्।**
**किन्तु कृपानाथ! बहिर्दर्शनीयसौन्दर्याऽपि**
**सेयं पुरी त्वन्तर्यातसारा परिचीयतां**
**शिल्पपरिष्कारं विना व्यापाराऽधिकारं विना**
**राजधनाऽऽधारं विना पारं कथमीयताम्॥ ॥४७॥**

बहुमूल्यां 'गैस' प्रकाशपङ्क्तिम् उत्पाट्य, बहुलक्षमुद्राणां व्ययेन विद्युत् (Electricity) न्यवेशि स्थापिता। लक्ष-लक्षमुद्राणां व्ययैः राजमार्गाः कृष्णवर्णाः मसृणपृष्ठाश्च कृताः। नवीनशिल्पचातुर्यमप्रदर्श्य

केवलं रङ्गादिभिः उपरितनसंस्कारैः राजगृहा रमणीयतां नीताः। बहिस्तो दृश्यसौन्दर्याऽपि अन्तर्भागे तु सेयं पुरी धनवृद्धिं विना गतसाराऽस्तीति परिज्ञायताम्। पूर्वं यद्धि श्रेष्ठिनां व्यापारकार्ये प्रसृतमासीत्तस्य राजकीयद्रव्यस्य साहाय्यं विना प्रजेयं निजनिर्वाहविषये कथं वा पारमीयताम् पारंगता भवतु, ईङ् गतौ ।।४७ ।।

**श्रीमन्तं समेत्य भूरि मोदते विनीता प्रजा**

**धार्मिकं भवन्तं वीक्ष्य विज्ञः कुरुते स्तुतिम्**

**शिक्षापथदीक्षितो भवानपि च राज्यं प्राप्य**

**जाने यत्सभाज्यं कर्म कुर्वन् लभते द्युतिम्।**

**मुञ्जुनाथ किं जल्पामि नीतिसारविज्ञो भवान्**

**वारं वारमेतत्किंतु यातु भवतः स्मृतिं**

**तव भुजदण्डोपर्यखण्डोदयशालिन्विभो!**

**जयपुरभव्यभूमिखण्डो वहते धृतिम्।।४८ ।।**

यदि भवान् धार्मिको भवेत्तर्हि श्रीमन्तं, धर्मस्य राजनीतेश्च विज्ञो जनः स्तुतिं कुर्यात्। अहमपि चैतज्जाने यत् प्राप्तशिक्षो राज्यं प्राप्य भवान् स्वत एव सज्जनैः सभाज्यं (अनुमोदनीयम्) कर्म कुर्वन् कीर्तिं लभते। भवतः स्मृतिं यातु, भवान् सदा स्मरतु इत्यर्थः। किं तदाह--"हे अखण्डाभ्युदयशालिन्! तव भुजदण्डोपरि भव्योयं जयपुरखण्डो धैर्यं धारयति"। भारवहनक्षमेण निजकरेण त्वमेव रक्षां समयोचिताभ्युदयदानादिकं च करिष्यसीति धैर्यादेव सोयं मौनमास्ते इत्याशयः।।४८ ।।

**जीविकामनाप्य जना नूतनप्रबन्धोदये**

**यान्ति दीनबन्धो! दूरे क्रोशकसहस्राणाम्**

**मासि मासि मोदन्ते विदेशाऽऽगता मुद्राशतै-**

**र्मासिकमलभ्यं किन्तु दीनैर्दशमुद्राणाम्।**

**किं कुर्युः कृपानिधान ! धान्यं सुमहर्घमभू-**

**द्याति बहिर्भूरि ततो निद्रां विद्धि विद्राणां**

**यावन्न भवेयुरभिधार्याः शिल्पकार्यालया-**

**स्तावदपसार्या कथं दुर्दशा दरिद्राणाम्।।४९ ।।**

नवीनप्रबन्धे जीविकाम् न आ- आप्य (अप्राप्य) नराः क्रोशसहस्राणां दूरे यान्ति। विदेशेभ्य आगताः पदाधिकारिणस्तु मुद्राशतैः (अपरिमितमुद्राभिः) प्रतिमासं मोदन्ते। धान्यं भूरिपरिमाणे बहिर्देशेषु याति, ततः(तस्मादेव दुःखात्) निद्रां विद्राणां पलायितां विद्धि। अभिधार्याः स्थापनीयाः।।४९ ।।

* छप्पय *

निजकार्येष्वधिकारिजनात्सहकारमलब्ध्वा।

कृषिकाः कृषिकार्यं त्यजन्ति विनिकारं लब्ध्वा॥

जन्मभूमिमवमुच्य वेतनाद्यान्ति विदेशे।

प्रचुरकृषिक्षेत्राणि वन्ध्यतां विदधति शेषे॥

अयि धरणिधुरन्धर! धरणिरियमेति सरणिमेतां हि चेत्।

कथमृद्धिरयेन्नृपकोषजा पुनः प्रजापि च किं पचेत्॥५०॥

निजकार्येषु कृषिकार्येषु 'नाज़िम तहसीलदार' प्रभृतिपदाधिकारिगणात् सहयोगम् (सहायताम् कृषिकार्ये सौकर्यप्राप्तिरूपाम्) अलब्ध्वा, प्रत्युत तिरस्कारं प्राप्य कर्षकाः कृषिं त्यजन्ति। वेतनात् वेतनं प्राप्य। ततश्च शेषे परिणामे प्रचुरकृषियोग्यानि क्षेत्राणि वन्ध्यताम् अकृष्टताम् ('बंजर') धारयन्ति। इयं धरणिः शनैः शनैरेतामेव सरणिं (वन्ध्यतारूपाम्) चेत् एति, तर्हि राजकोषजा ऋद्धिः कथमयेत्? कृषिं विना कोषस्थापनोचितं द्रव्यं कथमागच्छेत्? कृषिं विना दीना प्रजापि किं पक्त्वा भुञ्जीतेत्याशयः॥५०॥

* धर्मपालनविषये निवेदनम् *

क.-- भारतमेवाहुर्बुधा आद्यसभ्यताया गुरुं

तस्योत्कृष्टता या मौलिमान्या सा महीयसाम्

कौटिलीयशस्त्रगतनीतिरेतदीया देव!

दर्पादर्चनीया ह्यपि पाश्चात्त्यस्थवीयसाम्।

भानुवंशभूषण! भवन्तं भूरि भाषे किमु

भारतीयरीतिः सुप्रकाशेयं गरीयसाम्

सर्वोपि हि साचीकृताऽसूयमुपयाची भवे-

त्प्राचीनप्रथायाः परिपालनपटीयसाम्॥५१॥

तस्य भारतस्य या उत्कृष्टता सा न तिरोहिता, अपि तु अतिशयेन महतामपि जनानां शिरसा वन्दनीया। एतस्य प्रत्यक्षं प्रमाणं निर्दिशति-- हे देव! कौटिलीयाऽर्थशास्त्रगता एतद्भारतसंबन्धिनी राजनीतिः पाश्चात्यानामेपि गुरु-पुरुषाणां गर्वपूर्वकं सत्करणीया। अत एव प्राचीनप्रथायाः पालनचतुराणां नृपाणामग्रे सर्वोपि जनः (देशवासी वैदेशिकश्च) तिरोहिताऽसूयम् (असूयां त्यक्त्वा) उपचायी भवेत् आनुगत्यप्रार्थी भवेदित्यर्थः॥५१॥

किं नाऽभवन्भारतीयभूमौ भूरिभूपाला हि

कीर्तिं विना कालात्स्मृतिर्येषां मार्गणीयेयम्

कीर्तिः किल कच्छकुलजानां धर्मकृत्यैरेव

पौरपरिस्तुत्यैरिति वार्ता द्रढनीयेयम्।

**किं बहुना श्रीमद्रामसिंह-माधवेन्द्रमुखै-**

**रखिलसुखैश्चरितैः ख्यातिरर्जनीयेयं**

**हंहो भानुवंश्यभूप! सूरिसुविचार्यैः शुभ-**

**कार्यैः कला कच्छकुलकीर्तिः कलनीयेयम्॥ ५२॥**

भारतभूमौ बहवो भूमिपालाः अभवन् परं कीर्तिं विना येषां भूपानां स्मृतिः कालवशादिदानीमन्वेषणीयैव। इतिहासेषु येषां कीर्तिः प्रख्यायते, त एव सर्वैः स्मर्यन्ते अन्येषां तु स्मृतिः कालगर्भे विलीनेत्याशयः। सा कीर्तिस्तु कच्छवंशप्रसूतानां राज्ञां पौरजनद्वारा स्तवनीयैर्धार्मिककार्यैरेव भवतीत्येषा वार्ता दृढीकरणीया। बहुना प्रमाणेन किम्? श्रीरामसिंहमाधवसिंहप्रमुखैः (अस्यामेव शताब्द्यां प्रख्यातैः) राजभिः सकलप्रजासुखकारकैः धर्माचरणैरेव इयं ख्यातिः अर्जनीया अभूत्। अत एव अस्मिन्नेव भानुवंशे प्रसूत हे भूप! सूरिभिरपि मननीयैः सुविचार्य कृतैरित्यर्थः। शुभकार्यैः कच्छवंशस्य कीर्तिः कला मनोहारिणी कर्तव्या॥ ५२॥

*** प्राक्तननीतिनिर्वाहार्थं निवेदनम् ***

**येषां पूर्वपूरुषा नृपार्थे जहुर्जीवनानि**

**राष्ट्रमङ्गलार्थे भवेत्तन्मतिर्न नेया किम् ?**

**दूरदूरदेशान् जातिवेषान्परिहाय पुनः?**

**प्रतननरेशानाश्रिता ये तेऽद्य हेयाः किम् ?**

**सुप्रसिद्धग्रन्थान्स्वामिनाम्ना निर्मिमाणैर्यैश्च**

**कच्छकुलकीर्तिः कृता नाऽद्य जगद्गेया किम् ?**

**हंहो जयनगरनिवेशनौकाकर्णधार!**

**तेषामधिकारमनु धारणा न धेया किम् ? ॥५३॥**

येषां सामन्तानां पूर्वजाः राजनिमित्तं निजजीवितानि त्यक्तवन्तः, मौलानां तेषां संमतिः राष्ट्रस्य मङ्गलार्थं किं न नेतव्या भवेत्? अपि तु राजकार्ये तेषां संमतिरवश्यं ग्राह्या। ये च दक्षिण-कान्यकुब्जादिदूरदूरदेशान्, निजजातिस्वीकृतवेषांश्च त्यक्त्वा प्राक्तननरेशान् आश्रितवन्तस्ते हि राज्याश्रिताः पुरुषाः अस्मिन् युगे किं हेयाः? निजजात्यां प्रतिषिद्धं भूप्रतिग्रहादिकं ये गृहीतवन्तः, जयपुरराज्यस्य प्राक्तननीतेरनुसारेण (सर्वेपि राजपरिगृहीतं वेषं भाषाञ्चैव स्वीकृत्य राज्यहितकार्येषु एकभाषा एकवेषाश्च सन्तस्तद्देशाभिमानिनो भवेयुरिति) यैर्निजजातीयताभिमानं त्यक्त्वा निजस्वाम्याश्रयाऽभिमानः सबहुमानमङ्गीकृतः, ते चिरन्तनाश्रिताः साम्प्रतं कथं वा त्यागमर्हन्तीत्याशयः। येश्च राजाश्रितैर्निजाश्रयस्य जयपुरनरेन्द्रस्य नाम्ना सुप्रसिद्धान् ग्रन्थान्निर्माय तस्य कीर्तिः जगद्गेया किं न कृता? अपि तु जगत्प्रसिद्धा कृता। अत एव जयनगरसंनिवेशरूपाया नौकायाः संचालक हे मानभूप! तेषां चिरन्तनाश्रितानां लोकानाम् अधिकारं प्रति किं धारणा न स्थापयितव्या? अपि त्ववश्यमवधानं दातव्यम्॥ ५३ ॥

* प्रजार्थं निवेदनम् *

दैवोत्पातदस्युदुःख-दुर्भिक्षाद्युपद्रवेभ्यो

राष्ट्रोपप्लवेभ्योऽप्यसौ त्राता खलु खेलया

यूरोपीययुद्धे प्रजालोकान्माधवेशोऽप्यवन्

कोषाद्ददौ द्रव्यं दययैव समुद्वेलया।

मञ्जुनाथ नन्देन्ननु राजा प्रजासम्पदैव

शोभा कैव राज्ञां प्रजाशून्ययाऽनयेलया?

पूर्वतः प्रजातपरिपालनप्रमोदां प्रजा-

मेवं प्रजानाथ! किं प्रजानास्यवहेलया।। ५४॥

महामारीप्रभृतिदैवोत्पातेभ्यः, देशोपरि लुण्टाकादीनामाक्रमणादिदस्युदुःखेभ्यः, दुर्भिक्षाद्युपद्रवेभ्यः राज्योत्क्रान्तिप्रभृतिभ्यो राष्ट्रोपद्रवेभ्यश्च असौ प्रजा पूर्वतनैर्जयपुरेन्द्रैः क्रीडयैव (न तु क्लेशं मत्वा) रक्षिता। अस्मिन् यूरोपीयमहासमरे भारतसम्राजः साहाय्यप्रार्थनायां सैनिकसमृद्ध्यर्थं निजप्रजालोकानदत्वा, उद्वेलितया दयया निजकोषाद्बहुलं द्रव्यमेव माधवसिंहदेवो ददौ, न तु दयापरवशः प्रजालोकान्प्रेषयामास। राजा प्रजानां सम्पदा समृद्ध्या एव नन्देत्। प्रजाशून्यया अनया इलया पृथिव्या राज्ञां कीदृशी शोभा? अत एव पूर्वकालात् संजातः परिपालनस्य प्रमोदो यस्यास्तामिमां जयपुरप्रजामेवं साधारण्येन किं परिचिनोषि। अपितु पूर्वजातभूपालानां समये सम्यगनुभूतपालनसुखामिमां प्रजां विशेषरूपेण परिजानीहि। यतस्त्वं हि सर्वस्याः प्रजाया नाथः। अत एव सावधानः सर्वदा इमां परिपालयेति प्रार्थना॥ ५४॥

आसीद्भानुवंशे भूमिभर्ता रघुवीरमणिः

स्मर्ता चरितानि यस्य लोको याति धन्यताम्

अन्येऽप्यत्र विख्याताः सुवंशे भूरि जाता नृपाः

साक्षी नो यदंशेऽद्येतिहास एव मन्यताम्।

मुञ्जुनाथ मध्ये मानसिंहः स बभूव नृपो

यः शत्रूनपोह्य भारतेऽयासीदनन्यतां

तस्मिन्नेव वंशे लब्धराज्यो भासि भूपमणे!

भवसि सभाज्यो यथा सर्वैस्तथा तन्यताम् ॥ ५५ ॥

भानुवंशे रघुवीरमणिः श्रीरामो भूमिभर्ता आसीत् यस्य चरितानि स्मर्ता (चरितानां स्मारकः, तृन्) जनो धन्यतां याति। अन्येपि बहवो नृपा अस्मिन्वंशे जाताः, यदंशे (यस्य प्रामाण्यांशे) अयं भारतेतिहास एव नः अस्माकं साक्षी। मोगलसम्राजां समये श्रीमानसिंहो नृपः स आसीद् यः पठानान् अपोह्य निर्वास्य भारते अनन्यतां (नास्ति अन्यः समानो यस्य, असाधारणताम्) ययौ। अत एव सर्वैर्जनैर्यथा त्वं प्रशंसनीयो भवसि तथैव तन्यतां, किं विशेषप्रार्थनया।। ५५॥

**कच्छकुलस्य तदा कृतिता जनता यदि निर्भरमुन्नतिमेयात्**
**दानमपास्य न यूथपतिर्नृपतिश्च लसेत्किल केवलगेयात्।**
**नीतिमिमां परिचिन्त्य चलेरखिलेशहरिः करुणां त्वयि धेयात्**
**मानसमर्थयमानमिदं भुवि माननृपो बहुमानमुपेयात्॥५६॥**

जनता यदि प्रचुरं यथा स्यात्तथा उन्नतिम् एयात् (आ-इयात् प्राप्नुयात्), कच्छकुलस्य कच्छवंशजातस्य भूपसमूहस्य तदा कृतिता कुशलता। दानं मदम् वितरणं च अपास्य केवलात् गेयात् कीर्तिगानात् यूथपतिः कुञ्जरो नृपतिश्च न शोभेत। चलेः व्यवहरेः (लिङ्)। अखिलेशः सकलस्य स्वामी हरिः। (यतो हि) इदं मे मानसम् एतत् प्रार्थयमानम् अस्तियद्भूमौ माननरेन्द्रो बहुमानं प्राप्नुयादिति। लोकस्य सकाशात् भवतः संमानकामनयैव सेयमुपर्युक्ता नीति-प्रार्थना मया निवेदितेति भावः॥५६॥

**श्रीमन्मानमहीन्द्रमण्डनमणे ! भूम्यङ्गणे ते यशो**
**माधुर्यं हरिदन्तरेषु विलसन्नूनं वसन्तेऽप्यगात्।**
**तन्मार्गन्ति मृणालिनीषु मधुपाः काङ्क्षन्ति केलीशुका-**
**स्तद्गायन्ति कलाकलापकुशलाः प्रोद्यत्कलं कोकिलाः॥**

इह भूमौ सर्वदिगन्तरेषु यस्ते यशोमधुरिमा प्रसृतः स एव वसन्तेपि संक्रान्तो यद्वशात् कमलिन्यादिषु मधुपादयस्तन्माधुर्यमद्याप्यन्विष्यन्तीति भावः प्रोद्यन् विलसन् कलो गम्भीरमधुरः स्वरो यस्मिन् तथा॥

* * *

## * आशीर्वादा: *

श्रीलगणनायकतो भातु गणनायकता

सकलसहायकता श्रीपतेरुदीयताम्

पारिजातपादपादुदेतु कामपूरकता

पावकता सेयं पुनः पावकात्प्रणीयताम्।

मञ्जुनाथ नित्यं महामहिमा महेन्द्रादथ

चन्द्राह्लेकलोचनचमत्कृतिरभीयतां

निर्जरनिकरदत्तसद्गुणसमूहधर-

जयपुरनगरनरनाथो मुदमीयताम्॥ ५७ ॥

श्रीमद्गणेशात् गणस्य (समाजस्य) नायकता भातु। श्रीपतेः विष्णोः सकाशात्। पावकाद् वह्नेः पवित्रीकारकता। महेन्द्रात् शक्रात्। अभीयताम् आगच्छतु। पूर्वोक्तप्रकारेण-गणेशविष्णुप्रभृतिदेवसमूहदत्तानां समाजनेतृत्वादिगुणसमूहानां धारको जयपुरेन्द्रो मोदम् प्राप्नोतु। छन्दोऽनुरोधाद्भाषाप्रसिद्धं 'जैपुर' इति नाम पाठ्यं ततश्च छन्दसि नाक्षरवृद्धिः॥५७॥

श्रीमद्भानुवंशवरवारिधिरगाधतमो

महसा समिध्यमानसुषमोऽभ्युदयताम्

श्रीमतः समन्तात्सुखशासनमिहोपलभ्य

संपदमनन्तां सर्वजनता कलयताम्।

मञ्जुनाथ शिक्षाऽऽगमदीक्षितेन देवेनाऽद्य

शिक्षणविभागोऽनिशमुन्नतिं रचयतां

माननीयराजोचितसद्गुणविराजमान-

श्रीमन्मानसिंहवीरतिलको विजयताम्॥ ५८ ॥

महसा क्षत्रियोचिततेजसा समिध्यमानसुषमः वर्द्धमानशोभः, अगाधतमो वंशगतगौरवेण अतिगभीरः भानुवंशरूपः श्रेष्ठो वारिधिः अभ्युदयं गच्छतु। श्रीमतः (माननरेन्द्रस्य)। शिक्षितेन मानसिंहदेवेन (कारणभूतेन) शिक्षाविभागः प्रतिदिनमुन्नतिं यातु ॥ ५८ ॥

जृम्भतां जनेषु जयपत्तनविकासिविभा

भानुवंशभासा भूमिरेषा सुविश्रम्भताम्

श्रम्भतां विरोधलोकलक्ष्मीर्मानभूमिवपते!

भूरिविभवस्ते सतां यायादवलम्बताम्।

लम्बतां प्रजासु गुणमाला तव भूपमणे !

धर्माचरणेषु भवत्प्रीतिः प्रतिजम्भताम्

जम्भतां जगत्सु जयलक्ष्मीस्तव पुण्यफला

काम्यकला कीर्तिः किञ्च भूरि समुज्जृम्भताम् ॥ ५९ ॥

जयपुरस्य प्रसरणशीला विभा लोकेषु जृम्भतां वर्द्धताम्। भानुवंशस्य भासा कीर्त्या भूमिः सुविश्रम्भतां विश्वसितु। विरोधिलोकानां लक्ष्मीः श्रम्भतां प्रतिहता भवतु। 'श्रम्भु' प्रमादे। प्रतिजम्भतां प्रवर्द्धताम्। पुण्यं पवित्रं फलं परिणामो यस्याः ईदृशी जयलक्ष्मीः जम्भतां वर्द्धताम्। काम्या कामयितुं योग्या, कला मनोहारिणी च ॥ ५९ ॥

* सवैया ( दुर्मिल ) *

हरहाससुधासितयद्यशसा

वसुधा परितो भरिताऽतिमदा

अपि भानुकुलोज्ज्वलकल्पलता

हरिता यमवाप्य न भाति कदा।

बत मञ्जुलनाथमनोघटना

प्रमना यमवेक्ष्य न माति मुदा

मतिमानवनीन्द्रगुणैर्द्युतिमा-

निह माननृपः सुखमेतु सदा ॥ ६० ॥

यम् अवाप्य हरिता (नवीभूता) भानुकुलकल्पलता कदा न भाति, अपि तु सर्वदैव भातीत्यर्थः। यम् (माननृपम्) अवेक्ष्य प्रमनाः हृष्टमानसा मञ्जुनाथस्य मनःकल्पना, मुदा आत्मनि न माति। अवनीन्द्रगुणैः राजोचितगुणैर्द्युतिशाली ॥ ६० ॥

का.-- श्रीमन्मानमेदिनीपुरन्दरमधिपमाप्य

यातु महिमानमिह सुजनसमाजोऽयम्

**भाविनि प्रकर्षमये समये प्रमोदयता-**

**ज्जयपुररत्नगर्भां सहयुवराजोऽयम्।**

**मञ्जुनाथ शिक्षापथगौरवं विभावयता**

**देवेनाऽभ्युदेतु शिक्षायज्ञगोऽनुयाजोऽयं**

**रञ्जयतज्जनतामथोन्नतिमुदूर्जयता-**

**ज्जयतान्महीन्द्रमानसिंहमहाराजोऽयम्॥ ६१ ॥**

श्रीमन्मानसिंहरूपं मेदिनीपुरन्दरम् (भूमीन्द्रम्) अधिपं प्राप्य। अभ्युदयशालिनी भाविनि समये युवराजसहितः अयं जयपुरवसुन्धरां प्रमोदयतात्। अग्रे कुमारो जायतां सोऽपि च श्रीमदग्र एव यौवराज्योचितो भवत्वित्याशीर्वादः। 'प्रकृत्याशिषी' ति सहस्य प्रकृतिभावः। शिक्षाया गौरवं विचारयता भवता (कारणभूतेन), शिक्षायज्ञसंबन्धी अनुयाजः (शिक्षाऽभिवृद्धिरूपः) अभ्युदयं गच्छतु। अयं मानसिंहमहाराजः जनतां रञ्जयतात्, तस्या उन्नतिम् उत् (अत्यन्तम्) ऊर्ज्जयतात् वर्द्धयतात्--अत एव मानमहाराजः अयं जयतात्॥६१॥

*** श्लोकः ***

**श्रीमद्भास्करवंशवारिधिसमुल्लासाय कीर्तिच्छटा-**

**विन्यासाय, सतां मनःकुमुदिनीसंपद्विकासाय च।**

**उद्भासाय विशुद्धनीतिसरणेः संविद्विलासाय नः**

**श्रीमान्मानमहीन्द्रशारदशशी शश्वत्समुज्जृम्भताम्॥ ६२॥**

शशिनः समुज्जृम्भणं वारिधेरुल्लासाय, अस्य शशिनः पूर्णोपचयस्तु भानुवंशरूपस्य सागरस्याभिवृद्धये इत्यादि। कीर्तिरूपायाः छटायाः(कान्तेः) स्थापनाय। नः अस्माकं संविदः प्रेक्षायाः प्रतिभाया इतियावत्। विलासाय ॥ ६२॥

**श्रीश्रीमानयमिह मानमेदिनीन्द्रो**

**गोपाय्याज्जयपुरमण्डलं चिराय।**

**किं चेयं रविकुलकीर्तिकल्पवल्ली**

**संभूयादमितफलप्रहर्षिणी नः॥ ६३॥**

रविकुलस्य कीर्तिरूपा कल्पवल्ली, अमितेन फलेन नः प्रहर्षकारिणी भूयात्। छन्दश्च तन्नामकमिति मुद्रा॥ ६३॥

सोल्लासप्रसृमरसद्गुणैकसिन्धोः
श्रीश्रीमज्जयनगराऽधिराजमौलेः।
सोन्नाहामनुदिनमुन्नतिं समन्ता-
दाशास्ते मतिरतुलप्रहर्षिणीयम्॥ ६४॥

सोल्लासं यथातथा प्रसरणशलिनां सद्गुणानां सागरायितस्य श्रीजयनगराधिराजश्रेष्ठस्य (मानभूपस्य) वास्तविकाऽभ्युदयसहितां समन्तात् (सर्वेषु विषयेषु) उन्नतिम् इयं नः अतिहर्षशालिनी मतिराशास्ते ॥ ६४॥

श्रीमद्भानुकुलस्य भूषणसमो भाग्यायितो भूभृतां
दिक्कान्तामुखमण्डनायितलसत्कीर्तिप्रभाभासुरः।
विभ्राजज्जयपत्तनाऽवनिमुदे राकासुधादीधितिः
श्रीमान्मानमहीन्द्रमण्डनमणिः शश्वद्विजेजीयताम्॥६५॥

भूभृतां राज्ञां भागधेयसदृशः, नरपतीनां महद्भागधेयं यत्तेषु श्रीमान्माननरेन्द्रोपि परिगण्यत इत्याशयः। दिक्कान्तायाः मुखमंडनसदृश्या कीर्तिप्रभया भासुरः, राजमानायाः जयपुरवसुन्धरायाः आनन्दाय पूर्णिमाचन्द्ररूपः, मानाभिधो महीन्द्राणां मण्डनमणिः अतिशयेन विजयताम्॥ ६५॥

लक्ष्मीरुन्मदमेतु कच्छकुलभूसौरभ्यसंभारिणी
भूमेर्जाड्यमपास्य भातु भुवने नित्यं प्रतापस्तव।
मोदन्तां जनतालतास्तव यशोज्योत्स्ना भ्रमेद् भूतले
श्रीमन्माननरेन्द्र! ते गुणगणैर्भूयाद्वसन्तः सदा ॥ ६६॥

वास्तववसन्ते सौरभसंभारिणी लक्ष्मीरुन्माद्यति। ते गुणगणैः कच्छकुलजानां कीर्तिसौरभ्यसंभारिणी राजलक्ष्मीः उत्कर्षं यातु। वसन्ते शैत्यं निरस्य तापो भुवने भाति। एवमत्रापि पृथिव्याः जडतां (उचित-शिक्षणद्वारा) अपास्य तव प्रतापो भातु। एवमादिभिस्ते गुणगणैः सदा वसन्तो भवतु लोके शोभा-प्रसारकत्वात्॥ ६६॥

श्रीमत्समस्तगुणगौरवगुम्फितश्री-
र्वीराग्रणीर्विजयतां जयपत्तनेशः।
यद्भूरिभीमभुजदण्डपराक्रमेण
प्राप्ताऽभया प्रमदमावहते प्रजेयम्॥ ६७॥

भयदायिनां कृते भूरिभीमस्य यद्भुजदण्डस्य पराक्रमेण प्राप्ताऽभया जयपुरप्रजा आनन्दं धारयति ॥६७॥

श्रीमद्धानुकुले सुकीर्तिकृतिमान् मर्मस्थले नीतिमान्
विद्यायां मतिमान् कलासु रतिमान् पूर्वक्रमे प्रीतिमान्।
धात्रीधूर्भरधारणेऽथ धृतिमान् धर्मोत्क्रमे भीतिमान्
श्रीमान् मानमहीपतिः सहसुतः संजायतां स्वस्तिमान्॥ ६८॥

सुकीर्तिकृतिमान् सुकीर्तिसंपादिका या कृतिस्तद्वान्। मर्मस्थले अतिसावधानतास्थाने। पूर्वक्रमे प्राचीनपद्धत्याम्। धर्मोत्क्रमे धर्मस्य लंघने॥ ६८॥

राज्यश्रीर्विततेयमस्तु महिते वंशेऽत्र भासां पते-
र्लक्ष्मीलाभवते सदाऽस्तु भवते स्नेहः सतां संगते।
प्रीतिः पूर्वजसंमते मुनिमते निर्धूतशङ्कास्तु ते
श्रीमन्मानमहीपते तव सुते लक्ष्मीपतेः स्याद्दया ॥ ६९॥

भासां पतेः सूर्यस्य महिते पूज्ये वंशे अत्र अस्मिन्। भवते तुभ्यं त्वां तोषयितुमित्यर्थः, क्रियार्थोपपदस्येति चतुर्थी। सतां संगते मैत्र्याम्। पूर्वजानाम् अभिमते मुनिमते ऋषिप्रतिपादिते राजधर्मे। निर्धूतशङ्का निःशङ्का ॥ ६९॥

श्रीमद्भास्करवंशवैभवकरे साद्गुण्यरत्नाकरे
दृष्ट्या दूरितदुर्नयव्यतिकरे विद्वत्प्रतिष्ठाकरे।
नीत्या निर्जितनिष्ठुरारिनिकरे दानाय राजत्करे
श्रीमन्ममानसुधाकरे विजयतां लोकस्य नेत्रोत्सवः ॥ ७०॥

प्रतिष्ठायाः करे कारके। राजन् शोभमानः करो हस्तो यस्य॥ ७०॥

पृथ्वी भातु रथोद्धता तव सदा सुस्वागतोपस्थिता
वाणीयं प्रमिताक्षराऽथ रुचिरा मूर्तिर्जयस्त्रग्धरा।
आर्याणां प्रमदाय वंशलतिका ते पुष्पिताग्रा भवेत्
श्रीमन्मानमहीप शत्रुषु भवेच्छार्दूलविक्रीडितम्॥ ७१॥

रथेन उद्धता क्षुण्णा। सुस्वागताय उपस्थिता (पृथ्वी)। जयस्त्रग्धरा रुचिरा ते मूर्तिर्भातु। अत्र क्रमशः-- पृथ्वी-रथोद्धता-स्वागता-उपस्थिता-प्रमिताक्षरा-रुचिरा-स्त्रग्धरा-आर्या-प्रमदा-वंशस्थ.-पुष्पिताग्रा-शार्दूलविक्रीडितच्छन्दसां सूचना ॥ ७१॥

**वीराणां द्युमणिः सुधैर्यधरणिर्द्वेषिद्विपानां सृणि-**

**र्दैन्यापत्तरणिः परार्थघटनाचातुर्यचिन्तामणिः।**

**सत्संपत्सरणिर्विवेकविपणिर्मानीन्द्रचूडामणिः**

**श्रीमान्मानमहीन्द्रमण्डनमणिर्विभ्राजतां भूतले ॥ ७२ ॥**

द्युमणिः सूर्यः। सृणिः अङ्कुशः। दारिद्र्यापत्तिरूपायाः सरितः तरणिर्नौका। परार्थसाधन-चातुर्ये चिन्तामणिः॥ ७२ ॥

*** दोहा ***

**सुविमलदिनकरकुलजलधिविशदशरत्कुमुदेश।**

**जयनगरीनायक नमय मत्तान्माननरेश!॥७३ ॥**

दिनकरकुलरूपस्य जलधेः कृते शरच्चन्द्र ! माननरेश अभिमानमत्तान् नमय॥ ७३ ॥

**कच्छवंशवरवारिरुह विलसत्सुदिनदिनेश।**

**मानसिंह नृपकुलतिलक जय जयपुरपरमेश॥ ७४॥**

कच्छवंशरूपं यद् वरं वारिरुहं तस्य कृते विलसतः सुदिनस्य (न तु मेघच्छन्नदिनस्य) दिनेश सूर्य !॥ ७४॥

*** बरवै ***

**मिहिरवंशमणिमण्डन तुलितमहेन्द्र।**

**प्रकृतीश्चिरमनुरञ्जय जयनगरेन्द्र।।७५ ॥**

सूर्यवंशस्य शोभायै मणिमंडनसदृश!॥ ७५ ॥

**क०-- हंहो भानुवंशभानु-श्रीमन्मानभूमिपते!**

**स्यूता संस्कृतेन स्तुतिभारती मदीयेयम्**

**नव्ययुगवैभवान्न भायात्तव चेतसि चे-**

**त्तदपि न खेदश्चित्तरचना स्वकीयेयम्।**

**किन्तु नरनाथ बहोः कालान्मञ्जुनाथकुले**

**भास्करकुलेशनृपकीर्तिः कवनीयेयं**

**तस्मादेव नूनं नरदेव! दिव्यदेवगिरा-**

**ऽप्याशीर्वादमाधादेवमुक्तिरस्मदीयेयम्॥ ७६ ॥**

भानुवंशस्य प्रकाशकरत्वाद् भानुरूप हे मानभूपते! संस्कृतभाषया स्यूता संग्रथिता इयं ते स्तुतिवाणी नव्ययुगस्य वैभवात् तव चेतसि चेत् न रोचते, तदापि खेदः न। यतः इयम् चित्तस्य स्वकीया रचना। चेतसस्तरङ्गेण स्वत इयं रचना जाता। अत एव कस्यापि तोषो भवतु मा वा भूदित्याशयः। किन्तु हे नरनाथ! मञ्जुनाथस्य कुले बहोः कालादारभ्य भास्करकुलस्य ईशा ये नृपास्तेषां कीर्तिः इयं कवनीयाऽभूत्। मञ्जुनाथकुलस्य पूर्वजैः श्रीकृष्णभट्ट-द्वारकानाथ-जगदीशादिभिः सूर्यवंशीयराजानां श्रीजयसिंहदेवादीनां कीर्तिः कवितया निबद्धेत्याशयः। तस्मादेव कारणात् हे नरदेव! इयम् अस्मदीया उक्तिः दिव्यया देवगिरा (संस्कृतया) अपि एवम् (पूर्वोक्तप्रकारेण) आशीर्वादम् आधादेव अस्थापयदेव। पूर्वजरीत्यनुसारं भानुवंशीयस्य भवतः आशीर्वादरूपेण कीर्तिः संस्कृतभाषयाऽपि कर्तव्यानुरोधेन न्यबध्नामित्याशयः। 'देव' पदस्य चतुर्वारं चतुर्धा निर्वाहः प्रेक्ष्यः॥ ७६ ॥

* * *

# गोविन्दवैभवम्

( १ )

## विनय-प्रस्तावना

सो.- **मन्दीभवदरविन्दमिन्दीवरबन्दीकरम्।**

**वन्देमहि गोविन्दचरणममन्दीकृतसुखम्।।१ ।।**

मन्दीभवत् अरविन्दं यस्मात्, कमलविडम्बकमित्याशयः। इन्दीवरस्य नीलकमलस्य अपि बन्दीकरं विजेतारम्।।१ ।।

क.- **पूर्वार्जितपुण्यैर्या कवित्वकला प्राप्ता, हन्त**

**विज्ञानां विवर्द्धितवान् विषयरुचिं तया**

**नृपनगरादिकं निबध्नन्नभिविश्य तया**

**दृश्यमिव दर्शितवान् मूर्तिमदिदंतया।**

**मञ्जुनाथ नानाविधकाव्यगुणैर्भव्या भवे-**

**न्नव्यापि च सूक्तिर्हरिहीना यदि, किं तया?**

**साम्प्रतमवेहि देवि वाणीयद्दयां विधेहि**

**वाणीमद्य पूतां करवाणीश्वरचिन्तया।।२ ।।**

तया कवित्वकलया विज्ञानां विषयेषु रुचिं प्रीतिं वर्द्धितवान् विषयाभिमुखीं प्राबल्येन प्रवर्तितवान्। किञ्च अहम् अभिविश्य अभिनिवेश- (आग्रह-) पुरस्सरं नृपः, नगरम्, एतदादिकं वर्णयन् इदन्तया इदमस्तीतिरूपेण तेषां मूर्तिमत् दृश्यं दर्शितवान्, प्रत्यक्षां तेषां मूर्तिमिव अक्षरेषु निबद्धवानित्यर्थः। हे वाणि! इयतीं दयां विधेहि यत् अद्य ईश्वरचिन्तया स्वीयां वाणीं पवित्रां करवाणि। प्रार्थनायां लोट्।।२ ।।

**रूपककिरीटपरिणामपत्रपाश्यायुतां**

**काव्यलिङ्गकर्णिकाढ्यचूडामणिकोपमाम्**

**उत्प्रेक्षावतंसतुल्ययोगितातरणिभृतां**

**तद्गुणतरलहेतुहारतो मनोरमाम्।**

---

श्लेषकरकङ्कणविरोधवलयानुगुणां
परिकरकाञ्चीसारनूपुरसुखक्रमाम्
मानस! मुकुन्दचरणारविन्दलग्नामये
मौनमभिनन्दयस्व सूक्तिसुन्दरीमिमाम्।।३।।

रूपकालङ्कार एव किरीटम्, परिणामालङ्कार एव पत्रपाश्या ललाटभूषणम्, 'बाँक' इति व्रजभाषायां प्रसिद्धम्। ताभ्यां युक्ताम्। काव्यलिङ्गरूपकर्णिकया तालपत्रेण आढ्यां च, चूडामणिः उपमा यस्याः उपमारूपचूडामणिकाम् इत्याशयः, तां चेति समस्तयोः कर्मधारयः। उत्प्रेक्षैव अवतंसः कर्णपूरः, तुल्ययोगितैव तरणिः, कर्णभूषा 'तरौना' इति भाषायां प्रसिद्धः। ताभ्यां भृताम्। तद्गुणालंकार एव तरलः मध्यमणिः यस्मिन्नेवंविधेन हेत्वलंकाररूपेण हारेण मनोरमाम्। श्लेष एव करयोः कङ्कणस्थानीयः विरोधालंकारश्च वलयानुगुणः वलयसदृशः यस्याः ताम्। परिकररूपया काञ्च्या, सारालंकाररूपेण नूपुरेण च सुखकारकः क्रमो यस्यास्ताम्। अये मानस! इमाम् एवं प्रकारेण अलंकृताम् सूक्तिरूपां सुन्दरीं मुकुन्दचरणारविन्दलग्नाम् मौनं तूष्णीम् अभिनन्दयस्व। अलंकृतापि सूक्तिर्यदि भगवच्चरणारविन्दलग्ना भवेत् तदैवाभिनन्दनयोग्या, नान्यथेत्याशयः।।३।।

सदनसमाजसुहृत्सम्बन्धिषु दत्तं पुरा
श्रीपतिपदाब्जे मनोवित्तं विभजेऽधुना
मानसमिदं मे नृपश्रीनये निविष्टमभूत्
प्रीणये तदेतत् प्रभुपादपङ्कजेऽधुना।
लालसालवेन धनिकालयेषु लीनोऽभवं
निर्वृतिविहीनो गरुडध्वजं यजेऽधुना
धनिककुविन्दं प्राप्य कीदृशमविन्दं सुखं
पावनपदारविन्दं गोविन्दं भजेऽधुना।।४।।

पूर्वं हि मनोरूपं वित्तं सदनसमाजादिषु विभक्तमासीत्, अधुना तत् श्रीपतिचरणकमले विभजामि। 'विभाग' पदेन, अन्यत्र मनोयोगेऽपि शनैः शनैर्भगवदनुरागः प्रवर्तितः शनैः शनैर्भगवद्विषयकं भावं पुष्णातीति क्रमः सूचितः। इदं मे मनः पूर्वं नृपश्रीः राजलक्ष्मीः तस्याः नये नीतौ मार्गे इति यावत्, राजलक्ष्म्याः संग्रहे वा निविष्टमासीत्। अधुना तदेतत् मनः प्रभुचरणकमले प्रीणयामि। धनिकरूपं कुविन्दं कौलिकम् प्राप्य न किञ्चित्सुखम् अविन्दं प्राप्नवम्, अत एवाधुना गोविन्दं भजे।।

चेतसा विचिन्तयामि चारुचित्रशालां चिरात्
पीलुपर्णशालां बहु मानये व्रजेऽधुना
भावितवान् भूरि नृपनिष्कुटेषु शीतलतां
शीतलतां वीक्षे द्रुमे यमुनाङ्गजेऽधुना।

**सूक्तिभिः समर्थितवान् नानास्थले लोभात्पुरा**
**शोभां ब्रुवे कालिन्दीप्रतीरनीरजेऽधुना**
**धनिककुविन्दं प्राप्य कीदृशमविन्दं सुखं**
**पावनपदारविन्दं गोविन्दं भजेऽधुना।।५।।**

चिरकालात् चेतसा चित्रशालां चिन्तयामि, अधुना व्रजे पीलुवृक्षाणां पर्णकुटीं बहुमानेन पश्यामि। बहुमूल्यां चित्रिताट्टालिकां त्यक्त्वा अधुना व्रजस्थितां पर्णकुटीं साधु मन्ये इत्याशयः। एवमग्रेऽपि। राज्ञां गृहारामेषु शीतलां लतां बहुतरमालोचितवान्, इदानीं यमुनामध्यरूढे द्रुमे वृक्षे शैत्यं पश्यामि। निष्कुटस्थितलतापेक्षया यमुनाजातो वृक्षः शान्तिदायकत्वात् अधिकं शीतलः प्रतीयते इत्याशयः। लोभवशात् अन्येषु नानास्थलेषु पूर्वं निजसूक्तिभिः शोभां साधितवान्, इदानीं यमुनातीरगते नीरजे कमले शोभां वदामि।।५।।

**कोऽप्ययं कुबेर इति कृपणमपीडितवान्**
**पीडितवान् सत्यमिति हृदि विलजेऽधुना**
**ललितलुलितलापैर्लालसालवान्धोऽभवं**
**वाग्विभवं नैक्षिषीति दोषमाभजेऽधुना।**
**काव्यगवीगुम्फं पुरा पङ्किलमकार्षं हन्त**
**तं किल पुनामि पयसीशपादजेऽधुना**
**धनिककुविन्दं प्राप्य कीदृशमविन्दं सुखं**
**पावनपदारविन्दं गोविन्दं भजेऽधुना।।६।।**

कृपणमपि पुरुषम् 'अयं कोऽपि कुबेरः' इति अयं ईडितवान् श्लाघितवान्। अतएव अहं सत्यं पीडितवान्, मया सत्यस्य हिंसा कृतेति अधुना हृदि विलज्जे। 'ओलजी ओलस्जी' व्रीडायाम्। कविताकरणे ललितलुलितेत्यादिभिः लापैर्वचनैः उपलक्षितः अहं लालसाया लेशेनापि अन्धः अभवम्, वाग्देव्याः वैभवम् अहं न अद्राक्षम् इत्यधुना दोषं स्वीकरोमि। अतएव वाण्या वैभवस्य दुरुपयोगं कुर्वन् लालसान्धोऽहं काव्यवाणीगुम्फं मलिनमकार्षम्, अद्य तं गुम्फम् ईशपादजे पयसि विष्णुचरणजले गोविन्दगुणगीतिगङ्गायाम् पुनामि।।६।।

**मनसि निपीड्यसे प्रभूतपरितापाकुलो**
**दुर्जनप्रलापा अपि बाधन्ते मनागिमे**
**धावसि धनाढ्यगृहे कामं कणयाची भवन्**
**लालसापिशाचीजातपातकपचेलिमे।**
**हंहो सुखवाञ्छव्यग्र! शंसतोऽपि शान्तिपथं**
**कथय कथं न वचः कर्णयोः करोषि मे**

**भृशमपमानदुःखदावानलदह्यमान**

**मानस! मुकुन्दपदमानसमुपेहि मे।।७।।**

लालसापिशाचीसकाशाज्जातं यत्पातकं तेन पचेलिमे लालसापातकपरिपाकोन्मुखे धनाढ्यगृहे सुखवाञ्छाव्यग्र हे मानस! शान्तिपथं शंसतः सूचयतः अपि मे वचः कर्णयोः कथं न करोषि इति कथय। अपमानस्य दुःखरूपेण दावानलेन दह्यमान हे मम मानस! मुकुन्दचरणरूपं मानससरोवरम् उपेहि उपगच्छ। दह्यमानस्य यथा मानससरोवरं सुखाकरं तथा गोविन्दचरणरूपं सरः इत्यर्थः।।७।।

**क्षिपसि सुभाषितानि सूरिजनश्रव्याण्यहो**

**द्रव्यार्जनलालसोऽनभिज्ञेष्वधरोत्तरम्**

**भूमिगृहारामार्थेषु रात्रिंदिवमाहिण्डसे**

**मण्डयसे हन्त विमतान्यपि निरुत्तरम्।**

**उपरि तु मञ्जुनाथ साधुतां समर्थयसे**

**किमिति कदर्थयसेऽधीतं शास्त्रविस्तरम्**

**सूनुसुखसद्मेच्छयाऽऽच्छादय न छद्मेदृशं**

**गोविन्दाङ्घ्रिपद्मे मनो मोदय निरन्तरम्।।८।।**

अर्जनलालसः त्वं सूरिजनश्राव्याणि सुभाषितानि अनभिज्ञेषु क्षिपसि। अनभिज्ञेषु मर्मस्पृक्सूक्तिश्रावणं केवलं इतस्ततः प्रक्षेपणमेवेति 'क्षिप्' धातुना व्यज्यते। विरुद्धानि मतान्यपि निरुत्तरम् उत्तरम् अप्रदायैव समर्थयसे। सुतादीनामिच्छया ईदृशं कपटं न आच्छादय गोपय।।८।।

**यस्यास्तीरसीमनि विभाति भूरिशान्तिः कापि**

**लभ्यतेऽथ विश्रान्तिर्यदन्तर्विधुतापदम्**

**स्पर्शतोऽपि यस्याः परिपूताः पुरुपापिनोऽपि**

**पूर्णपरितापिनोऽपि याताः सुखसम्पदम्।**

**पावनपरमहंसाः प्रीता यत्पुलिनपथे**

**पुण्यवन्नराणां या ह्युपेयते परं पदम्**

**किं क्रन्दामि मन्दतया, विन्दामि न केन मनाग्**

**गोविन्दाङ्घ्रिकञ्जमधुमन्दाकिनीमुन्मदम्।।९।।**

यस्याः अङ्घ्रिकञ्जमधुमन्दाकिन्याः तीरे कापि (अनिर्वचनीया)। यदन्तः यस्या मन्दाकिन्याः अन्तः विधुतापदं दूरीकृतापत्ति यथा स्यात्तथा विश्रामो लभ्यते। हंसा योगिनो मरालाश्च। या हि मन्दाकिनीं पुण्यवतां नराणां परमं पदम् उपेयते स्वीक्रियते। तां गोविन्दचरणकमलजां मकरन्दमन्दाकिनीम् उन्मदम् उत् उच्चैः मदः हर्षो यस्मिंस्तथा किमिति न विन्दामि?।।९।।

( २ )

## मानस-निवेदना

**दीव्यत्स्वपि दिग्गजेषु निःस्पन्दो य आसीत्सदा**

**शैलमिमं दोष्णा यो दधार व्रजभीनुदम्**

**यस्य पदपङ्केरुहमञ्जुमकरन्दो बत**

**भूरिभक्तवृन्दोन्मदमादधात्यरुंतुदम्।**

**भक्तजनानन्दो यो हि हिन्दोलाधिरोहसुखैः**

**काङ्क्षति कलिन्दोद्भवतटिनीतटेऽम्बुदम्**

**मानसमिलिन्दोचितचारुचरणारविन्दो**

**गोविन्दो हसन्मुखारविन्दो दिशतान्मुदम्।।१०।।**

यः गोवर्द्धनशैलः दिग्गजेषु दीव्यत्स्वपि क्रीडत्स्वपि निःस्पन्द आसीत्, व्रजभीनुदं व्रजभयदूरीकारकम् इमं गोवर्द्धनशैलं यः दोष्णा भुजेन दधार। यस्य गोविन्दस्य पदकमलमकरन्दः अरुंतुदं मर्मस्पर्शि यथा स्यात्तथा भूरिभक्तवृन्दानाम् उन्मदं हर्षम् आदधाति। भक्तजनान् आनन्दयति यः सः हिन्दोलाधिरोहणसुखकारणेन। सुखैरिति हेतौ तृतीया। कालिन्दीतटे अम्बुदं काङ्क्षति। यः कृष्णो दोलाधिरोहणसुखार्थं यमुनातटे मेघं वाञ्छति, मेघे वर्षत्येव तस्यानन्द इत्याशयः।।१०।।

**यत्पदपयोजमधुबिन्दोर्माधुरीभिः सार्द्ध-**

**मिन्दोरपि साधुसुधास्यन्दो न धरेत माम्**

**येन पुरा पापिनोऽपनीता भवबन्धोषिता**

**दीनमिमं दोषैरेष किं वा प्रहरेत माम्।**

**मन्दोऽस्ययि मञ्जुनाथ किं दोलितचित्तो भासि**

**स्वच्छन्दोऽवगच्छन्निदं लोके विहरेत माम्**

**सर्वसुखसंदोहोपचायिचरणारविन्दो**

**गोविन्दो गभीरभवसिन्धोरुद्धरेत माम्।।११।।**

यस्य गोविन्दस्य पदकमलमधुबिन्दोः माधुर्यैः सह इन्दोः सुधास्यन्दोऽपि माम् शोभाम् न धरेत् पदकमलस्य एकस्य मधुबिन्दोर्माधुर्येण सार्द्धं चन्द्रसुधानिर्झरस्यापि साम्यं नास्तीत्याशयः। येन पूर्वम् भवबन्धपतिताः पापिनः अपनीताः उद्धृताः, एषः अयं गोविन्दः दोषैः दोषकारणेन किं मां दीनं प्रहरेत् ताडयेत्? अपि तु नेत्याशयः। हे मञ्जुनाथ! त्वं मन्दः किं संशयितचित्तोऽसि? अहं तु इदम् अवगच्छन् लोके स्वच्छन्दः सन् अत्यन्तं विहरामि किं जानन्, तदाह- सर्वसुख-समूहस्य उपचायकं वर्द्धकं चरणारविन्दं यस्य सः गोविन्दः गभीरात् भवसागरात् माम् उद्धरेत।।११।।

**गौणं गृणन् गोविन्दस्य गुम्फितगुणानुवाद-**
**मन्यग्राम्यगीतान्येव गायसि गुरुस्वरे**
**साधुस्वरमाधुरीमुपायसि पिकस्वरेषु**
**वेणुरवे विष्णोर्न तां विन्दसि विकस्वरे।**
**मञ्जुनाथ मधुरमुदीक्ष्य मोदमानो यासि**
**दृष्टिं न ददासि मुदा जातु जगदीश्वरे**
**साधारणसौख्यकृते मा धावस्व मूढ! मुधा**
**राधारमणाङ्घ्रिकञ्जमाधारीकुरुष्व रे।।१२।।**

गुम्फितं कवितया निबद्धं गोविन्दस्य गुणानुवादं गौणं यथा स्यात्तथा गृणन् गायन् त्वम् अन्यानि ग्राम्यगीतान्येव नायिकानगरवर्णनादीनि गुरुस्वरे महति स्वरे गायसि। कोकिलस्वरेषु उत्तमस्वरस्य माधुर्यम् उपायसि (लभसे जानासि वा)। विकस्वरे विकासशालिनि कृष्णस्य वंशीरवे तां माधुरीं न विन्दसि। मधुरं किञ्चिदपि वस्तु वीक्ष्य प्रसन्नस्त्वं तत्समीपे यासि, जगदीश्वरे (यो हि माधुर्याणां परा काष्ठा) तस्मिन् दृष्टिं न ददासि।।१२।।

**मोदमयमञ्जुलतामेवमवलोक्य यस्य**
**मेदुरमृगाङ्कमञ्जिमानमप्यपासीथाः**
**उन्मीलन्महोत्पलेषु मूढ! मधु मार्गसि किम्**
**मेदिन्याममुष्यां माधुरीं तां न प्रशासीथाः।**
**मञ्जुनाथ माधुरीविमुग्धो महीमाहिण्डसे**
**मोहकमरीचिकायामधुनाप्युदासीथाः**
**माधुरीमभीप्ससि यदीह मञ्जिमाधुरीण**
**मानस! मुकुन्दमुखमाधुरीमुपासीथाः।।१३।।**

यस्य मुखस्य मोदमयीं मञ्जुलतां वीक्ष्य सान्द्रस्निग्धस्य चन्द्रस्य सुन्दरतामपि अपासीथाः दूरीकुर्याः। हे मूढ! फुल्लमहाकमलेषु मकरन्दं किं मार्गसि अन्विष्यसि? अस्यां पृथिव्यां ताम् मुखगताम् माधुरीं न प्रशासीथाः न प्रशंसितुं प्राप्नुयाः। आहिण्डसे निष्फलं भ्रमसि। मोहकमरीचिकाविषये अधुनापि उदासीथाः तटस्थो भवेः। मञ्जिमविषये आ समन्तात् धुरीण श्रेष्ठ हे मानस! यदि माधुरीं वाञ्छसि तर्हि मुकुन्दमुखमाधुरीं सेवेथाः।।१३।।

**दीपितदिनादौ दलदिन्दीवरशोभाहारि**
**प्रणयिपुलिन्दी-जनजीवनमवेक्ष्यताम्**
**अमरविमार्गणीयमञ्जुमकरन्दभरै-**
**र्मुनिमधुपानां मनोमोहकमुदीक्ष्यताम्।**

**सविधमुपागतानां पूर्णपरितापहरं**

**दुर्मदैर्दुरापमिति सपदि समीक्ष्यताम्**

**विन्दसि किमन्यन्मम मानसमिलिन्द मनाक्**

**श्रीगोविन्दचारुचरणारविन्दमीक्ष्यताम्।।१४।।**

यत् चरणारविन्दम् दीपितदिनादौ दीपिते मेघावरणादिशून्यतया प्रकाशशालिनि दिनस्य मुखभागे दलतः इन्दीवरस्य शोभाहारि। प्रणयिनः पुलिन्दीजनस्य गोपीजनस्य यत् जीवनभूतम् अवेक्ष्यतां विचार्यताम्। अमरैरपि प्राप्तुमन्वेषणीयैः मकरन्दसंदोहैः। यत् चरणरूपमरविन्दं समीपागतानां पूर्णतापहरम्, दुर्मदैः अभिमानिभिः च दुर्लभमिति विचार्यताम्।।१४।।

**कुहनाकराले किल कृच्छ्रकलिकाले नृणां**

**भक्तिर्मुक्तिदात्री व्रजपाले निगमर्चेयम्**

**जानतोऽपि चैतज्जडबुद्धेर्जनिर्जीर्णाभव-**

**ज्जातु न विजीर्णा किन्तु जाठरी मदर्चेयम्।**

**भारति! भवद्विभूतितः स्याद्भावना मे मनाक्**

**येन यदुनायकमनोज्ञमूर्तिमर्चेयम्**

**चेतसि चरेच्च चिन्ताचक्राणि विमुच्य वाणि!**

**चारुचक्रपाणिचरणारविन्दचर्चेयम्।।१५।।**

कुहनया कपटेन कराले कृच्छ्रेऽस्मिन् कलिकाले, व्रजपाले कृष्णे भक्तिः नृणां मुक्तिदात्री इति इयं निगमस्य ऋचा वेदवाक्यम्। एतज्जानतोऽपि जडबुद्धेर्मे जनिः जीर्णा जन्म गतप्रायम्। किन्तु जाठरी जठरसम्बन्धिनी मम अर्चा इयं न विजीर्णा। हे सरस्वति! भवद्वैभवादेव मे, किंचिद्विचारो भवेत् येनाहं भगवन्मूर्तिम् पूजयेयम्। किंच हे वाणि! चिन्तायाः चक्राणि आवर्तान् विहाय मे चेतसि भगवच्चरणारविन्दचर्चा इयं चरेत्।।१५।।

**नन्दादिव्रजौकसामभूत् स नूतनानन्दाय**

**पूतनां निमथ्नन् यो हि वक्षसि निषद्य ताम्**

**कंसं ध्वंसमानीयाथ येन शिशुपालोऽकारि**

**कालोदरगामी पुरा योऽगात्पारिषद्यताम्।**

**मुरमवमथ्नता व्यपोथि येन भौमासुरः**

**कौमारमहारि नृपकन्यानां विविद्यताम्**

**दर्पितदनुजवधूवीक्षणेषु वर्षागमो**

**गोविन्दो ममाद्य मनोहर्षायोपपद्यताम्।।१६।।**

यः गोविन्दः पूतनाया वक्षसि निषद्य स्थित्वा तां पूतनाम् निमश्नन् संहरन् नन्दादिव्रजवासिनां पूर्वतो नूतनहर्षायाभूत्। पुरा यः शिशुपालः शापतः पूर्वं स्वस्य पारिषदताम् अगात् सः येन गोविन्देन मृत्यूदरशायी कृतः, इति विविद्यताम् ज्ञायताम्। भौमासुरबन्दीकृतानां नृपकन्यानां येन कौमारं दूरीकृतम् ताः परिणीतवानित्यर्थः। दर्पः संजातो येषां तेषां दनुजानां वधूलोचनेषु प्रावृट्सदृशः, पतिविरहे निरन्तरमश्रुवर्षाकारकत्वात्।।१६।।

**मूर्द्धनि मनोज्ञमणिमञ्जुलमुकुटधारी**
**कुन्तलकलापमनोहारी मुखपद्धतौ**
**चञ्चलानुकारी कटिदेशे भाति पीतपटो**
**मोदमुपयाति गोपनारीजनसंहतौ।**
**मञ्जुनाथ दारुणदवौघपरिहारी सतां**
**भक्तजनमानसविहारी साधुसंगतौ**
**मनसि मुनीनामपि मन्दमन्दचारी चिरात्**
**सोऽयं सुखकारी मे मुरारी रमतां मतौ।।१७।।**

मनोज्ञैः सुन्दरैः मणिभिर्मञ्जुलं मुकुटं धारयति सः मुखपद्धतौ मुखदेशे कुन्तलसमूहेन मनोहरः। चञ्चलानुकारी विद्युत्सदृशः। सज्जनानां दारुणदुःखसमूहं परिहरति तच्छीलः। साधुसंगतौ सत्सङ्गे सति भक्तजनानां मानसे विहरति तच्छीलः। मुनीनामपि मनसि चिरात् अतियत्नोत्तरम् मन्दमन्दचारी शनैः शनैर्हृदये प्राप्तव्यः स मुरारिः मे बुद्धौ रमताम् प्रसन्नतया विहरतु। 'मुरारिः रमताम्' अत्र रेफलोपदीर्घौ बोध्यौ।।१७।।

**मुक्तामणिमण्डितमुकुटमधिमौलि भाति**
**श्रियमुपयाति कर्णकुण्डलमनायतम्**
**कण्ठे हीरहारावलिरविन्दति शोभामहो**
**सुषमावहोऽयं भाति पीतपटोऽव्याहतम्।**
**मञ्जुनाथ मञ्जुमिमां मूर्तिमवलोकयतो**
**हृदि समुदेति परितोषः कोऽप्यनाहतम्**
**मन्देतरशोभाशालिसुखदपदारविन्दे**
**राधिकागोविन्दे मनो रमतामनारतम्।।१८।।**

मुक्तामणिभिः मण्डितं मुकुटं मौलौ भाति। अनायतं नातिदीर्घं कुण्डलम्। सुषमावहः शोभाकारकः पीतपटः अव्याहतम् अवारितं यथा स्यात्तथा, बाढमिति यावत् भाति। अवलोकयतः मम परितोषः अनाहतं निरन्तरं यथा स्यात्तथा उदेति। मन्देतर (अमन्द) शोभाशालिनी सुखदे पदारविन्दे यस्य तस्मिन्। श्रीराधिकायुक्ते गोविन्दे।।१८।।

( ३ )

## रूप-माधुरी

### आशिखानखम्

विलुलितकुन्तलेषु मुकुटमुदेति मुदे
सा काचिन्मुखश्रीर्वहेद्राकापतेरल्पताम्
कण्ठे वनमाला कर्णमध्ये कर्णपूरं भाति
केयूरं दधाति भुजे शोभावधूतल्पताम्।
पीताम्बरशोभिनी निवीता रत्नकाञ्ची किञ्च
पदयोरुदीता नूपुरश्रीर्यात्यनल्पताम्
मनसि मनोभुवोऽपि पूर्णपरिक्षोभावहा
श्रीगोविन्दशोभा मनोलोभायोपकल्पताम्।।१९।।

मुदे आनन्दाय मुकुटम् उदेति शोभते। राकापतेश्चन्द्रस्यापि अल्पतां न्यूनतां वहेत्। भुजे केयूरम् अङ्गदः शोभारूपायाः वध्वाः पर्यङ्कतां दधाति। शोभाया निवास इत्यर्थः। पीताम्बरोपरिशोभिनी रत्नमण्डिता काञ्ची निवीता धारिता। पदयोः उदीता उद्भूता ('ईङ् गतौ' क्तः) नूपुरशोभा अनल्पताम् अधिकताम् याति। सौन्दर्यातिशयात् कामदेवस्यापि क्षोभकारिणी गोविन्दशोभा।।१९।।

हंस इव कञ्जे हीरहंसको विभाति पदे
विद्युद्द्युतिशंसकोऽथ पीतपटो वीक्ष्यताम्
वक्षसि विशाला वनमाला मञ्जु राजतेऽथ
रत्नरुचिजालावहं कुण्डलमुदीक्ष्यताम्।
रोलम्बावलीव भाति बाढमलकावलीय-
मुपरि महार्हमणिमुकुटमपीक्ष्यताम्
सौभगेन साकं सतां सर्वसुखसाधा सदा
राधारमणस्य रूपमाधुरी निरीक्ष्यताम्।।२०।।

कमले यथा हंसस्तथा चरणे हीरकनिर्मितः पादकटको भाति। तदुपरि विद्युत्कान्तिसूचकः। रत्नरुचिजालावहम् रत्नानां कान्तिसमूहस्य धारकम्। रोलम्बो भ्रमरः। सौभाग्येन सह सज्जनानां सर्वसुखसाधिका सर्वसुखानां साधः साधनं यया सा।।२०।।

---

(४)

## मनःप्रबोधना

**मन्ये महिमानं यस्य गोवर्द्धनधारणेन**
**सव्रीडे मघोनि नमतीह नतापीडेऽहम्**
**पापिनोऽपि पूताः पुरा लब्ध्वा क्षणच्छायां यस्य**
**यायां किं न शान्तिं हृदि प्राप्तपूर्णपीडेऽहम्।**
**शुक इव गीर्णगिरा राजपदरूढोन्मदान्**
**मूढो वर्द्धयामि कियद् गूढो गृहनीडेऽहम्।**
**मानसमिलिन्दमोदिमञ्जुमकरन्दवहं**
**श्रीगोविन्दसुन्दरपदारविन्दमीडेऽहम्।।२१।।**

गोवर्द्धनगिरिधारणेन सव्रीडे सलज्जे अतएव नतापीडे नम्रमुकुटे मघोनि इन्द्रे इह नमति सति अहं यस्य चरणारविन्दस्य महिमानं मन्ये जानामि। यस्य चरणस्य क्षणं छायां लब्ध्वा पापिनोऽपि पूताः। अतः प्राप्तपूर्णा पीडा येन ईदृशे हृदये अहं शान्तिं किं न यायाम्- अपि त्ववश्यं शान्तिं प्राप्नुयाम्। गृहरूपे नीडे गूढः निलीनः मूढोऽहं शुक इव गीर्णया अभिभूतया वाण्या राजपदरूढान् अतएव उन्मादान् जनान् कियद् उत्कर्षयामि। मानसरूपभ्रमरस्य मोदकं मञ्जुं मकरन्दं वहति तादृशं गोविन्दस्य पदारविन्दम् ईडे स्तवीमि।।२१।।

**साधनबलेन या विमुक्तेर्जिह्मजल्पनास्ति**
**कष्टकरकल्पना करालेऽस्मिन् कलौ कासौ?**
**भूरिभवबन्धविनिकन्दनस्य शक्तिरहो**
**नीतबहुयूपे यागरूपेऽप्यप्रभौ कासौ?**
**मञ्जुनाथ दूरमन्यसाधनानि मुञ्चेः सखे**
**चेतनाद्य संचेतति ते प्रमावनौ कासौ?**
**पारं भवसिन्धोरनिबन्धनेन नूनं नये-**
**न्नन्दनन्दनेति नामनिष्कीर्तननौकासौ।।२२।।**

सत्कर्मादिसाधनबलेन मोक्षस्य या जिह्मा कुटिला जल्पना कथनम् अस्ति, कराले अस्मिन् कलौ असौ कष्टकरकल्पना का? कलिकाले इयं कष्टकल्पना अकिंचित्करीत्यर्थः। नीतबहुयूपे बहुतरयज्ञस्तम्भसहिते अपि अप्रभौ भवबन्धच्छेदनासमर्थे यागरूपे असौ खड्गे बहुजन्मबन्धच्छेदनस्य का शक्तिः? अपि तु न काचित्। यज्ञरूपः खड्गो भवबन्धच्छेदने अशक्त इत्याशयः। प्रमावनौ यथार्थज्ञानस्य भूमिभूते ते तव असौ प्राणे अद्य का चेतना बुद्धिः संचेतति? 'यथार्थज्ञानभूमौ ते आत्मनि ज्ञानादिभिरन्यसाधनैर्मुक्तिर्भवेत्' इति केयं बुद्धिर्जातेत्याशयः। नन्दनन्दनेत्यादि नामसंकीर्तनरूपा नौका अप्रतिबन्धेन भवसिन्धोः पारं नयेत्।।२२।।

मञ्जुनाथ पार्थिवपुरादिकं प्रशंसस्येव
निर्भरनृशंस! निम्ननामान्यपि नित्यं शंस
केशव कलिन्दजाविहारिन् कृष्ण केलिकन्द
कैटभनिकन्द बलकीलितकरालकंस।
वासुदेव वृन्दावनवासिन् वनमालिन् विधो
वेणुवाद्यशालिन् विश्वरूप वृष्णिजावतंस
मारवदमन्द मुरलीधर मुराभिकन्द
माधव मुकुन्द मुनिमानसमनोज्ञहंस।।२३।।

केलिकन्द आनन्दकन्देत्यर्थः। विधो विष्णो! वृष्णिजावतंस यादवेषु भूषणायित। मारवदमन्द कामदेववत् सुन्दर। मुनिमानसरूपस्य मानसस्य सरोवरस्य हंस।।२३।।

माधुर्यातिमुग्धमुनिमानसमिलिन्दे यत्र
मोदमधिविन्देदिन्दिरापि लग्नलालसम्
साभिलाषमाश्रितममन्दमकरन्देच्छया
वृन्दारकवृन्देनापि यस्य पदसारसम्।
मञ्जुनाथ जीवसि जनानां स्तुतिनिन्दे गृण-
न्नुत्तरं तु किं देक्ष्यसि देवाग्रे ससाहसम्
गोविन्दे गिरापतिगवेष्यचरणारविन्दे
मन्युमील्यमानमभिनन्देन्मम मानसम्।।२४।।

यत्र पादसारसे लग्ना लालसा यस्मिन् कर्मणि साभिलाषम्, इन्दिरा लक्ष्मीः अपि मोदं प्राप्नुयात्। सारसम् कमलम्। देवाग्रे भगवत्समक्षम् (अन्ते) साहसमवलम्ब्य किमुत्तरं देक्ष्यसि दास्यसि? मन्युना दुःखेन मील्यमानं दूयमानं मानसम् अभिनन्देत् हृष्येत्।।२४।।

(५)

## सौन्दर्य-सुषमा

### (भ्रुकुटी)

यस्याः क्षणवल्गनेन गोपीनिवहाय निजे
चापे शररोपी स्मरोऽसूयेद् गृहराजते
यस्याः किंचिदञ्चनेन वञ्चितहृत्पङ्केरुहा
लेभे शर्म पर्यङ्केऽपि रुक्मिणी न राजते।

**शक्तिं भ्रुवो मञ्जुनाथ मोहिनीमुदीरयामि**

**मोहिनीस्वरूपे मृडो मुह्येद् व्रजराज! ते**

**मानिनीसमाजमौलिमुकुटीकृताज्ञा हरे!**

**भ्रुकुटीच्छलेन कामसुकुटी विराजते।।२५।।**

यस्याः भ्रुकुट्याः क्षणं वल्गनेन चलनेन गृहराजते गृहे शोभमानाय (शत्रन्तस्य चतुर्थी) गोपीनिवहाय स्वचापे शररोपी शरसंधायकः स्मरः असूयेत् कुप्येत् (क्रुधद्रुहेति चतुर्थी)। अञ्जनेन चलनेन। राजते रजतनिर्मिते पर्यङ्के। हे मञ्जुनाथ ते भ्रुकुट्याः शक्तिं मोहनशीलां वदामि, यतः हे व्रजराज! ते मोहिनीस्वरूपे मृडः शिवः मुह्येत्। मोहिनीरूपे त्वद्भ्रुकुटिचलनेन शिवोऽपि मोहितस्ततस्ते भ्रुवः शक्तिं मोहनशीलां वदामीत्याशयः। मानयुक्तानामपि महिलानां समाजेन मौलेः मुकुटवद् भूषणीकृता आज्ञा यस्याः सा, कामस्य सु सुभगा कुटी निवासस्थानम्। 'राजते' पदस्य चतुर्धा निर्वाहः प्रेक्ष्यः।।२५।।

## (लोचने)

**मध्यगमिलिन्दमपि मन्दीभवेत् कुन्दमिह**

**दीनमिदमिन्दीवरमुपमां न विन्दते**

**लज्जितमिव मज्जति पयस्सु मीनयुग्ममहो**

**हीनकान्ति खञ्जनमिथुनमवकन्दते।**

**दनुजकुलानि विकलानि ययोः शोणरुचा**

**कोणमप्यवाप्य ययोर्मुक्तिरपि वन्दते**

**मञ्जुमृगरोचनेऽप्यलभ्यरुचिरोचनेन**

**लोचने कुरङ्गमदमोचने मुकुन्द ते।।२६।।**

मध्यगतो मिलिन्दो यस्य ईदृशमपि कुन्दपुष्पं ययोर्लोचनयोरग्रे मन्दीभवेत्। श्वेतं कुन्दं मध्ये भ्रमरश्च कनीनिकास्थानीयः, तथापि इदं नेत्राग्रे पराजितं भवतीत्याशयः। इन्दीवरमपि उपमां साम्यम् न लभते अवकन्दते पराजितत्वात्क्रन्दति। क्रोधवशात् ययोः (नेत्रयोः) शोणकान्त्या दैत्यकुलानि व्याकुलानि भवन्ति। ययोर्नेत्रयोः कोणपाते मुक्तिरपि मनुष्यं चन्दते। भगवत्कृपापाङ्गेन मुक्तिरपि मनुष्यस्य वशगा भवतीत्याशयः। श्यामवर्णे मृगरोचने कस्तूर्याम् अपि अलभ्यया रुच्या कान्त्या रोचनेन शोभया। मृगरोचनतोऽप्यधिकश्यामशोभाकारणात् हरिणगर्वमोचने ते लोचने।।२६।।

## (वंशीरवः)

**निर्भरं निशम्य गृहे प्रणयिपुलिन्दीगणो**

**मन्दीकृतमोहो जहौ कान्तादिककामनाम्**

**यं श्रुत्वैव कालिन्दीयकच्छे व्रजधेनवोऽपि**

**निःस्पृहं नियच्छेयुः स्वभोज्यादिकभावनाम्।**

**मञ्जुनाथ मूर्च्छनासनाथो व्यश्नुवानो व्योम्नि**
**यो वै वनमालिन् वितनोति सुखसाधनाम्**
**नाथ! तदयं शीलितहर्षस्तव वंशीरवो**
**निभृतनिरंशीकुरुतान्मे भववासनाम्।।२७।।**

यं रवं निशम्य गोपीगणो निजवल्लभादिकामनां त्यक्तवान्। स्वभोज्यादेः तृण-भक्षण-जलपानादेः भावनां नियच्छेयुः निरुन्ध्युः। मूर्च्छनाभिः स्वरसंतानविशेषैः सनाथः व्यश्नुवानः व्याप्नुवन् यः रवः शीलितः (लोकानां) हर्षः प्रमोदनम् येन सः। निभृतं यथा यथा निरंशीकुरुतात् निःशेषीकुरुतात्।।२७।।

(६)

## आशंसा

**भक्तभविकाय व्रजभूमौ यो विहारमयन्**
**दीनानुज्जहार स हि कृष्णः केलिकारी मे**
**यो वै गोपशावानवति स्म दीप्तदावानला-**
**च्चिन्तयेत्स किं न भवचिन्तां चित्तचारी मे?**
**मञ्जुनाथ कस्माद् विमनायसे विमूढतया**
**दैन्यमवयाति स हि गोवर्द्धनधारी मे**
**नीरदानुहारी पापपुञ्जपरिहारी वृन्दा-**
**विपिनविहारी स हि भूयाद् भयहारी मे।।२८।।**

भक्तानां भविकाय कल्याणाय विहारम् अयन् गच्छन्, विहरन्निति यावत्। मे केलिकारी आनन्दकारी गोपशावान् गोपबालाकान्। स चित्तचारी नित्यं मनसि वसन्नपि मे भवजनितचिन्तां किं न चिन्तयेत्? अपि त्ववश्यं विचारयेदित्यर्थः। अवयाति जानाति। नीरदम् अनुहरति अनुकरोति सः।।२८।।

**गोवत्सापहारात्स स्वयं भूमनि दार्ढ्यमयन्**
**लज्जितः स्वयम्भूरप्यपप्तत् पदसारसे**
**साक्षाल्लोकलक्ष्मीः पादसंवाहनशीलाभव-**
**च्छेषोपरि यस्मिन् स्वापलीलालवलालसे।**
**मञ्जुनाथ लीलयैव नन्दाङ्गनचारी यो हि**
**कल्मषापहारी नृणां कीर्तनकथारसे**
**स्वेच्छयावतंसीकृतचारुबर्हिपिच्छो मम**
**कंससकुलध्वंसी सोऽनिशं सीदतु मानसे।।२९।।**

गोवत्सानामपहरणात् (हेतोः) भूमनि महत्त्वे स्वयं दृढतां गच्छन् अत एवं लज्जितः स्वयम्भूः ब्रह्मापि यस्य पदसारसे पदकमले अपप्तत् पपात्। यस्मिन् (कृष्णे) शेषस्योपरि स्वापलीलालवलालसे शयनेच्छांशवशीभूते सति लोकलक्ष्मीः पादसंवाहनशीला अभवत्। कीर्तनकथारसे कीर्तनकथाया आनन्दे भवति सति यः नृणां कल्मषापहारकः। सीदतु तिष्ठतु।।२९।।

(७)

## कारुण्यम्

**गाढोन्मदगोत्रभिदो गर्वं गञ्जयिष्यन् भवान्**

**ग्रावपतिगोवर्द्धनमग्रहीन्न किंतमाम्**

**गोकुलानि गोपान् गजगामिनीश्च गोपितवान्**

**गालितवान् गीर्वाणेशगौरवगतिं समाम्।**

**गोपायसि गाढमनुग्राही गजराजं गुरो!**

**गृध्रगुहगणिकास्वपीह गाहसे क्षमाम्**

**गहनगभीरभवगर्तगृह्यमाणमिमं**

**श्रीगोविन्द! गीतगुणगरिमन्न गर्ह माम्।।३०।।**

अत्यन्तोन्मदस्य गोत्रभिदः इन्द्रस्य। ग्रावपतिं गिरिराजं गोवर्द्धनं भवान् किंतमाम् किम् न अग्रहीत्? अपि त्ववश्यमग्रहीदित्यर्थः। गजगामिनीः गोपस्त्रियः। गीर्वाणेशस्य इन्द्रस्य समां सर्वां गौरवगतिं गौरवसरणिम् गालितवान् ध्वस्तवान् गलधातोर्णिजन्तात् क्तवतुः। गाढमनुग्राही सुभृशं दयाकारी गहनेन कलिलतया दुर्निर्गमेन गभीरेण च भवगतेन गृह्यमाणं निगडितम् इमं माम्। गीतं गुणगरिमा यस्य तत्संबुद्धौ, हे गोविन्द! मां न गर्ह निन्द, किंतु दयया उद्धरेत्यर्थः।।३०।।

**माधव मुकुन्द मधुसूदन मुरारे हरे**

**दामोदर देव दनुजारे न जहाहि माम्**

**कीर्तिसुताकान्त कंसकालियविमर्दिन् कृष्ण**

**कैटभनिकन्दिन् कमलापतेऽनुयाहि माम्।**

**गोपीनाथ गोकुलेश गौर गरुडध्वज हे**

**श्रीगोविन्द गोवर्द्धनधारिन्नवयाहि माम्**

**पीताम्बर पद्मनाभ पूतनानुकम्पिन् प्रभो**

**पुण्डरीकनेत्र भवभोगात् परिपाहि माम्।।३१।।**

माम् अवयाहि जानीहि।।३१।।

वृन्दावनमेत्य नित्यनन्दाङ्गनवासी यो हि
भूरिभक्तवृन्दानामसाधयत् सहायताम्
गोपप्रमदालिं दीप्तमदनामपास्य ययौ
कालिन्दीतटेऽस्याः परिचेतुं वीतमायताम्।
मञ्जुनाथ नित्यं मुनिमानिनामलभ्योऽप्यभूद्-
यो वै सुखलभ्यो भूरिभक्त्या गुणं गायताम्
नीलजलदालीसममञ्जुमूर्तिशाली सदा
सोऽयं वनमाली प्रतिपाली मम जायताम्।।३२।।

नित्यं नन्दाङ्गने नन्दगृहे वसति तच्छील:। कालिन्दीतटे उद्दीप्तकामां गोपप्रमदालिं गोपीमण्डलीम् अपास्य विहाय अस्या: गोपीमण्डल्या: वीतमायतां निष्कटपतां परिचेतुं परीक्षितुं ययौ अन्तर्दधौ। आत्मानं मुनिं मन्यमानानां साधकानां नित्यम् अलभ्योऽपि य: भक्त्या गुणं गायतां भक्तानां सुखलभ्य: अभूत् प्रतिपाली प्रतिपालक:, पातेर्णिनि:।।३२।।

नीरधौ निमज्जन्तं जुगोप गजराजं यो हि
येन गुहराजं प्रति दत्ता दृग् विमायिनी
करुणा कृताभून्महामलिनेऽप्यजामिलेऽपि
गृध्रे दुरिताविलेऽपि यत्कृपा ह्युपायिनी।
पूतनापि पूता पुण्यकणिकापि नासीद्यत्र
गणिकापि क्लृप्ता कापि दैवतातिशायिनी
निस्सहायनिर्बलनिरीहजनाधारे मम
देवकीकुमारे रतिरास्तामनपायिनी।।३३।।

विमायिनी निष्कपटा दृक् कृपादृष्टि:। दुरितै: आविले मलिने गृध्रेऽपि, यस्य कृपा हि उपायिनी उपगन्त्री। दैवतातिशायिनी देवेभ्योऽपि उत्कृष्टा। क्लृप्ता कृता। अनपायिनी अव्यया रति: प्रीति: अस्तु।।३३।।

(८)

## जीवन-सन्ध्या

ज्ञानमक्षराणां किंचिदासीद्दयया ते पुरा
जीवनप्रभाते यतो ज्योतिरुद्भवेद् विभो!
तदनु कवित्वकला प्रौढिर्ग्रन्थनिर्माणादि
यस्मात्साधुसम्मानादि सर्वं सम्भवेद्विभो!

साम्प्रतं त्वजानन्नुपरामसमयं मे जनाः
किं मे लोकरञ्जनादिदम्भैः सम्भवेद्विभो!
केवलं पदाब्जे तव नित्यमिदं संध्यायामि
जीवनस्य संध्या मम वन्ध्या न भवेद्विभो।।३४।।

जीवनस्य प्रभाते आरम्भे यतो ज्योतिः प्रकाशः कर्तव्याकर्तव्यबोधः उद्भवेत् तादृशम् अक्षराणां ज्ञानं ते कृपयाभवत्। यस्मात् काव्यकलाप्रौढताग्रन्थनिर्माणादिकर्तव्यात्। जना मे उपरामस्य कार्यविश्रमस्य समयमजानन्। अहं कदाचिन्न जाने किंतु जना मां कार्यतो विश्रामस्य योग्यमजानन्। लोकरञ्जनादिरूपैर्दम्भैः पाखण्डैः। संध्यायामि ध्यानं कृत्वा निवेदयामि।।३४।।

(९)

## मनः-प्रमोदः

दीनोद्धारहेतोर्यो हि भूमिमभ्युपेतोऽभवत्
तस्यैव च चेतो वद दीनान् वर्जयेत किम्?
येन परिपूताः पुरा विमुखविरोधिनोऽपि
दीनोद्धरणोऽपि स कठोरतां श्रयेत किम्?
आपामरमेष पर्यचायि कृपासिन्धुरिति
सोऽयं दीनबन्धुरिति विरुदं हरेत किम्?
कर्मपराधीनां मम दृष्ट्वापि च दीनां दशां
दीनानां दयालुर्मयि दीने न दयेत किम्।।३५।।

तस्यैव दीनोद्धारकस्य चेतः किं दीनान् वर्जयेत दूरीकुर्यात् न कुर्यादित्यर्थः। विमुखविरोधिनः अजामिलपूतनादयः। एषः कृपायाः सिन्धुरिति आपामरं पर्यचायि परिचितः। विरुद्धं निजमहिमानम् हरेत त्यजेत्किम्, अपि तु न त्यजेत्। कर्मपराधीनां कर्मणां कारणात्परतन्त्राम्, दीनां दशाम्। दीने मयि किं न दयेत? अपि तु अवश्यं दया कुर्यात्।।३५।।

नित्यं निगमागमनिरूपितस्वरूपमपि
वाचं न स्पृशन्तं मनोनीतं श्रयसे न किम्?
लीलयैव लोकसृष्टिमाविर्भावयन्तं पुन-
स्तामेतां भरन्तं संहरन्तं बुध्यसे न किम्।
गूढं विलसन्तं दृढभक्त्यानुसरन्तं स्वयं
दिव्यद्युतिमन्तं तं ह्यनन्तं कवसे न किम्
सकलचराचरादिचक्रं चालयन्तं चिरा-
च्चेतसि चरन्तं भगवन्तं भजसे न किम्।।३६।।

वेदादिभिर्वर्णितमपि वाचं न स्पृशन्तं वागगोचरम्। मनोनीतं मनोद्वारा ध्यातम्। तामेतां सृष्टिम्। सर्वत्र गूढं वर्तमानमपि भक्तिबलात् स्वयं भक्ताननुसरन्तम्। कवसे कविताभिर्वर्णयसि।।३६।।

**पश्य पयःपान एव पूतना प्रयाता दिवं**
**[1]धातापि च पात्रीकृतो विस्मयप्रतोदानाम्**
**कालियफणालिरुपयाता यस्य नृत्यपदं**
**जाता यमुनापि खनिर्नित्यं निर्विषोदानाम्।[2]**
**दावानलपाता[3] यो हि पाता[4] गोपगोष्ठगवां**
**विपिने विधाता वेणुवादनविनोदानाम्**
**पुलिने पुलिन्दीनां[5] प्रसादसंविधाता स हि**
**रासरङ्गराता[6] सम्प्रदाता मे प्रमोदानाम्।।३७।।**

१. वत्सादीन् हरन् ब्रह्मापि नानाविस्मयरूपाणां प्रतोदानां तीक्ष्णलोहाग्रचालनदण्डानाम् (हार्दिकपीडाजननात्) पात्रीकृतः। २. यमुना निर्विषाणां जलानां खनिः आकरः जाता। ३. पानकर्ता। ४. रक्षकः। ५. आभीरयोषितां प्रसादस्य प्रसन्नतायाः संविधानकर्ता। ६. रासक्रीडायाः रङ्गस्थलस्य राता लोके प्रख्यापकः।।३७।।

**घोरसङ्कटेषु परिपाता यो निरीहनृणां**
**सम्मुखेऽभियाता हेलयैव दुष्टदुर्हृदाम्[1]**
**लोकपरित्राता दीर्घदैत्यदुरुपद्रवेभ्यो**
**दाता दीनदुर्गतेभ्यो लक्ष्मीणां निरापदाम्।**
**भुवनभरेऽस्मिन् नित्यनिर्मातावतारान्[2] बहून्**
**ध्याता दीनदुःखान्यभिवीक्ष्य धरां[3] निर्मदाम्**
**धाता धर्मसेतोः संविधाता जगन्नाटकस्य**
**विश्वेषां विधाता मे निधाता सर्वसम्पदाम्।।३८।।**

१. दुष्टानां क्रूरहृदयानां च सम्मुखे निर्भयमाक्रमिता। २. अवतारान् निर्माता, अवताराणां कर्ता, तृन्। ३. दीनां धरां वीक्ष्य दीनजनानां दुःखानि ध्याता, दुःखानां विचारकः तृन्।।३८।।

( १० )

## सान्त्वना

( देवघनाक्षरी )

कुत्रचन कर्मसु प्रवृत्तिमनुमोदयसे[१]

क्वचन निवृत्तिमुपदिशसि मनसि मनसि

रात्रिंदिवं गेहधनधान्यसुखलिप्सापरः

सर्वं जगन्मिथ्येति प्रगल्भसे वचसि वचसि।

मञ्जुनाथ जाने तव शास्त्रकथाकन्थामिमां

चेतयसे किं मां स्वयं मुह्यसि रहसि रहसि

नूनमवधानं देहि संदेहे न मज्ज मनाक्

गोविन्दे निरस्तसर्वसंदेहो भवसि भवसि।।३९।।

१. अहरहः संध्यामुपासीत, कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः इत्यादिना। २. कर्माणि बन्धकराणि अतएव तेभ्यो निवर्तेत इति मनसि मनसि प्रत्येकजनस्य मनसि उपदिशसि। अहर्निशं स्वयं गृहादिसुखलालसोऽपि, आदितः जगदिदं मिथ्येति प्रत्येकवचने प्रगल्भसे धार्ष्ट्यं दर्शयसि रहसि रहसि प्रत्येकगुह्यस्थले स्वयं मुग्धो भवसि, मां च चेतयसे प्रबोधयसि। गोविन्दं प्राप्य ते सर्वेऽपि संदेहा निरस्ताः स्युः। निरस्तसन्देहो भवसि, पुनर्भवसि इति दार्ढ्यसूचनाय।।३९।।

( ११ )

## प्रार्थना

जानीमस्तमेतमिति वेदज्ञा विदन्ति हृदा

यज्ञाः स्वस्य घोषयन्ति यत्प्राप्तावुपायताम्

सोऽस्माभिर्निबोध्य इति वेदान्तिप्रगल्भगिरो

यान्ति मुदं योगिनो वदन्तो यदभिज्ञताम्।

यत्प्राप्तेर्वहन्ति मदं तन्त्रमन्त्रसक्ता बुधाः

किंतु सर्वमेतन्मुधा यस्य विनोदारताम्

सर्वजगन्मोहनैकमायामन्त्रशाली महा-

नद्भुतेन्द्रजाली वनमाली प्रतिभासताम्।।४०।।

'तमेतं भगवन्तं वयं जानीमः' इति वेदज्ञा हृदयेन जानन्ति, वस्तुतस्तु नैवमित्यर्थः। यज्ञाः यस्य भगवतः प्राप्तौ स्वस्य उपायतां घोषयन्ति, यज्ञैर्भगवान् लभ्य इति। वेदान्तिनां प्रगल्भाः साहसपूर्णाः गिरः, न तेऽपि बुध्यन्ते। यस्य ब्रह्मणः अभिज्ञतां ज्ञातृताम्। यस्य उदारतां दयालुतां विना उपर्युक्तं सर्वे

मुधा। स एव स्वयं यदा कृपां दर्शयति तदैव वेदादिभिरपि गम्यः 'यमेवैष वृणुते तेन लभ्यः'। अस्माभिर्ज्ञातः, अस्माभिर्लब्ध इति सर्वजगतां मोहने एकः अद्वितीयो मायामन्त्रसम्पन्नः। प्रतिभासतां नः प्रकाशताम्।।४०।।

**प्रेमविवशो यो न विषेहे हन्त दीनां दशां**

**नन्दप्रभृतीनां सुतस्नेहात् स्मरतां सदा**

**दीनपालकेन बत येन विनिवर्तितानि**

**सर्वसंकटानि भक्तिभावाद् भजतां सदा।**

**यो वै रघुवंशे लोकरक्षणाय रेमे पुरा**

**सोऽद्य धृतक्षेमे हृदये मे वर्ततां सदा**

**बाणीकृतरोषदृशा द्राणीकृतदैत्यगणो**

**वाणीविसरे मे चक्रपाणी रमतां सदा।।४१।।**

पुत्रस्नेहात् स्मरतां नन्दप्रभृतीनां दीनां दशाम्। धृतं क्षेमं कल्याणं येन ईदृशे मम हृदये। बाणत्वेन प्रयुक्तया कोपदृष्ट्या, पलायितीकृताः द्राविता इत्यर्थः दैत्यगणाः येन सः। चक्रपार्णिमे वाणीविसरे वाचां प्रवाहे रमताम्। चक्रपाणिः रमताम्, रेफलोपद्दीर्घौ।।४१।।

**भूमिवलयं तं दुष्टदैत्यैर्भारवन्तं वीक्ष्य**

**लोकेऽवतरन्तं शक्तिमन्तं शीलयामहे**

**शकटं हरन्तं पावयन्तं पूतनां तामथ**

**दावाग्निं पिबन्तं बलवन्तं चिन्तयामहे।**

**कालियफणासु नृत्यवन्तं विहरन्तं वने**

**कंसमुद्धरन्तं केशवं तं कामयामहे**

**सर्वतो लसन्तं विलसन्तं व्रजगोपिकासु**

**पीताम्बरवन्तं भगवन्तं भावयामहे।।४२।।**

शीलयामहे, सेवामहे। पावयन्तं पवित्रां कुर्वन्तम्। भावयामहे निरन्तरं ध्यायामः।।४२।।

**दूरीकृतदानवेषु मानवेषु जन्माभवत्**

**तत्रापि च जातिः शान्तिशीलशरणा प्रभो!**

**विद्याविपुलेऽस्मिन् राजमान्यकुले मान्यताभूद्**

**यत्र नाश्रयेत दृप्तदृष्टिररुणा प्रभो।**

सर्वविधं सौख्यं यथा लौकिकं मे दत्तं तथा
पारलौकिकं च त्वया कल्पतरुणा प्रभो
कोऽन्यो मयि तन्यात्सदा स्तन्यावधि रक्षाकृपां
वत्सलताजन्या तव धन्या करुणा प्रभो।।४३।।

दानवा हिंसकाः पुरुषाः, मानवाः किल बुद्धिमाहात्म्याद् हिंसकपुरुषेभ्यो रक्षिताः शान्तिः शुचिचरित्रं च शरणं यस्याः ईदृशी जातिर्ब्राह्मणाख्या। मदवशात् अरुणा दृप्ता गर्विता दृष्टिर्यत्र न पतेत्, माननीयताकारणात् अधिकारिणामपि मदगर्विता दृष्टिर्न पतेदित्याशयः। स्तन्यावधि स्तनदुग्धपानमारभ्य।।४३।।

(३)

भगवान् हयग्रीवः

(अनङ्गशेखरः)

क्रियापरेषु शासनेष्वियाय यन्मतिर्भ्रमं
भियाढ्ययापि वादिनां धिया न संव्रियामहे
न या विवेकवर्त्मनि प्रयाति गर्वसंश्रया
तयापि भूभुजां श्रिया न विक्रियां भजामहे।
श्रयाय तत्त्वसम्पदां चयाय चारुसंविदां
भयाय भूरिदुर्धियां दयालुमाद्रियामहे
जयाय जिह्मवादिनां नयाय निह्नवस्पृशां
दयादृशां समीहया हयाननं श्रयामहे।।४४।।

बन्धककर्ममात्रबोधकेषु शास्त्रेषु येषां वादिनाम् मतिर्भ्रमम् इयाय प्राप। भयशालिन्या वादिनां तया बुद्ध्यापि न संव्रियामहे संवृता आच्छादिता न भवामः। गर्वयुक्ता या भूभुजां राज्ञाम् श्रीः विवेकमार्गे न याति तयापि विकारं न प्राप्नुमः। तत्त्वभूतानां विज्ञानादिसम्पदाम्। आश्रयणाय। चारुसंविदाम् उत्तमानां बुद्धीनां चयाय संचयनाय। दयालुम् हयाननम्। जिह्मानां कुटिलानां वादिनाम्। निह्नवस्पृशां सत्यापलापपराणां नयाय नीतिबोधनाय।।४४।।

नूनमुदयन्ते रसनिर्भरमनोज्ञा गिरो
विमुखविरोधिनो निरीक्ष्य स्वयमेजन्ते
कीर्तिमावहन्ते काव्यकोविदकवीनां गणे
तेषामङ्गणेषु सर्वसम्पदः समेधन्ते।

**नानानिगमागमनिबद्धनित्यवाङ्मयजं**
**जगति भजन्ते ज्ञानशेवधिमनन्तं ते**
**लोकेऽस्मिँल्लभन्ते ते हि नित्यनिरुपाख्यं यशो**
**हयवदनाख्यं ब्रह्म येऽनिशं निषेवन्ते।।४५।।**

रसनिर्भरा: रसपरिपूर्णा: मनोज्ञाश्च। स्वयम् एजन्ते कम्पते। नित्यवाङ्मयम् वेदा:। शेवधिर्निधि:। नित्यं निरुपाख्यं निरूपमम्।।४५।।

**उन्मीलत्प्रसन्नमुखमुद्यन्मणिसद्मान्तरे**
**पद्मासनासीनमृजुकायतमाशासेऽहम्**
**हस्तेष्वक्षमालाज्ञानमुद्रापुस्तकानि तमो-**
**विद्रावकशङ्खमावहन्तमनायासेऽहम्।**
**निगमविलासावनिं नासापुटनिःश्वसितै-**
**र्यत्पन्नखभासा साधुसूरिषु समासेऽहम्**
**वाचामधिपेन समासेव्यपादपङ्केरुह-**
**मुक्तीनां विकासे हयवदनमुपासेऽहम्।।४६।।**

उद्यत: प्रकाशमानस्य मणिसद्मन: रत्नगृहस्यान्तरे पद्मासनेन आसीनम्। ऋजुक: सरल आयतश्च तम्, ध्यानमुद्रायां मेरुदण्डस्य ऋजुस्थापनात्। ईदृशं हयास्यम् आशास्यत्वेन अभिप्रैमि। तमसो दूरीकारकं शङ्खं च धारयन्तम्। अनायासे सहजाभिलाषेण सर्वं साधयन्तमित्याशय:। श्वासपवनैर्वेदस्योत्पादकम्। यत्पादनखकान्त्या (कृपया) पण्डितेषु अहं समासे (तिष्ठामि)।।४६।।

(१३)

## श्रीधन्वन्तरिः

**प्रत्यक्षं विभाति पाणिपङ्केरुहे यस्य सुधा**
**सोऽयं वसुधायाः किं न रोगराशिशोषी स्यात्**
**चक्रादिकचिह्नांश्चतुर्बाहून्निदधानो ह्यसौ**
**दानोचितचारुचतुर्वर्गपरिपोषी स्यात्।**
**मञ्जुनाथ नित्यं निर्जराणाममरत्वकरो**
**दुरितहरोऽसौ मानवीयामयमोषी स्यात्**
**रोगाम्बुधिमग्ने जने तन्वंस्तरितुल्यदयां**
**धन्वन्तरिरेष नृणां नन्वन्तरतोषी स्यात्।।४७।।**

दानाय उचितो यः चतुर्वर्गः धर्मादिपुरुषार्थचतुष्टयम् तस्य परिपोषकरः। चतुर्बाहुधारकोऽसौ भगवानवश्यं चतुर्वर्गपरिपोषकरः स्यादित्याशयः। मानवीयाः मानवसम्बन्धिनो ये आमया आधयो व्याधयश्च तेषां मोषकः हारकः। रुजापीडितं लोकं दयां कृत्वा नौकावत् रोगाम्बुधेस्तारयन्नित्यर्थः। ननु निश्चयेन अन्तः करणसंतोषकः।।४७।।

**विषयविलासैः सर्वमायुर्मे व्यतीतं हन्त**

**तदपि न भीतं मां नु किं मर्षयसे मुधा**

**भोगेष्वपि भग्नो भूरि कायिककदर्यतया**

**मायिकमरीचिकाभिः किं मोहयसे मुधा।**

**दीननाथ जाने दयां दर्शयसि दीनजने**

**सर्वतोऽपि हीनजने किं तर्कयसे मुधा**

**नो चेत् प्रभवामि भवच्चरणावलम्बनाय**

**विषयविडम्बनाय किं जीवयसे मुधा।।४८।।**

मां किं मर्षयसे, अनुकम्पावशात् मे अपचारान् किं सहसे इत्याशयः। कायिककदर्यतया शारीरिकदुर्बलतया। सर्वेभ्योऽपि हीने मयि दयाप्रकाशनसमये किं मुधा तर्कनां करोषि? त्वं प्रभुः, अतएव त्वच्चरणावलम्बने मे शक्तिर्यदि न स्यात्तर्हि विषयाणां विडम्बनायै मां मा जीवय। समापय मे जीवनकालम्।।४८।।

**निबिडघनौघैर्व्याप्तमेतद् व्योम सर्वतोऽपि**

**वहति समन्ततोऽपि वात्या पांसुपीनेयम्**

**अस्तमुपयातो मन्दभाग्यैर्मम भास्करोऽपि**

**दृश्यते न दूरतोऽपि वेला जललीनेयम्।**

**जानन्नपि किं पश्यसि निस्सम्भ्रमं दीननाथ**

**तरला तरिर्मे पश्य नाविकविहीनेयम्**

**दीनस्यास्य कालरजनौ का गतिरन्या भवेद्**

**भवसलिलौका जीर्णनौका त्वदधीनेयम्।।४९।।**

घनौघैः मेघघटाभिः। पांसुपीना धूलिव्याप्ता। जललीना वेला, जलतरङ्गान्तर्हितं तटं न दृश्यते इत्याशयः। कालरात्रौ मम का दशा भवेत्? अतएव भवसलिलम् ओकः यस्याः भवार्णवपतिता इयं जीर्णा नौका भवदधीना।।४९।।

**कुत्रचिन्निरुक्तो नाथ! नित्यनिराकारो भवान्**

**साकारोऽथ कुत्रचिद् गृहीतो वाक्यविस्तरे**

**कुत्रचित्तटस्थः क्वाप्यजल्पि जगत्कर्ता भवान्**

**कुत्रचिदगम्यः क्वचिद् गम्यश्चित्तमन्दिरे।**

नूनं वेदवाणीष्वपि दार्ढ्यं करवाणि कथं
दुर्धराणि वाक्यान्यपि केन त्वयि संचरे
अर्वाचामुदेतु बत का चालीकशक्तिस्त्वयि
प्राचामपि प्राचामुच्चवाचामप्यगोचरे।।५०।।

कुत्रचित् कस्मिंश्चन वेदवाक्ये निरुक्तो निरूपितः। कुत्रचिद् वाक्यसमूहे साकारो गृहीतः। सांख्यादिषु तटस्थः उदासीनतया क्रियाशून्यः अजल्पि। अगम्यः अबोध्यः। भक्तिभावनया चित्तमन्दिरे ग्राह्यः। वेदवाक्यान्यपि दुर्धराणि दुःखेन ग्रहीतुम् बोद्धुम् शक्यानि। अतएव केन उपायेन भवन्तं प्राप्नोमि। समस्तृतीयायुक्तादित्यात्मनेपदम्। प्राचामपि प्राचां पुरातनानामपि पुरातनानां (महर्षीणाम्) उदारवाणीनामगोचरे त्वयि अर्वाचाम् एतत्कालिकपुरुषाणां का वा आलीका शक्तिः उदेतु? त्वां बोद्धुं न कापि नवीनानां शक्तिरित्याशयः।।५०।।

रात्रिन्दिवं दारुणदुरन्तचिन्तयाहं वृतो
भुवने भ्रमामि कोऽपि दैन्यं न्यक्करोतु किम्?
जानन्नपि नित्यं कर्मबन्धे गूढमापतामि
मूढमनुजस्य कोऽपि दुःखं विधुनोतु किम्?
सर्वमहं मानसेन सत्यमिदं जाने नाथ
किंतु भवानेवास्योत्तरं मे वितनोतु किम्
शरणागतोऽपि यदि गुरुणाऽऽमयेन धृतः
करुणानिधान! तव करुणा करोतु किम्?।।५१।।

मम दैन्यं कोऽपि किं न्यक्करोतु दूरीकरोतु। किन्तु वक्ष्यमाणस्य प्रश्नस्य भवानेव मे किमुत्तरं दद्यात्? स चायं प्रश्नो यत्- 'शरणा.'। गुरुणा आमयेन सांसारिकरोगेण।।५१।।

(१४)

## दैन्यनिवेदनम्

विपिने निपत्य भृशं भ्रान्तो मन्दमायारतो
दूरदूरतोऽपि सुखच्छाया न निभाल्यते
हेलयावकृष्टो बाढमिन्द्रियैरितस्ततोऽयं
धावन् व्यथितोऽपि पुनः पशुरिव काल्यते।
नियतिनियोगात् कर्मभोगाननुभावयसे
चालयसे जीवजगत् प्रभुतां प्रपाल्य ते
किंतु किणस्कन्धो भवबन्धोषितो जीर्णवृषो
ब्रूहि दीनबन्धो! कर्मचक्रे कियच्चाल्यते।।५२।।

विपिने भवाटव्याम् मन्दा दुष्टा या माया अविद्या तद्रतः अयं जीर्णवृषो भृशं भ्रान्तः भ्रमणदुःखमनुभूतवान्। निभाल्यते दृश्यते। धावनेन व्यथायुक्तोऽपि यज्ञियपशुरिव पुनः काल्यते प्रेर्यते। हे दीनबन्धो! त्वं नियतेः अदृष्टस्य अनुरोधात् यस्य जीवस्य यादृक् अदृष्टं तद्वशात् ते प्रभुतां स्वामित्वं प्रपाल्य पालयन् इदं जीवजगत् परिचालयसे। प्रभुस्त्वं यस्य जीवस्य यादृग् अदृष्टं तदनुसारं तत्तत्कर्मभोगाननुभावयन् सर्वमिदं जीवजातं परिचालयसीत्यर्थः। एवं च जगच्चक्रे भ्रमणं यद्यपि स्वाभाविकं तथापि- भारवहनजाताः किणाः क्षतचिह्नानि स्कन्धे यस्य, भवबन्धे च पतितः सोऽयं वृद्धो वृषभः चक्रे कियत् परिचाल्यते। वृद्धत्वान्मुमूर्षोः अस्य चक्रभ्रमणे अधुना का शक्तिः, अतएव दयावशात् सोऽयं विमोचनीय एवेत्याशयः।।५२।।

**प्रत्यक्षं प्रवृत्तिर्बत शास्त्रविपरीते पथि**
**जानीते जनोऽयं मम कुटिलकुकार्यताम्**
**गूढं दुश्चरामि भग्नविश्रम्भो जनेषु विभो!**
**सोऽयं मम दम्भो नाथ मनसि विचार्यताम्।**
**पातकनिकेतने न चास्ति गुणगन्धो मयि**
**निस्सहायबन्धो! कथमाशा हृदि धार्यताम्**
**कियन्महापापी पूर्वपापिनामपेक्षयेति**
**पातकपरीक्षयैव तार्यते चेत् तार्यताम्।।५३।।**

कुटिलतां कुकार्यतां च। भग्नविश्वासोऽहं जनेषु गुप्तं यथा तथा दुराचरणं करोमि सोऽयं दम्भः उपरितः साधुताडम्बरः मनसि नाथेनैव भवता विचार्यताम् उद्धारयोग्यता सर्वथापि नास्तीत्याशयः। पूर्वोद्धृतानां पापिनामपेक्षया अयं कियत्परिमाणपातकशाली इति पातकपरीक्षाकौतुकेनैव यदि त्वं मां तारयसि तर्हि तार्यतामयं जनः अन्यथा नास्ति मे सर्वथा तादृशी योग्यतेत्याशयः।।५३।।

**सेवकस्तवेति कथं वक्तुं प्रभवामि[१] विभो!**
**शरणं तवेति वचो वक्तुं क्व कपालो[२] मे**
**दीनदुर्गतोऽहमिति किं वाच्यं दयानिधये[३]**
**त्वन्नामाश्रयोऽहमिति वक्तुं नाद्य कालो मे।**
**पापः केन साहसेन याचे दयाभिक्षामहं**
**'रक्षाजामिलादिवत्'[५] प्रवक्तुं किमु भालो मे**
**किमिव निवेदयामि लब्धुं ते दयार्द्रदृशं**
**तदिदं त्वमेव दरं[६] दर्शय दयालो! मे।।५४।।**

---

१. भवत्सेवायोग्यत्वाभावात्। २. शरणागतियोग्यभाग्याभावात्। ३. दयासागरः प्रार्थनां विनैव सर्वं जानीयात्। ४. तव नामस्मरणमेव मे आश्रय इति विमुखस्य मे वक्तुं नाद्य कालः, अग्रे स्याच्चेदन्या वार्ता। ५. 'अजामिलादिपूर्वपातकिवत् मामपि रक्ष' इति कथयितुं किमु मे भालः भाग्यम्? तथाविधयोग्यताभावान्नास्ति तादृग् भाग्यमित्याशयः। ६. किञ्चित्।।५४।।

**मनसि कदाचिन्नात्मचिन्ता पदमादधाति**

**शास्त्रं नोपयाति नित्यनिर्भरमगाधि माम्**

**कुर्वे मन्दकर्मा कथं शास्त्रोदितकर्माण्यहं**

**भ्रंशयति भक्तेरपि लोकप्रेम बाधि माम्।**

**किमधिकमीरयामि मङ्क्षु मन्त्रजापेष्वपि**

**स्थिरता दुरापेयं दुनोति द्रवदाधि माम्**

**नाथमवलोके लुप्तसाधनबलोऽपि केन**

**नूनं नरलोकेऽखिललोकेश्वर! शाधि माम्।।५५।।**

आत्मचिन्तनं न मनसि तिष्ठति। नित्यगहनम्, अगाधि दुर्ग्राह्यं शास्त्रं मां प्रति न प्राप्नोति। अगाधि इति स्थायि-हारि-इतिवत्केवलात् णिनिः। बाधि बाधकं लौकिकं प्रेम भक्तेः सकाशादपि मां भ्रंशयति निपातयति। मन्त्रजपसमयेऽपि दुरापा दुर्लभा इयं मनःस्थिरता द्रवन् आधिः मानसव्यथा यस्मिन् कर्मणि यथा स्यात्तथा मां दुनोति पीडयति। मन्त्रजपेष्वपि मनःस्थिरता न, तस्मिन् समये नानाविधा मानसव्यथाश्चेतसि यातायातं कुर्वन्तीति मे मनःक्लेशः। एवं च आत्मचिन्तादीनां भवद्दर्शनसाधनानां बलं मे लुप्तम्। ततश्च केनोपायेन नाथ त्वामवलोके इति त्वमेव मामनुशाधि।।५५।।

**विषयविलासैर्विप्रलभ्य पथि लुण्ठितोऽस्मि**

**कुण्ठितोऽस्मि काम्यकर्मबन्धैर्लोभलीनोऽयम्**

**अश्रान्तं भ्रमामि नावयामि रागवश्यतया**

**किं पश्यसि भूरि भवमार्गो मे नवीनोऽयम्।**

**नाथ! तवास्मीति बत यो हि सकृदुच्चारयेत्**

**तं वै तारयेयमिति भावस्तावकीनोऽयम्**

**किं पुनः पराङ्मुखोऽसि पङ्गुपराधीनोपरि**

**सर्वोपायहीनो द्वारि दुस्सीदति दीनोऽयम्।।५६।।**

विप्रलभ्य प्रतार्थं मार्गे चलन्नहं लुण्ठितः अपहृतः, सर्वं सुकृतमपहृतमित्याशयः। लोभलीनः अयमहं काम्यैः कर्मबन्धैः कुण्ठितो मूर्खीकृतः। नावयामि भ्रमन्नपि संसारभ्रमिं नावगच्छामि। भवमार्गोऽयं मे भूरि नवीनः। भावः अभिप्रायः। दुस्सीदति दुःखेन सीदति।।५६।।

**यद्यपि धनस्य लोभलालसां परित्यजामि**

**भुवने भजामि शान्तिशीलनेऽद्वितीयताम्**

किन्तु हृदि चिन्तयामि चारुचित्रबन्धैरिह
कविताप्रबन्धैर्मार्मिकेषु महनीयताम्।
इत्थमहोरात्रं यशोलिप्सालवलीनस्यास्य
दीनस्यार्थनाऽसौ नाथ सफला विधीयताम्
चारुचमत्कुर्वन्नवकाव्यकलोल्लासनाय
कीर्तिवासनापि तवोपासनासु लीयताम्।।५७।।

शान्तिपरिशीलनेऽयमद्वितीय इति कीर्तिं भजामि। धनलोभं परित्यज्यापि- चारुर्विचित्रश्च बन्धः गुम्फः येषु एवं विधैः काव्यप्रबन्धैः कवितामर्मज्ञेषु पूजनीयतां हृदि चिन्तयामि। ततश्च यशोलिप्सालवमात्रेऽपि लीनस्य अस्य दीनस्य मम प्रार्थना एवं सफला क्रियतां यत् काव्यकलाया उल्लासनाय या कीर्तेर्वासना सा तवाराधनासु सम्मिलतु। अर्थात् तवोपासनापरेषु काव्यनिर्माणेष्वेव मे कीर्तिलालसा पूर्यतामित्याशयः।।५७।।

अविदितयामं याति फल्गुकृतौ कालो मम
किमिह कृपालो! विस्तरेण वर्णयामि ते
भूपभवनेषु भृशमाशापाशबद्धो यामि
मार्गयामि मानं महिमानं विस्मरामि ते।
विषमभवेऽस्मिन् भवेद्भाग्यं किं तदेतदपि
देव दीनदुर्गतदयालो! दर्शयामि ते
भवदवलोकनादुदीर्णघनस्नेहं येन
पुलकितदेहं चरणेऽहं विलुठामि ते।।५८।।

फल्गुकृतौ निरर्थककार्ये। मानं सम्मानं मार्गयामि अन्विष्यामि, इतस्ततः सम्मानप्राप्तये पर्यटामि, किन्तु वास्तवगौरवप्राप्तेरुपायं ते महिमानं माहात्म्यं गुणगानं विस्मरामि। हे दीनदरिद्रेषु दयालो! विषमसंसारे किं मे एतदपि भाग्यं भवेत्, अहं त्वां दर्शयामि। किं तद् भाग्यमित्याह, येन यद्भाग्यकारणाद् उद्वेलितस्नेहं तथा पुलकितदेहं ते चरणे अहं विलुठामि।।५८।।

रात्रिन्दिवं देहधनधामसुखलिप्सापरो
यत्कार्यं करोमि किल तत्ते किमावेद्यताम्
तर्कणां तनोमि तन्त्रमन्त्रोदितकर्तव्येषु
निभृतमकर्तव्येषु साधयाम्यभेद्यताम्।

**शनैः शनैरित्थं सञ्चितानि दुरितानि मया**
**तदिह दयायै स्वयं स्वामी किमु खेद्यताम्**
**सोऽहं सङ्कुचामि पुण्यपुञ्जपरमात्मान्तिके**
**पुञ्जीभूतपाप्मा कथमात्मा मे निवेद्यताम्।।५९।।**

तत्कार्यं ते किम् आवेद्यतां, निरर्थककार्यनिवेदनं व्यर्थमेवेत्यर्थः। अकर्तव्येषु सांसारिककार्येषु अभेद्यतां सत्यतां समर्थयामि, बुद्धिकल्पनाबलेन। तत् तस्माद् इह अस्मिन् स्वहस्तोपार्जितभवसङ्कटे दयायै दयां दर्शयितुम् स्वयं स्वाम्येन न तु कश्चन तत्सेवकोऽपि किमु खेद्यतां खेदं प्राप्यताम्? स्वामिने परिश्रमदानं नोचितमित्यर्थः। पुण्यपुञ्जरूपस्य परमात्मनः समीपे राशीभूतपातकः मे आत्मा कथं निवेद्यताम्, आत्मनिवेदनेऽपि मत्साहसं नास्तीत्याशयः।।५९।।

**शय्योत्थायमेव धनिकालयेषु धावं धाव-**
**मनिशमशान्तिमेव निर्भरमिहादधे**
**चक्षुषोः समक्षमहमुत्थानं निपातं नृणां**
**नित्यमवलोके बत लोके दूरदुर्विधे।**
**अहह तथापि साधुसङ्गकथाहीनं वृथा-**
**यत्नैर्विनिलीनं ग्रहे लोभलालसाभिधे**
**सर्वतो निरुद्धगतिमभितो विरुद्धकृति-**
**मुद्धतमबुद्धिमिममुद्धर दयानिधे।।६०।।**

शय्यातः उत्थायैव (वीप्सायां णमुल्)। आदधे धारयामि। दूरदुर्विधे-दूरम् अत्यन्तं दुर्विधा दुर्दशा यस्य तस्मिन्। लोभलिप्सारूपे ग्रहे आग्रहे अभिनिवेशे लीनं लग्नम्। निरुद्धा गतिः प्रसारो यस्य। विरुद्धा धर्मसदाचारादिभ्यो विपरीता कृतिः कार्यं यस्य। उद्धतम् अबुद्धिम्।।६०।।

(१५)

## छायावादः

**वाति विश्वतोऽपि घोरनिर्घोषी प्रचण्डमरुद्**
**भूरिरयरोषी वर्द्धतेऽब्धिरुत्तरोत्तरम्**
**यातो रविरस्तं कालजलदावलिप्तं वियद्**
**गुप्तं गमनीयवर्त्म लुप्तं धैर्यमान्तरम्।**
**पर्वतवितुङ्गाः सङ्ग्रसन्तेऽमी तरङ्गाः पुनः**
**पोतं निरुद्योतं भयाद् भ्रमति निरन्तरम्**
**सम्प्रति भवन्तमेकमाधारं प्रधारयामि**
**हंहो कर्णधार! तव धारय भुजे भरम्।।६१।।**

पश्चिमादिदेशेभ्यः प्रचारकोलाहलमुखरं विज्ञानं तथा प्रसृतं येन हि दृढश्रद्धालूनामपि हृदयमितस्ततो बलाद्विक्षिप्यते। अब्धिः.- सर्वतो निमज्जकाः सांसारिकप्रपञ्चा उत्तरोत्तरं वृद्ध्युन्मुखाः। यातो रवि.- मार्गप्रकाशका गुरवः शास्त्राणि च मत्कृते लुप्तप्रायाणि। सर्वतोऽन्धकारः। आत्मकल्याणमार्गच्छन्नः। अतएव निराशस्य हृदयस्य धैर्यं तिरोहितम्। पर्व.- महामहान्तो लोभनीयविषया मामाकर्षन्ति। इतो मत्समीपे अज्ञानदूरीकारको न कश्चित्प्रबोधः। अतएव किंकर्तव्यविमूढतया इतस्ततो भ्रमामि। सम्प्रति ममोद्धारभारो भवदायत्त एव।।६१।।

( १६ )

## सप्तवाराः

**नित्यं रविवारे रवितनयातटस्थो लसे-**

**च्चारुचन्द्रवारे बर्हिचन्द्रकचकासी भातु**

**भूरि भौमवारे भवेद् भौमासुरहारी सखा**

**बुद्धिं बुधवारे बलभद्रानुजो मेऽनुयातु।**

**गाढं गुणयामि गुरुवारे गोपगोपीपतिं**

**श्यामः शुक्रवारे शौरिरेष शनिवारे पातु**

**संसारे ह्यपारे भ्रमन्नेतदेव याचे प्रभो**

**ध्यानं ते मुरारे! सप्तवारेष्वपि मा जहातु।।६२।।**

बर्हिचन्द्रकाः मयूरपिच्छाग्रभागाः, तैः चकासी शोभमानः। गुणयामि गुणकीर्तनद्वारा भजामि। वारंवारं कीर्तयामि वा।।६२।।

( १७ )

## द्वादशमासाः

**चैत्रे चित्रचर्यो वरवैशाखे विशाखासखो**

**ज्येष्ठे जलक्रीडो भृशमाषाढे चलन् वनाय**

**श्रावणे तु हिन्दोलानुलासी भ्रमन् भाद्रपदे**

**ह्याश्विने च चन्द्रिकाचकासी चित्तरञ्जनाय।**

**कार्तिके सुरासबन्धी मार्गे मृगनाभिगन्धी**

**पौषे पुष्टिवश्यो व्रजन् माघे व्रतिकावनाय**

**फाल्गुनेऽनुरज्यन् रङ्गहोलिकाविलासे हरि-**

**र्द्वादशसु मासेष्वस्तु दासेऽप्सितपूरणाय।।६३।।**

चित्रचर्यः वसन्तवैभवादद्धुतचरित्रः। विशाखा श्रीराधिकायाः सखी। चन्द्रिकाचकासी शरच्चन्द्रिकाया शोभमानः। सुरासम्बन्धी शोभनां रासक्रीडां बध्नाति करोति। मृगनाभिः कस्तूरी तद्गन्धशाली। पुष्टिवशः पुष्टिः अनुग्रहभक्तिः तद्वश्यः।। व्रतिकावनाय माघव्रतधारिणीनां व्रजकुमारीणां मनोरथपूरणाय।।६३।।

( १८ )

## षड्ऋतवः

**सरसवसन्ते फुल्लमल्लिकाविलासी गुरु-**

**ग्रीष्मे यमुनाम्भःकेलिभासी हृदयेऽनुयातु**

**प्रावृषि कदम्बमाल्यहारी रमणीषु लसन्**

**शरदि सुरम्यरासकारी प्रमदं दधातु।**

**हेमन्तेऽथ गोष्ठान्तर्हसन्तीमुपसेवमानो**

**शिशिरे दधानोऽमन्दकुन्दस्रजमुत्पृणातु**

**वृन्दावनमञ्जुलनिकुञ्जपुञ्जचारी चिरं**

**सर्वर्तुषु सोऽयं सुखकारी गिरिधारी पातु।।६४।।**

हसन्ती शीतनिवारणाय अङ्गारधानिका, वस्त्रविशेषः तूलभृता 'मिर्जई', हसन्ती गोपिका वा। उत्पृणातु प्रीणयतु।।६४।।

( १९ )

## नामसङ्कीर्तनम्

**कृष्णं कीर्तयामि व्रजवल्लभं विभावयामि**

**गोविन्दं गृणामि नन्दसूनुं नन्दयाम्यहम्**

**श्रीपतिं श्रयामि चक्रपाणिं चिन्तयामि चिरं**

**पद्मापतिं पूजयामि शौरिं शीलयाम्यहम्।**

**यज्ञेशं यजामि वर्णयामि गिरा विश्वपतिं**

**मानयामि माधवं रमेशं राधयाम्यहम्**

**भूतिदं भजामि भूतभावनं निभालयामि**

**भक्तेशं भणामि भगवन्तं भावयाम्यहम्।।६५।।**

गृणामि गायामीत्यर्थः। शीलयामि मननविषयीकरोमि। निभालयामि पश्यामि।।६५।।

( २० )

## नवधा भक्तिः

**श्रीपतेः शृणोमि गुणान् कृष्णकथां कीर्तयामि**
**सीतापतेः स्मेरमुखं सस्पृहं स्मराम्यहम्**
**सेवे पादपङ्केरुहं देवेन्द्रावलेपहनः**
**काममेतदेवेच्छामि शौरिमर्चयाम्यहम्।**
**वन्दे नन्दसूनुमभिनन्देयं च दास्यं तस्य**
**सीरभृत्सखास्तु निजमात्मानं ददाम्यहम्**
**दैत्यानामराते! मम भाग्यसुप्रभाते भवे-**
**न्नूनं नवधा ते भक्तिरिति वरयाम्यहम्।।६६।।**

स्मेरं मन्दहासयुक्तं मुखम्। देवेन्द्रस्य शक्रस्य अवलेपं गर्वं हन्ति तस्य (क्विप्)। सीरभृत् हलधारी बलभद्रः मे सखा अस्तु, ततश्च अनुजे श्रीकृष्णे स्वत एव सख्यं भवेदेवेति तात्पर्यम्। दैत्यानाम् अराते शत्रो! वरयामि वरं याचामि। अत्र 'श्रवणं कीर्तनं विष्णो'रित्यादिर्नवधा भक्तिः क्रमेण सूचितेति रत्नावली।।६६।।

( २१ )

## विश्वात्मा

**सूर्ये सन्निविश्य भूरि भुवनानि भासयसे**
**पाताले प्रविश्य सर्वलोकानवष्टम्भसे**
**दशसु दिशासु दिव्यभूतिभिर्विभासितमां**
**भूमिमिमां विश्वम्भर सर्वदावलम्बसे।**
**स्तूयसेऽथ सर्वैरिह सर्वस्थलशायी विभो!**
**नूनं जलशायीति त्वमेव किल कीर्त्यसे**
**दृश्यसे यतो यतोऽपि तत्त्वतस्ततस्ततोऽपि**
**सर्वतोऽपि सर्वात्मा त्वमेव समवेक्ष्यसे।।६७।।**

सूर्ये.- 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः इति।' अवष्टम्भसे अवष्टम्भकशक्तिरूपेण सर्वान् लोकान् धारयसि। दिव्यभूतिभिः.- ये लोकपाला इन्द्रादयस्ते सर्वेऽपि तवैवांशकलारूपा विभूतयः। भूमिम् अवलम्बसे विश्वभरणसामर्थ्यशाली त्वमेव भूम्यै अवलम्बनं ददासीत्यर्थः। सर्वस्थल.-'जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके' इत्यादिना। 'जलशायी विश्वरूपो मुकुन्दः' इत्यमरः।।६७।।

**त्वामेवाभितोषयति सोऽयं शिवसेवी जनो**
**देवीसेवकेऽपि दयां तामेवावलम्बसे**
**नूनं नरसिंहहयग्रीवदत्तवेङ्कटादि-**
**नामभिः प्रकीर्तयतस्त्वं वै परित्रायसे।**
**नानाविधयागैर्यजतोऽपि फलैः पूरयसे**
**करुणारसेन तापसेऽपि सदा दयसे**
**भावनानुसारं साधकेच्छापरिपूर्तिकरो**
**नानानाममूर्तिधरो भक्ताननुकम्पसे।।६८।।**

शिवोपासनातत्परो जनः त्वामेव परितोषयति। यां कृपां कृष्णोपासके धारयसि, तामेव दयां देवी (शक्ति) सेवकेऽपि अवलम्बसे स्वीकरोषि। दत्तः दत्तात्रेयः। वेङ्कटपदेन दक्षिणापथप्रसिद्धविट्ठलरङ्गेशादयोऽन्यान्येऽपि भगवद्विग्रहाः सूच्यन्ते। नरसिंहप्रभृतिनामजपेन (करणभूतेन) त्वामेव कीर्तयतः तवैव कीर्तनकारकान् भक्तान् त्वमेव रक्षसि। यजतः यागद्वारा भवदुपासकान् अपि। फलैः- अभीष्टफलप्रदानेन पूरितान् कृतार्थान् करोषि। तापसे तपश्चर्याकारकेऽपि दयसे दयां करोषि। भावनानुसारमिति.- साधकः स्वभावनानुसारं यादृशैर्नामभिः यां मूर्तिं ध्यायति त्वं तादृशमूर्तिधर एव सन् तस्येच्छापरिपूर्तिं कृत्वा भक्तेषु दयां करोषीत्यर्थः।।६८।।

(२२)

## श्यामघन-प्रार्थना

**वियति विजृम्भमाणविद्युच्छटाविस्फुरितां**
**श्यामघटामाविष्कृत्य धीरतां न धर्षय मे**
**घोरघोरगर्जनेन तर्जयन् वियोगिजनान्**
**विरहविवर्द्धनेन मा मा मनस्तर्षय मे।**
**मन्दमन्दबिन्दुक्रमधीरैर्यमुनान्तचरैः**
**शिशिरसमीरैरिह तप्तं वपुः स्पर्शय मे**
**दर्शयसि काममविरामदुःखमेव कथं**
**हंहो घन श्याम! घनश्याममिह दर्शय मे।।६९।।**

आकाशे विजृम्भमाणया परितो विवर्द्धमानया विद्युच्छटया (तडित्कान्त्या) विस्फुरितां चमत्कुर्वतीं श्यामघटाम्। मम धैर्यं न विलोपय। मम मनः मा तर्षय तृष्णा (उत्कण्ठा)-तुरं मा कुरु। मन्दमन्दो यो बिन्दुनिपतनस्य क्रमः तेन धीरैः। विन्दवो मन्दमन्देन क्रमेण निपतन्तीति पवनानां धीरता सूच्यते इत्याशयः। यमुनासमीपचारिभिः शीतलपवनैः मम वपुः स्पर्शय, यतो हि तद् विरहतापात्संतप्तम्। समीराः वपुः स्पृशन्ति, तान् घनः प्रेरयति इति घनः समीरैः वपुः स्पर्शयति इति णिच्। तस्य लोटो

मध्यमपुरुषस्यैकवचनम्। हे श्याम मेघ! अविरामं दु:खमेव कथं दर्शयसि हन्त घनवत् श्यामं श्रीकृष्णमपि तु मह्यं दर्शय। तमपि उत्कण्ठयित्वा मम समीपागमनार्थं प्रेरयेत्यर्थ:।।६९।।

( २३ )

## संसाराद् वैराग्यम्

क.- आसंस्तेऽपि पार्थिवाः पृथिव्यां बलभारभृतो

व्याप्नुते स्म येषामनुभावतो भयं न किम्?

श्रेष्ठिनो वदान्या भूरिजाता लोकमान्याः पुन-

र्याता रूपशालिनो धरायामुदयं न किम्?

मञ्जुनाथ पुंसां हन्त कोऽयमभिमानोऽधुना

नश्वरे शरीरे वेत्सि विधिसमयं न किम्?

आयाता धरायामद्ययावद् भूरिसंख्या नरा-

स्ते किल धरायामेव याता विलयं न किम्?।।७०।।

येषाम् अनुभावत: प्रभावात् भयं किं न व्याप्नुते स्म, अपि तु लोकेषु भयं व्याप्तमभूत्, बलभारधारका: पार्थिवा: राजान: तेऽपि पृथिव्यामासन्। वदान्या: दानशीला:। लोकै: मान्या: विद्वांस: (धरायाम्) भूरि जाता:। रूपशालिन: पुरुषाश्च धरायाम् उदयं किं न याता:? अपितु बहव उत्पन्ना:। विधे: (विधातु: दैवस्य) समयं मर्यादां किं न जानासि? विलयं विलोपम्।।७०।।

बाल्यादेव विषयमरीचिकासु संरमसे

पाल्याभूत् प्रणाली कर्मगहनाऽप्यमुष्य ते

दारा धनधामपरिवारास्तव बन्धकरा

हन्त तदमीभिस्तव समयो विमुष्यते।

मञ्जुनाथ मन्ये उपदेशास्तव सर्वे वृथा

यद् वै कामलाभलवलेशात् परितुष्यते

कामनामजस्त्रमयि! धेहि सखे! तावत् सुखं

'रामनाम सत्य'मिति यावन्न विघुष्यते।।७१।।

विषयरूपासु मरीचिकासु (मृगतृष्णासु) रमसे। तदुपरि नानाविधै: कर्मभि: गहना (बन्धनकारिणी) प्रणाली (इयं लोकपद्धति:) अमुष्य (अस्य) ते (तव) पालनीया अभूत्। विषयासक्तस्तु आसी: एव, तदुपरि कर्मभिर्बन्धकर: प्रवृत्तिमार्ग: सेवनीयोऽभूदित्याशय:। अमीभि: एतै: तव समय: विमुष्यते अपह्रियते याप्यते यस्मात् त्वया कामनालाभस्य लवलेशात् लवस्यापि लेशात् संतुष्यते। हे सखे! कामनां त्वं तावत्कालं धेहि धारय यावत् तव शववाहिभि: 'रामनाम सत्यम्' इति न विघुष्यते। ततश्च स्वल्पसमयार्थं कामनाभि: किमिति कदर्थितो भवसि इति गूढं सूच्यते।।७१।।

( २४ )

## शनैः शनैर्भगवति रतिः

**कुटिलकुतर्कभरकर्कशनिशितशरै-**

**निर्दय! भवसि यदि हृदयविदारी मे**

**दुर्भरकुटुम्बभरजर्जरशरीरभृतो-**

**ऽप्यहह निरर्थमसि तात! तापकारी मे।**

**मञ्जुनाथ नापरो विलोक्यते नृलोकतले**

**तापं यो विलोपयन् भवेद्धि भयहारी मे**

**केवलमखिललोकचित्तान्तरचारी सैष**

**बर्हिपक्षधारी ननु तर्हि पक्षधारी मे।।७२।।**

हे निर्दय! कुटिलकुतर्कसमूहरूपैः कर्कशैः निशितैः तीक्ष्णैः बाणैः यदि मम हृदयविदारको भवसि। दुःखेन पूरयितुं शक्येन कुटुम्बभारेण जर्जरशरीरधारकस्य। शरीरं बिभर्तीति क्विप्, ततः षष्ठी। अपि मे यदि व्यर्थमेव संतापदायकोऽसि। तर्हि मनुष्यलोके अन्यः कोऽपि न दृश्यते यो मे संतापं दूरीकुर्वन् सन् मम सर्वविधभयहारको भवेत्। लोकानां हृदयान्तःस्थितः अन्तर्यामी स एव मयूरपिच्छधारी एव केवलं मम पक्षपोषकोऽस्ति। 'सोऽचि लोप' इति सुलोपात् 'सैष' इति।।७२।।

**सेवसे रसेन किमु सम्पदभिमानिनोऽमून्**

**स्वामी किल निखिलनृलोकभयहारी मे**

**भ्रमसि विलासिनीविलासरसलालसया**

**नन्दति हृदन्तरेऽत्र नन्दधेनुचारी मे।**

**मञ्जुनाथ नाथसि किमन्यमयि! दीनगिरा**

**सकलसुराधिपतिरस्ति सुखकारी मे**

**शरणमुपैषि यदि धरणिधुरीणमये**

**बर्हिपक्षधारी ननु तर्हि पक्षधारी मे।।७३।।**

सम्पत्तेः अभिमानयुक्तान् अमून् इमान् लोकान् आनन्देन प्रेम्णा किं सेवसे? सकलमनुष्यलोकानां भयहारकः हरिः मम स्वामी। विलासरसस्य लालसया इच्छया मम हृदन्तरे हृदयमध्यभागे नन्दराजस्य धेनुचारकः श्रीकृष्णः नन्दति क्रीडति। हे मञ्जुनाथ! अन्धं पुरुषं दीनवाण्यां किं नाथसि याचसि? सकलदेवेशः भगवान् मम सुखकारकः। त्वं यदि धरणेः पृथिव्याः भारधारकं राजादिकम् आश्रयसि तर्हि।।७३।।

( २५ )

## भगवतः कारुण्यप्रार्थना

**विषयविलासलवलालसमिदं मे मनो**
**मीलति प्रमोदं नाथ! नैतन्नयसे न किम्?**
**दारुणदुरन्ता पश्य चिन्ता परिपीडयते**
**सन्तापितमेनं दीनमलमवसे न किम्।**
**मञ्जुनाथ किं वा बहुविकलविलापशतै-**
**र्मञ्जुना दृगन्तेनानुकम्पामयसे न किम्?**
**गिरिवरधारण समस्तसुखकारण हे**
**दीनदुःखदारण दयालो दयसे न किम्।।७४।।**

विषयविलासानां लेशेऽपि लालसायुक्तं मम मनः सम्प्रति मीलति खेदान्मुकुलितं भवति, एतत् मनः प्रमोदं किं न नयसे? सन्तापितम् एनं दीनं माम् अलं यथा स्यात् तथा किं न अवसे रक्षसि? बहुविकलताजनितैः विलापशतैः किं फलम्? मञ्जुना कृपामधुरेण दृगन्तेन नेत्रकोणेन दयां किं न करोषि? समस्तसुखानां कारणहेतुभूत!।।७४।।

**लोकाः कलयन्ति वैरमनिशमहेतु मया**
**शोकाकुलमेतं मुधा रुजसि दयानिधे!**
**रोगदिग्धदेहो नाहमाविन्दामि विषयसुखं**
**मुक्त्वा दुःखगेहोषितं व्रजसि दयानिधे।**
**पश्यसि न मञ्जुनाथ किं वा मम दीनदशां**
**मादृशां सुखाशां बत भजसि दयानिधे!**
**चिन्ताव्याधिवेदनाः समन्ताद् व्यथयन्ति विभो!**
**किं तावद्दयार्हमिमं त्यजसि दयानिधे।।७५।।**

लोकाः मया सह अनिशं सर्वदा अहेतु निष्कारणं वैरं कुर्वन्ति। अतएव शोकव्याकुलम् एतम् माम् व्यर्थं रुजसि पीडयसि। रोगैः व्याप्त-शरीरः विषयसुखमपि नाहं प्राप्नोमि। दुःखरूपे गेहे स्थाने उषितं पतितं मां त्यक्त्वा व्रजसि? दयानिधेस्तव दुःखपतितस्य मम त्यागो नोचित इत्यर्थः। मादृशाम् (क्विप्) लोकानां सुखविषयामाशां त्वमेव भजसि। मत्सदृशलोकानां सुखस्याशा त्वदधीनैवेत्याशयः। दयानिधे इत्यनेन दयासागरस्य दयनीयजनपरित्यागो नोचित इति सूच्यते। चिन्ताव्याधिवेदना येन क्रमेण चतुर्थचरणे प्रोक्ता तेनैव क्रमेण तासां वर्णनमित्यालोचनीयम्। लोकाः वैरं कलयन्तीति प्रथमे चिन्ता। रोगकारणात्सुखं नाप्नोमीति व्याधिः, मम दीनदशां किमिति न पश्यसीत्यादिना वेदना। इति यथासंख्यमपि सूचितम्।।७५।।

---

गो. वै. ५-

( २६ )

**श्रीशिवः**

**अयि भुवनानां सकलानामभयङ्कर हे**
**करुणां कुरुष्व मयि शङ्कर जगत्पते**
**नानाविधतापपरितापितं तु दीनतमं**
**विभवविहीनमिममुद्धर जगत्पते।**
**वैभवं ते मञ्जुनाथ वाचामपि दूरेभवं**
**नश्वरं न याचाम्यविनश्वर जगत्पते**
**विषमयमेतद्दुरितामयमखिलमेव**
**शमय शशाङ्कशोभिशेखर जगत्पते।।७६।।**

सकलानां लोकानाम् अभयं करोति तच्छील! विभवेन धनसम्पत्यादिना, पुण्यवैभवेन च हीनम्, इमम् माम्। हे मञ्जुनाथ (शिव!) ते वैभवं महिमा वाचामपि दूरेभवम्, वागपि तत्र प्राप्तुं न प्रभवतीत्याशयः। अथवा मञ्जुनाथस्यास्य वाचां दूरगतम्। एष मञ्जुनाथस्ते महिमानं न वक्तुं शक्नोति। अविनश्वर अव्यय शाश्वत अहं भवत्सकाशात् नश्वरं सांसारिकं पुत्रकलत्रादिकं न याचे। किं वाञ्छसि, तदाह 'हे चन्द्रशेखर! विषवत् अतिभयङ्करम् एतं दुरितरूपम् विषयेभ्यो जातं कश्मलरूपम् आमयं रोगम् अखिलमेव शमय दूरीकुरु।।७६।।'

( २७ )

**शङ्करात्कारुण्यप्रार्थना**

**केन पथा यामि तद्धि जाने बत नाद्यावधि**
**हे गिरिजाजाने! सानुकम्पमुपयाहि माम्**
**त्वयि दयमाने दीनलोकोऽपि प्रयाति सुख-**
**मेतावता ज्ञानेनैव हृष्टमवयाहि माम्।**
**किं मे निवेदयाम्यवस्थां त्रिपुरान्तक ते**
**तापयते दुःखं हन्त गुरु परिणाहि माम्**
**विषयविलासरसरङ्गाकुलं नित्यमेव**
**दुरितानुषङ्गादयि गङ्गाधर! पाहि माम्।।७७।।**

'केन मार्गेण गच्छामि' तद्धि अद्यावधि न जाने। सानुकम्पं सदयम् उपयाहि मम रक्षणार्थमागच्छेत्याशयः। हृष्टं प्रसन्नम् अवयाहि जानीहि। गुरु गभीरम्, परिणाहि विशालं दुःखं मां तापयते पीडयति। परिणाहो विशालता। विषयाणां विलासरसरङ्गैः आकुलं व्यग्रमतिं मां दुरितस्य अनुषङ्गात् पातकसम्बन्धात् पाहि रक्ष।।७७।।

कर्पूरावदाते सर्वसुषमानुयाते यस्य
वपुषि बिभर्ति नागराजिराभरणताम्
तरुणशशाङ्कशोभमाननिटिलस्य यस्य
कण्ठे क्ष्वेडचिह्नं याति मृगमदसमताम्।
रञ्जने समस्तभुवनानामपि ताण्डवेन
पापपुञ्जभञ्जने जनानामभिनमताम्
जाह्नवीतरङ्गचयसंगतकपर्द्दधरे
मानसमनङ्गदर्पदमनेऽभिरमताम्।।७८।।

सुषमानुयाते सर्वशोभानुगते। निटिलो भालः। क्ष्वेडचिह्नं विषचिह्नम्। ताण्डवेन समस्तभुवनानां रञ्जने प्रीणके। तरङ्गचयेन तरङ्गसमूहेन संगतो मिलितो यः कपर्द्दः, तद्धारके।।७८।।

(२८)

## सरस्वती

करुणावलोकलेशमञ्जसाधिगम्य जना
मह्यन्ते महीपैः कृतमानना निरन्तरम्
शारदशशाङ्कशोभिसुघटितदेहलता
जडतां निहन्ति यार्थसाधना निरन्तरम्।
मञ्जुनाथ वीणागुणरणननियुक्तकरा
तिमिरहरा या कमलासना निरन्तरम्
विद्वदवतंसपरिशंसितगभीरगुणा
शंसतु शुभानि हंसवाहना निरन्तरम्।।७९।।

करुणादृष्टिलवम्, अञ्जसा शीघ्रम्। सुघटिता शोभनाकारा देहलता यस्याः सा। अर्थसाधिका। वीणागुणानां तन्त्रीणां रणने वादने नियुक्तौ करौ यस्याः। शुभानि शंसतु सूचयतु ददातु।।७९।।

(२९)

## चरणम्

यस्य हि रजोऽधिभालमालिम्पन्ति देवा अपि
के वा वयमस्य महिमानं श्लाघितास्महे
यस्य स्मृतिमात्रतोऽवबुद्धभूरिभावा वयं
कविताकलायां न हि जातुचिदुदास्महे।

मञ्जुनाथ कुण्डलिकलितमञ्जुमञ्जीरक-
मेतत्सूक्तिसञ्जीवकमाराधयितास्महे
इन्दीवरशोभाभरहरणमुदूढभूरि-
करुणमुदारं चारुचरणमुपास्महे।।८०।।

यस्य चरणस्य रजः धूलिम्। अधिभालं भाले ललाटे। अस्य चरणस्य माहात्म्यं वयं के श्लाघितास्महे, किं प्रशंसिष्याम इत्यर्थः। अवबुद्धभूरिभावाः जागृतनवनवभावाः। कवित्वशिल्पे कदाचिदपि न उदास्महे, न उदासीना भवामः। कुण्डलिभिः कलिता मञ्जवः मनोहराः मञ्जीराः नूपुराः यस्मिन्। सूक्तीनां संजीवकम् जीवनदायकम्। उदूढाधारि भूरिकरुणा येन तत्। उदारं वरदाने वदान्यम्, दानशीलं चरणम्।।८०।।

( ३० )

## आम्बेरे विराजमाना शिलामयी

अम्बरधराधिपतिपूज्यपादपङ्केरुहा
तुङ्गे शैलशृङ्गे स्थिता राजहर्म्यधामिनी
चिबुकनिषण्णहारिहीरकविमण्डिता या
भूषणैर्विभाति मेघगेव दिव्यदामिनी।
मञ्जुनाथ मानमहीपालमनोवाञ्छितदा
चेतसि चकास्ति भावुकानां भवभामिनी
नूनं नरदेवीयति यस्याः पदसेवी पुमान्
सेयं शिलादेवी भातु मे वीक्षणगामिनी।।८१।।

अम्बरधराधिपतिः आम्बेरमहाराजः। राजहर्म्याणि धाम यस्याः सा तथा च आम्बेरराजहर्म्यमालायाः प्रमुखभागे स्थितेति सूच्यते। चिबुके निषण्णो यो मनोहारी हीरकः तेन विभूषिता। मेघगेव दिव्य.- श्यामशिलामय्या यस्याः शरीरे स्वर्णहीरकादिभूषणानि दामिनी (विद्युत्) इव विराजन्ते इति भावः। मानमहीपाल.- वर्तमानमहाराजस्य मनोरथपूरिका, तथा इतिहासप्रसिद्धस्य प्राक्तनमानसिंहमहाराजस्य वरदा तत् प्रतिष्ठापिता च सेयमिति सूच्यते। यस्याः पदसेवी पुरुषः नरदेवीयति नरदेवं राजानमिव आत्मानमाचरति, धराधीशायते इत्याशयः।।८१।।

( ३१ )

## अन्तसमये भगवतः प्रार्थना

लीना देहशक्तिरपि हीना सुखवासना मे
तनुरनधीना नाथ! कियदिव नीयताम्
चक्षुषोरुपैति घनतिमिरमिवाद्य नाथ
श्रवसोरपैति शक्तिरलमवधीयताम्।

**मञ्जुना त्वदङ्घ्रिकञ्जलम्बनेन मञ्जुनाथ**
**धृतिरुपयाति हृदि करुणा विधीयताम्**
**एतस्मिन्नमन्दपुण्यसमयेऽरविन्द-**
**समलोचन! मुकुन्द! नेत्रगोचर उदीयताम्।।८२।।**

अस्मिन् समये देहशक्तिः लीना नष्टा। मम सुखवाञ्छापि हीना नष्टा। सुखेष्वपि मे मनो न गच्छति। सम्प्रति एषा तनुः शरीरम् अनधीना, मम वशे नास्ति। यथाहं वाञ्छामि तथा ममाङ्गानि कार्यं न कुर्वन्तीति भावः। अतएव एषा तनुः कियत्पर्यन्तं नीयताम्, बलाद् आकृष्यताम् तदेवाह- चक्षुषोः नेत्रयोर्मध्ये घनं तिमिरमिव अन्धकारः उपैति। श्रवसोः कर्णयोः शक्तिः अपैति गच्छति। अलं यथा स्यात्तथा अवधीयताम्। इदानीं मम गमने विलम्बो नास्ति। अतएव सावधानं स्थीयतामित्याशयः। हे मञ्जुनाथ! मञ्जुना सर्वापेक्षया उत्कृष्टेन त्वच्चरणारविन्दाश्रयणेन हृदि धृतिः धैर्यम् उपयाति। सुखादीनां वाञ्छा गता। शरीरशक्तिरपि क्रमशो मां त्यजति। इदानीं केवलं त्वच्चरणध्यानेनैव शान्तिर्भवति अतएव करुणा क्रियताम्। का सा दया? तदाह- हे अरविन्दसमलोचन! मुकुन्द! एतस्मिन् अमन्दे पुण्यसमये मम नेत्रयोः समक्षे उदीयताम् आगम्यताम्। "त्वया आगम्यताम्" इत्यनेन अहं तु उत्क्रमणसमयनिकटत्वात् लुप्तदृष्टिर्न सम्यक् द्रष्टुं शक्नोमि। अतएव श्रीमतैव यथाहं पश्यामि तथा मद्दृशोर्गोचरे आगम्यताम् इति आत्मव्यापारं त्यक्त्वा भगवदालम्बनामात्रमभिव्यज्यते। पुण्यसमयोऽप्यस्मादधिकः कीदृशो भविष्यति, यन्मम आत्मनः उत्क्रमणं भवति अहं च त्वां दिदृक्षुः सम्बन्धिभिर्भूमौ अवतारितः, निःस्पन्दं पतितोऽस्मि। अतएव केवलं त्वद्दर्शनमात्रेणैव ममोद्धारः। एवंविधादनुग्रहसमयादन्यः पुण्यसमयः को भवेत्? 'कमललोचन' इत्युक्त्या 'मम दृष्टिस्तु लुप्ता, किंतु आयतलोचनस्त्वं तु मामवश्यं द्रक्ष्यसीति' भावो ध्वन्यते।।८२।।

(३२)

## शान्तरसः

**भूमिः स्रस्तरोऽस्ति महदम्बरं वितानमिद-**
**मेता मदयन्ति दिशा नन्दितनिशाकराः**
**पर इव कोऽपि न प्रतीयतेऽद्य पर्यन्तेऽपि**
**दृश्यन्ते प्रमोदकराः सकलचराचराः।**
**मञ्जुनाथ चित्तमपि प्रीयते प्रसादोदया-**
**दन्तः प्रवहन्ति पुनरात्मरसनिर्झराः**
**निर्भरप्रमोदानात्मजन्याननुशीलयतो**
**ध्यानधियानन्या यान्तु धन्या मम वासराः।।८३।।**

स्रस्तरः आस्तरणम्। इदम् अम्बरम् आकाशम् महद् वितानम् चँदोवेति भाषायां प्रसिद्धम्। नन्दितः पूर्ण इति यावत् निशाकरः चन्द्रो यासु ताः। सूर्यस्याप्युपलक्षणमेतत्। एताः दिशः। 'दिशाः'

अत्र भागुरेराप्। मदयन्ति हर्षयन्ति। कोऽपि जनः पर इव न प्रतीयते। सर्वेष्वात्मबुद्धिर्जातेत्याशयः। प्रसादस्य नैर्मल्यस्य, आत्मगतायाः प्रसन्नतायाः वा उदयात् चित्तं प्रसन्नं भवति। अन्तः हृदये आत्मनो रसस्य आनन्दस्य निर्झराः प्रवहन्ति। अतएव आत्मजन्यान् आत्मनि उद्भूतान् निर्भरप्रमोदान् अनिर्वचनीयानन्दान् अनुशीलयतः अनुभवतः मम। ध्यानधिया अनन्याः विचारे कृते नास्ति कोऽप्यन्यो येषु तादृशाः। परमार्थविचारेण द्वैतबुद्धिर्यत्र तिरोधीयते तादृशाः। अतएव धन्याः अभिनन्दनीयाः मम दिवसाः गच्छन्तु। पूर्णचन्द्रप्रकाशे प्राकृतिकदृश्यावलोकनेन आत्मानन्दमग्नस्य योगिनः कस्यचिदुक्तिः।।८३।।

( ३३ )

## कालस्य कुटिलता

**पारमुपनीता पूर्वपद्धतिः प्रवीणैरद्य**
**चलिता चतुर्दिङ् नवशैली निरुपेहितम्**
**आडम्बरमात्रं वंशमर्यादामवैति जनो**
**वादायैव सम्प्रदायवृत्तमधुनेरितम्।**
**मञ्जुनाथ मीलति मनस्वी निजमानसेऽद्य**
**कस्मै कथयेत निजवृत्तमिदमेधितम्**
**खेलत्खलजाले बत वर्तमानकाले कलौ**
**भद्रजनभाले भूतभर्तः! किमालेखितम्?।।८४।।**

चतुरैरपि नवैः पूर्वरीतिः पारं नीता, दूरीकृतेत्यर्थः। समन्ताद् नवीना परिपाटी निरुपाधि निर्निरोधं प्रचलिता। ईरितं कथितं वैष्णवशैवादिसम्प्रदायानां वृत्तं विवादायैव। मानी जनः निजमनस्येव मीलति विषादं गच्छति। एधितं वृद्धिं गतं दीर्घमिति यावत् निजं वृत्तान्तं कस्मै कथयेत? कः प्रतीकारं कुर्यात्? खेलन्तः प्रमोदमानाः खलसमूहा यत्र तस्मिन्। भद्रलोकानां ललाटे वेधसो हस्तेन किमिदं लेखितम्? भवान् हि भूतानां प्राणिनां भर्ता, अतएव प्रार्थ्यते।।८४।।

**धार्मिका ध्रियन्ते बत वैदिका विलीयन्तेऽथ**
**क्रन्दन्ते कुलीनाः क्वचित्कोणे कृतवेपितम्**
**दातारो दरिद्रा दुःखदग्धा दयावन्तो जना**
**वेपन्ते विनीता बुधा बध्यन्ते सहेलितम्।**
**साधवः सदुःखाः पुण्यवन्तो दम्भवन्तोऽभवन्**
**मञ्जुनाथ मार्मिकाः प्रयान्ति परिदेवितम्**
**खेलत्खलजाले बत वर्तमानकाले कलौ**
**भद्रजनभाले भूतभर्तः किमालेखितम्?।।८५।।**

ध्रियन्ते निगृह्यन्ते। विलीयन्ते न्यूना भवन्ति। कस्मिन्नपि कोणे कृतकम्पं यथा स्यात्तथा कुलीनाः क्रन्दन्ति। सहेलितं सतिरस्कारम्, बध्यन्ते बद्धाः क्रियन्ते पुण्यं कुर्वन्तो जनाः दाम्भिकाः परिगण्यन्ते। मार्मिकाः मर्मवेदिनः तत्त्वपरीक्षकाः परिदेवनं प्रयान्ति, विलपन्तीत्यर्थः।।८६।।

**भूरिधनराशिं विना विद्या दुर्लभैवाधुना**

**तत्रापि च विज्ञानं विनाद्य कियच्छिक्षितम्?**

**लब्धभूरिविद्योऽपि च विन्दते न सद्यो धनं**

**यस्माद् धनवद्भिर्लाभवर्त्म समावेष्टितम्।**

**एवं भूरिचिन्ताभिर्व्यतीतपुरुषायुषस्य**

**नूनमस्य भाग्ये सुखं कियदवरेखितम्?**

**खेलत्खलजाले बत वर्तमानकाले कलौ**

**भद्रजनभाले भूतभर्तः! किमालेखितम्?।।८६।।**

वैदेशिकभाषाबहुला वर्तमानकालिकी विद्या बहुतरद्रव्यव्ययं विना दुर्लभैव। शिक्षायामपि विज्ञानं ('साइन्स') विना अद्य शिक्षा कियती? न किमपीत्यर्थः।'साइन्स'-पठनमेव सम्प्रति उत्तमशिक्षा। साइन्सादिविद्यासमुपार्जनेऽपि शिक्षितः स्वल्पकाले एव धनं न विन्दति प्राप्नोति। यस्माद् ये हि धनवन्तः तैर्लाभस्य मार्ग आक्रान्तः। वैदेशिका अन्ये च ये प्रचुरधनस्वामिनः, तैर्व्यापारादीनां द्वाराणि रुद्धानि। तेषां प्रति स्पर्द्धायां द्रव्यार्जनस्य मार्गे व्यापारादौ सफलता सुतरां कठिनेत्याशयः। पूर्वं शिक्षणचिन्ता, तदनन्तरं परीक्षोत्तरणचिन्ता, तदनन्तरं द्रव्यार्जनचिन्ता, एवमादिभिर्भूरिचिन्ताभिर्व्यतिगमितसमग्रायुषः अस्य (जनस्य) भाग्ये सुखं कियद् अवरेखितम् रेखाद्वारा अङ्कितम्? न किंचिदपीत्यर्थः।।८६।।

(३४)

## शिक्षापरिपाटी

**बाल्यादेव भूरि-भूरि पुस्तकानि घोषन्तोऽपि**

**शिक्षायां न संतोषं सृजन्ति जना मीयताम्**

**पूर्वजपरिचयाय पाठ्यमितिहासाद्यपि**

**देशभाषां त्यक्त्वा हूणभाषया ह्यधीयताम्।**

**सर्वमेतत् सोढ्वापि च भ्रम्यतां बुभुक्षावशा-**

**च्छिक्षाफलमाध्यात्मिकशान्तिः क्वोपनीयताम्?**

**मन्दतममाटीकितविद्यावृक्षवाटीसुखा**

**वर्तमानशिक्षापरिपाटीयं निपीयताम्।।८७।।**

शिक्षाविषये संतोषं न सृजन्ति नाधिगच्छन्ति, मीयताम् अनुमीयतामित्यर्थः। पूर्वजानां परिचयाय पठनीयम् इतिहास-भूगोलाद्यपि। हूणभाषा अंग्रेजी-भाषा। एतं शिक्षापरिश्रमं सहित्वापि वेतनकार्यस्यालाभे

बुभुक्षापरवशैर्भ्रम्यताम्। ततश्च शिक्षाया: फलं या आध्यात्मिकी शान्ति: सा क्व प्राप्यताम्? शिक्षाप्राप्तावपि शिक्षाया: फलभूता आत्मन: शान्तिस्तु न प्राप्तेत्याशय:। अतिमन्दम् (अतिन्यूनं यथा स्यात्तथा) आटीकितं प्राप्तं विद्यारूपाया: वृक्षवाट्या: (उपवनस्य) सुखं यथा। निपीयतां परिशील्यताम्।।८७।।

(३५)

## वर्तमाना स्त्रीशिक्षा

**अन्यदीयदेशनारीशिक्षामनुकृत्य निज-**
**नारीभ्योऽपि दापयन्ति वैदेशिकशिक्षितम्**
**शिक्षिताश्च पारितपरीक्षिताश्च नार्य इमा:**
**सोल्लुण्ठं त्यजन्ति गृहकार्यमसमीक्षितम्।**
**पूर्वं किल पारतन्त्र्यमासीत् स्वस्य देश एव**
**साम्प्रतं स्वगेहेऽपि च पारतन्त्र्यमीक्षितम्**
**नूतनयुगेऽस्मिन् नवशिक्षितनराणामद्य**
**नारीशिक्षणेऽपि ननु नूतनत्वमीक्षितम्।।८८।।**

इंग्लैंडाद्यन्यदेशस्य नारीशिक्षाया अनुकरणेन निजनारीभ्योऽपि आङ्ग्लभाषामयीं वैदेशिकीं शिक्षां दापयन्ति। पारितं समापितम् उत्तीर्णम् परीक्षितं परीक्षा याभि: परीक्षोत्तीर्णा: ता इमा: नार्य:, सावहेलनम् असमीक्षितम् पूर्वापरम् अविचार्यैव गृहकार्यं त्यजन्ति। एवं स्थितौ पूर्वं स्वदेशे एव अस्माकं परतन्त्रता आसीत्। साम्प्रतं स्वगृहेऽपि परतन्त्रता ईक्षिता वाञ्छिता। स्त्रीभि: स्वगृहकार्ये त्यक्ते वयं कर्मकराणां भृत्यानां वशगा भविष्याम इति भोजनाच्छादनविषयेऽपि स्पष्टं परतन्त्रता भवेदित्याशय:।।८८।।

**वेत्रदण्डमादायाद्य वाक्कीलत्वमेति वधू**
**राजकर्मचारितां च सेयमाप्यतेतमाम्**
**सुन्दरीसमाजेनाद्य स्वीयदलं संगृह्याथ**
**राजगृहद्वारे बलात् स्वत्वमीप्स्यतेतमाम्।**
**मञ्जुनाथ साम्प्रतं तु सैनिकत्वमाप्य सैव**
**शस्त्रास्त्रै: सुसज्जा समरार्थं नह्यतेतमाम्**
**या वै गृहलक्ष्मी: पुरा मामण्डीति गेहमिदं**
**साम्प्रतं तु सैव रणचण्डी चित्र्यतेतमाम्।।८९।।**

वाक्कीलतासूचकं वेत्रदण्डं हस्ते आदाय वधू: नारी वाक्कीलत्वं प्राप्नोति। ('अदालत' प्रभृतिशासनविभागे) सेयं नारी राजकर्मचारितां प्राप्यते (णिजन्तात्कर्मणि)। स्वीयं दलं संगृह्य संघटितं

कृत्वा पुरुषवर्गसमानं स्वस्य स्वत्वम् अधिकारः याच्यते। युद्धार्थं नह्यतेतमाम् अतिशयेन वद्धपरिकरा भवतीत्यर्थः। पुरा पूर्वम् गृहं मामण्डीति अतिशयेन मण्डयति स्म सैव अस्माभिः रणचण्डीरूपे चित्रिता क्रियते। मामण्डीति 'मडि' धातोः णिज्विकल्पे यङ्लुगन्तस्य रूपम्। 'पुरि लुङ् चास्मै' इति पुरायोगे लट्।।८९।।

## षट्पदी ( छप्पय )

**पत्नी प्रियतममाप्य वन्दनं वचसा कुरुते।**
**पतिसुहृत्सु संयत्सु करोन्मर्द्दनमातनुते।।**
**पतिर्व्यलीके कृते क्षमाशब्दं बत वर्हति।**
**पतिवस्तुनि दत्ते च धन्यवादानियमर्हति।।**
**अर्द्धाङ्गिनीति गौरवपदं प्राणसमेति च सम्पदम्।**
**युक्त्यापहृत्य ददते नराः कृत्रिमोपचारापदम्।।९०।।**

पत्नी प्रियतमं आसम्मुखे आप्य वचनेन 'गुडमोर्निङ्ग, नमस्ते' इत्यादिना वन्दनं करोति। पत्युः सुहृत्सु सम्मिलत्सु तैः सह करमर्द्दनम् ('शेकहैण्ड') आतनोति करोति। किंचिद् अप्रिये कृते सति पतिः 'क्षमस्व' इति क्षमाशब्दम् उच्चारयति। इयं पत्नी भूमौ पतिते पतिवस्तुनि उत्थाप्य समर्पिते सति धन्यवादान् (थैंक्स) अर्हति। प्रियतमस्य पत्नी 'अर्द्धाङ्गिनी' इति गौरवस्य पदम्, प्राणैः समा दयिता इति वाञ्छनीयां सम्पत्तिं युक्त्या चातुर्येण अपहृत्य पुरुषाः स्त्रीभ्यः कृत्रिमोपचार (बाह्यशिष्टाचार) रूपाम् आपत्तिं ददते समर्पयन्ति। सम्पत्तिम् अपहृत्य आपत्तिप्रदानेऽपि स्त्रीणां प्रसन्नता पुरुषाणां युक्तिकौशलमेवेत्यर्थः। परिवृत्तिः।।९०।।

( ३६ )

## श्रीमहालक्ष्मीः

**यस्याः करुणालवेन जगति जघन्यो जनो**
**लोके धन्यधन्यो भाति परितः परीक्ष्यताम्**
**किं बहुना दैत्यदलनाय देवनायकोऽपि**
**यत्कृपां प्रतीच्छतीति कोऽपि कृती वीक्षताम्।**
**सर्वविधसौख्यसर्वसम्पत्समवापनाय**
**सपदि समीपगता दीपाली प्रतीक्ष्यताम्**
**क्लेशनिकुरम्बादिह सम्बाधेत किं वा भयं**
**लक्ष्मीर्जगदम्बा कृपालम्बात्क्षणमीक्षताम्।।**

करुणालवेन दयालेशेन। जघन्यो नीचः, धन्यधन्यः श्रेष्ठादपि श्रेष्ठतरः। प्रतीच्छति प्रतीक्षते इति प्रत्येकः कृती शिक्षितः देववृत्तान्तेषु पश्यतु। समवापनाय प्राप्तये। क्लेशनिकुरम्बात्

नानाविधदुःखसमूहात् किं भयं कीदृशं भयं बाधां कुर्यात्? श्रीलक्ष्मीः कृपालम्बाद् दीनेषु कृपाम् अङ्गीकृत्य क्षणकालार्थं वीक्षताम्। लक्ष्म्याः कृपादृष्टौ जातायां क्लेशसमूहात् किंचिदपि भयं न भवतीत्यर्थः।।

दो.- **सदा संनिधिं विदधती भूरि भारतं पातु।**

**महितमहालक्ष्मीर्मुदं सुखसम्पदं ददातु।।**

सर्वदा सामीप्यं दधती, सर्वदैव समीपे निवसन्तीत्यर्थः। महिता सर्वैः पूजिता।।

(३७)

## सवैयास्तबकः

**ललितं ललनासु निभालयत-**
**त्स्वरितं हि शिरः पलितं पुरु मे**
**न दधामि पदे तव हृत् प्रमदेन**
**तदेतदहो दुरितं गुरु मे।**
**करुणं तव वीक्ष्य तु देव मनाक्**
**समुदेति हि धैर्यमुरस्युरु मे**
**मुनिमानसमोदविवर्द्धन हे**
**मुरमर्दन मोहमपाकुरु मे।।१।।**

स्त्रीषु ललितं विलासविशेषम् निभालयतः पश्यतः मे शिरः पुरु अधिकं यथा तथा पलितं जरया श्वेतमभवत्। तव पदे प्रमदेन हर्षेण हृत् हृदयं न दधामि। उरसि उरु बहु धैर्यम्।।१।।

**सुचिरात् तव तल्पतलोपगतं**
**परिलोकय देव दृशा जितकुन्द!**
**भवदाश्रितमेतमपास्यसि किं**
**प्रविधास्यसि किं प्रचलन्मुचुकुन्द।**
**किमु वच्मि मुखान्न वशोऽसि हि मे**
**परमत्यलसोऽसि करे धृततुन्द!**
**न विनिन्दय दीनदयालुपदं**
**भवदङ्घ्रितले नय नाथ मुकुन्द।।२।।**

तव तल्पस्य शयनमञ्चस्य तले नीचैः उपगतं प्रार्थनार्थमागतं माम्। दृष्ट्या, श्वेततायां जितं कुन्दपुष्पं येन तत्सम्बुद्धौ। भवदाश्रितम् एतं माम् किम् अपास्यसि, त्यजसि त्यागो नोचित इत्यर्थः। मायया मुचुकुन्दोऽपि त्वया विचालितः, प्रचलन् मुचुकुन्दः तन्नामको राजा यस्मात्ते तत्सम्बुद्धौ।

अतएव त्वत्तो बहुकालं शयनमेव स वृतवान्। एवं प्रभावशालिन्! त्वं किं विधास्यसि? मद्विषये का ते चिकीर्षेत्यर्थः। अहं मुखात् किं कथयामि, त्वं मे वशः वशीभूतः नासि। अवशत्वादहं तुभ्यं मुखागतमपि न वदामि। परं करे धृतः तुन्दः फुल्लमुदरम् येन तत्सम्बुद्धौ। त्वमत्यन्तमलसोऽसि। ममोद्धारार्थं विचारमेव कुर्वंस्त्वमत्यलसोऽसि। उपालम्भं वदन्नपि प्रकटं निषिध्यतीत्याक्षेपालङ्कारः।।२।।

**१. उपजातिः**

**धनजायाजनेषु निलीनमिमं**
**तव मायाविमोहैर्न चालय माम्**
**भवबन्धान्निवर्त्य निरीहतमं**
**त्वदमन्ददृशा त्वधिलालय माम्।**
**करुणामवकर्ण्य ते दीनजने**
**शरणागतमेतं प्रपालय माम्**
**विषयेषु रतिर्बत बधिका मे**
**ननु राधिकाकान्त! निभालय माम्।।३।।**

त्वदमन्ददृशा तव कृपादृष्ट्या तु अधिलालय आह्लादय। दीनजने ते तव करुणाम् आकर्ण्य।।३।।

**वरवाग् वितता ललिते लुलिते**
**पलितेन शिरः सिततामनुयाति**
**नृपनागरनैगमनेतृनये**
**बत येन कृता कृतिता प्रतिभाति।**
**यदि मञ्जुलनाथ मतिर्न गता**
**जगतामधिपे तदपार्थकताति**
**परिशोचय तं बत यस्य दृशो-**
**र्व्रजराजकिशोरविभा न विभाति।।४।।**

वरवाक् श्रेष्ठा वाणी ललिते लुलिते शृङ्गारप्रधानकाव्ये एव वितता व्याप्ता। नागराः पौराः। नैगमाः वणिजः। नेतारः प्रजाप्रमुखाः, एतेषां नये नीतौ यत्कृता कृतिता चातुरी भाति। जगतामधिपे ईश्वरे यदि मतिर्न गता, तत् तदा अति अपार्थकता निरर्थकता। यस्य नेत्रयोः श्रीकृष्णस्य विभा शोभा न भाति, तं जनं परिशोचय।।४।।

**वनवीथिषु यो विहरन् व्यदधाद्**
**व्रजवासिमुदं वसुधाभरहारी**
**कटुकालियमौलिषु केलिमय-**
**न्नभवद्रमयन् यमुनातटचारी।**

इह मञ्जुलनाथमनस्यभवद्

भयपुञ्जहरः स निकुञ्जविहारी

परिमार्ज्य मतिं मम मोहरतां

निजगोचरतां गमयेद् गिरिधारी।।५।।

कालियसर्पमस्तकेषु नृत्यकेलिं कुर्वन् यमुनातटचारी यः लोकान् मोदयन् अभवत्।'धातुसम्बन्धे प्रत्ययाः' इति भूते शतृ। मोहलग्नां मे मतिं परिशोध्य गिरिधारी मां निजगोचरतां गमयेत् स्वकीयतां नयेदित्यर्थः।।५।।

येन पुरा प्रतिपत्तिपरा वनवह्निभरादविता पशुपाली

यो हि विपत्तिगते समभूद् द्विरदे दययैव पुरा प्रतिपाली।

वीक्ष्य हरेश्चरितानि मनागिह मञ्जुलनाथ उपाश्रयशाली

पङ्किजनीसदृशा स दृशा मम हीनदृशां विमृशेद्वनमाली।।६।।

प्रतिपत्तिः शरणागतिः। पशुपानां गोपानामाली पङ्क्तिः दावानलाद् अविता रक्षिता। द्विरदे गजे, प्रतिपाली प्रतिपालकः। उपाश्रयशाली आश्रयग्राहीत्यर्थः।।६।।

मायिकमोहमरीचिकया मथितं लघु मां व्यथितं परितर्पय

देव दयामृतपूर्णदृशा द्रुतमेतदहो दुरितं त्वपदर्पय।

मञ्जुलनाथमनाथमिमं निकटे तव नाथ मनागुपसर्पय

रङ्कजनस्य कलङ्कहरं पदपङ्कजमेतदशङ्कितमर्पय।।७।।

मायाजनितमोहसम्बन्धिन्या मृगतृष्णया मथितं व्याकुलीकृतं मां लघु शीघ्रं परितर्पयं संतोषय। दुरितं तु अपदर्पय विगतगर्व कुरु, दमयेत्यर्थः। उपसर्पय प्रापय। रङ्कजनस्य दीनजनस्य सर्वविधकलङ्कहरम्।।७।।

गणिकागुहगृध्रगजादिषु किं

कलिता न कृपा वद दृप्यदपोहन

किमु दुर्बलदुष्कृतिदीनजनान्

विजहासि वदेरयि दोहददोहन।

अयि मञ्जुलनाथ चिरान्मृगये

तदये मम मानसतो ह्यवरोह न

मयि सम्प्रति ते तरुणाब्जसखीं

करुणादृशमर्पय मन्मथमोहन।।८।।

दृप्यतां गर्वं कुर्वतां जनानाम् अपोहन बहिष्कारक ! त्वं वद। दोहद-दोहन कामपूरक ! किमु दुर्बल-दुष्कृत्यादीन् विजहासि? अपि तु न विजहासि। तर्हि मामेव किं त्यजसीत्याशयः। मृगये अन्विष्यामि। न अवरोह न गच्छ।।८।।

**मूर्द्धनि मञ्जुमयूरशिखा श्रवसोः किल कुण्डलयुग्ममुदञ्चतु**
**वक्षसि ते वनमाल्यमुदेतु मुखे मुरलीसुषमा परिचञ्चतु।**
**काञ्चिरुदञ्चतु पीतपटे मणिनूपुरमङ्घ्रितटे बत मुञ्चतु**
**मानसमन्दिरमध्यमियं तव मञ्जुलमूर्तिरहर्निशमञ्चतु।।९।।**

मयूरशिखा मयूरपिच्छम्। चञ्चतु दीप्यताम्। अङ्घ्रितटे नूपुरं मुञ्चतु स्थापयतु।।९।।

**मम बन्धुगणो विमुखत्वमयात्त्वमपीह दयामय चञ्चसि किम्**
**विषयैर्जननावधिवञ्चितमेनमहो त्वमपि प्रिय वञ्चसि किम्।**
**भृशमन्तिकमन्तकरोऽयमुपेत्य रुजामकरोच्चिरमञ्चसि किम्**
**अमुना श्वसनेन वपुर्व्यधुनादधुना यदुनायक मुञ्चसि किम्।।१०।।**

चञ्चसि त्यक्त्वा गच्छसि। अन्तकरः कालः अन्तिकमेत्य भृशं रुजां पीडाम् अकरोद् इदानीं चिरं विलम्बं किम् अञ्चसि अवलम्बसे। अयमन्तकरः अमुना श्वासेन में शरीरं व्यधुनात् अकम्पयत्।।१०।।

**रसवद्वचना रचना रचना विगुणा रचना त्वरुचिन्यसना**
**भुवनाधिपतेः पदसंकलना कलनास्ति परा जगदुज्जसना।**
**प्रभुसद्गुणसंघटना घटना त्वपरा घटना जनताहसना**
**इतरा रसना विफलव्यसना हरिनामधना रसना रसना।।११।।**

रसवन्ति वचनानि यस्याम् ईदृशी रचना कविता रचनापदवाच्या। पदसंकलना चरणाश्रयणं कलना (क्रिया)- पदवाच्या। जगतः उज्जसना पीडयित्री। जनताहसना जनताया हसनं यस्याः सकाशाद्। हरिनामस्मरणमेव धनं यस्याः ईदृशी रसना जिह्वा।।११।।

**बहुदुर्मददैत्यगणैर्दलितं सततं भुवनं परिपासितमाम्**
**नयनिर्बलनिस्सहनिस्स्वजनस्य निहंसि सदा विपदामसमाम्।**
**ननु वेद्मि न वेत्सि ममाकुलतां मदमोहभृतां निदधासि रमाम्**
**अपि चर्चितचन्दन कंसनिकन्दन हे यदुनन्दन नन्दय माम्।।१२।।**

नयनिर्ब.- नये नीत्यां निर्बलः, अतएव निस्सहो यो निर्धनजनः तस्य असमाम् असाधारणीं विपदां विपत्तिम् (भागुरेराप्)। त्वं मम आकुलतां न वेत्सि इति वेद्मि, यतो मदमोहपूर्णां (जडधनरूपां) लक्ष्मीं वक्षसि निदधासि। लक्ष्मीयुक्ता मदेन मोहेन च दीनानां व्याकुलतां न परिजानन्ति।।

**भवबन्धकरेषु रमे नितरां चपलं मे मनश्चपलालवलेहि**

**न च साधुजनेषु निलीनं क्वचिन्मम दीनं वचोऽप्यधमे बत 'देहि'।**

**सुकृतस्य लवोऽपि न संध्रियते चरिते मम नाथ न दृष्टिं निधेहि**

**क्व विशालो ममास्ति कपालो मुकुन्द तथापि दयालो दयां प्रविधेहि।।१३।।**

चपला.- चपलाया लक्ष्म्या लवं लेढि सतृष्णमनुधावति तच्छीलम्। मम मनः साधुजनेषु क्वचिदपि न लीनम्। अधमेऽपि 'बत देहि' इति मम दीनं वचः। क्व विशालः सुकृताद्यभावान्मम विशालः कपालः अर्थात् विशिष्टं भागधेयम् क्वास्ति।।१३।।

## २. मत्तगयंद ( मालती ) इंदव

**जन्मनि नेह कृतं सुकृतं**

**दुरितानि तु दीनमिमं दमयन्ते**

**दुर्गुणदुर्गमवेत्य हि मां**

**परिवृत्तधियः सुधियस्तृणयन्ते।**

**नाथ! न पश्यसि किं नु? जना**

**बत मञ्जुलनाथमनाथमयन्ते**

**देहि सशोकशिशोरवने**

**व्रजराजकिशोर! कटाक्षकणं ते।।१४।।**

मया इह अस्मिन् जन्मनि सुकृतम् न कृतम्। पापानि दीनम् इमम् मां दमयन्ते अभिभवन्ति। दुर्गुणानां दोषाणां दुर्गं दृढरक्षास्थानम् अवेत्य ज्ञात्वा, परिवृत्ता मत्सकाशाद् विमुखीभूता धीः बुद्धिः येषां ते सुधियः सज्जनाः मां तृणवत् तिरस्कारयोग्यम् कुर्वन्ति तत्करोतीति णिच्। 'दुर्ग' पदेन-दुर्गे यथा निर्भयं निवसन्ति तथा मयि पातकानि दृढतया निवसन्तीति दोषातिशयो ध्वन्यते। हे नाथ किं त्वं न पश्यसि? यत् जनाः माम् मञ्जुनाथम् अनाथम् अयन्ते जानन्ति। अरक्षितं ज्ञात्वां पीडयन्तीत्यर्थः। सशोकस्य अस्य शिशोः बालकस्य मम अवने रक्षणे दृष्टेः लवमपि देहि।।१४।।

## ३. चकोर

**दुर्भरदम्भभृतं सुतमां बत मामिह सूरिषु को न निनिन्द**

**भूरि भयेन विरौमितमामयि मञ्जुलनाथ! दयां मयि विन्द।**

**दुर्भगदीनदरिद्रकृते प्रथिता तव वत्सलता यदुनन्द!**

**निन्दसि किं ननु नन्दय मां मतिमन्दमिमं दययैव मुकुन्द।।१५।।**

सुतमाम् अत्यन्तम् 'सु' इत्यव्ययात्तमप्। दुभरेण दम्भेन भृतम् माम् पण्डितेषु को वा न निनिन्द अपि तु सर्वेऽपि। भयवशाद् अहम् अतितमां रोदिमि। हे मञ्जुनाथ हरे! मयि दयां विन्द भज,

कुरु। दुर्भाग्यनिर्धनदीनानां कृते तव वात्सल्यं प्रसिद्धम्। यदून् नन्दयति तत्सम्बुद्धौ। मन्दमतिम् इमं मां किं निन्दसि? हे मुकुन्द! दयाद्वारा मां नन्दय सुखितं कुरु। पुण्यबलं बुद्ध्यादिकं वा मत्सविधे नास्ति। तव दयामेवालम्ब्य सुखितो भवितुमिच्छामीति निस्साधनतां सूचयित्वा भगवदनुग्रहः प्रार्थ्यते।।१५।।

## ४. मुक्तहरा

**दृशोरुपगच्छति मे तिमिरं बधिरं श्रुतियुग्ममिहायसि नैव**
**शनैरपगच्छति चेतनता भवतारण! सम्प्रति धावसि नैव?**
**क्षणादपि देव! तनुर्निपतेदधुना तु विहातुमिहार्हसि नैव**
**अये मम संविरतेः समयेऽपि हि नाथ! नयेन निभालसि नैव।।१६।।**

अन्तसमये भगवतः प्रार्थना-मम दृशोः नेत्रयोः अन्धकारः आगच्छति। मम कर्णद्वयं बधिरं (जातम्) इति न अयसि जानासि; हे भवात् तारक! अस्मिन् करुणसमयेऽपि उद्धारार्थं न धावसि। अधुना तु मां त्यक्तुं न अर्हसि। मम संविरतेः उपरामस्य, लोकान्तरगमनस्य समये अपि दयानुकूलेन न्यायेन मां न निभालयसि पश्यसि? 'भाल' धातुर्भ्वादिः (आकृतिगणः)।।१६।।

## ५. सुन्दरी (मल्ली, सुखदानी)

**निजनिर्भरणे निरतः सकलो विकलोपरि केन दयाऽऽचरणीया**
**न च धर्ममधर्ममवैति जनो धनिलोकमनोऽनुगता धरणीया।**
**न सनातनरीतिषु रज्यति कोऽपि कथं नु जनैर्द्विजताऽऽदरणीया**
**अधुना बत मञ्जुलनाथहिते भवता यदुनाथ! कृपा करणीया।।१७।।**

निजस्य परिपूरणे तत्परः। विकलस्य पीडितस्योपरि दया केन करणीया? न केनापि क्रियते। अवैति जानाति। केवलं धनिलोकानां मनसः अनुगामिता अनुसरणम् स्वीकरणीया। रज्यति अनुरक्तो भवति। तदा जनैर्मम ब्राह्मणता कथमादरणीया? द्विज इतिबुद्ध्या न कोऽप्यादरं कुर्यादित्यर्थः।।१७।।

## ६. अरविन्द

**अयि देव विलोकय दीनदशां**
**विवशां विवहामि तनूमवधेहि**
**तव दर्शनलालसया ह्यनया**
**हृदि धैर्यमुदेति सुधालवलेहि।**
**भवदागमनोत्कलिकासु मनो**
**वितनोति मनोरथकोटिमवेहि**
**अरविन्दविलोचन नाथ मुकुन्द!**
**विनन्दय मानसमाकुलमेहि।।१८।।**

अवशां तनूम् शरीरम् धारयामि, इति अवधेहि। किंतु तव दर्शनं शीघ्रं भविष्यतीति लालसया अमृतलेशचुम्बि धैर्यं भवति। भवत: आगमनविषये नानाविधा उत्कण्ठा भवन्ति, तद्विषये मम मन: एवम् एवम् करिष्यामीति अनन्तान् मनोरथान् करोति, इति जानीहि। आगमनस्य विचार एव सेयं दशा, त्वल्लाभे तु कावस्था भवेदित्युत्कण्ठातिशयो ध्वन्यते। हे मुकुंद एहि मानसमानन्दितं कुरु।।१८।।

## ७. लवङ्गलता

### प्रात:काले भगवत्स्मरणम्

**विहायसि निर्मलरोचिरुदेति,**
**निरेति तम: प्रशम: पदमृच्छति**
**पुरंदरदिक्प्रमदावदनं**
**नवरागघनं सुषमामभिगच्छति।**
**जगत्स्वपि जागृतिरेति मनागपि**
**मञ्जुलनाथमनो मुदमिच्छति**
**उषा भुवनेश्वरभावपुषा**
**वपुषा प्रमदं विदुषामभियच्छति।।१९।।**

आकाशे स्वच्छं रोचि: तेज: उदेति, तम: निर्गच्छति, (स्वभावत एव प्रात:) शान्ति: पदम् स्थानम् ऋच्छति प्राप्नोति करोति। पूर्वदिग्रूपाया वध्वा: मुखम् उषारागेण नवरागयुक्तं सत् शोभां गच्छति।'जागृति:' एति भवति, इति लोकव्यवहारानुसारम्, अन्यथा'जागर्ति:' इति स्यात्। मञ्जुनाथस्यापि मन: मोदं वाञ्छति। सेयं उषा प्रात:काल: जगदीश्वरम् प्रति भावम् भक्तिम् पुष्णाति ईदृशेन स्वशरीरेण विदुषाम् तत्त्वज्ञानां भक्तानाम् प्रमोदं ददाति। 'उषा' इति वैदिक: शब्दोऽपि साहित्ये प्रयुज्यते। प्रात:कालो भगवन्तं प्रति भावनामाकर्षतीति सूच्यते।।१९।।

## ८. सुख ( किशोर, कुन्दलता )

**परिकर्षति कामकषायभरो**
**विकरोति मदो मयि मानसमीरय**
**सुखवासनया ह्यनया परितो-**
**ऽधरितोऽस्मि न नाथ मनागवधीरय।**
**वद केन यथा परियामि विभो**
**भवभोगतृषं तरसा बत तीरय**
**अयि भो भवतारण दु:खविदारण!**
**जीवितधारणरीतिमुदीरय।।२०।।**

कामवासनासमूहः मां स्वाभिमुखम् आकर्षति। मदो मयि विकारमुत्पादयति। हे विभो मयि मद्विषये भवच्चित्तं प्रेरय। सुखप्राप्तेः वासनया समन्ततः अधरीकृतोऽस्मि तिरस्कृतोऽस्मि, अतएव तिरस्कृतं मां त्वं न तिरस्कुरु। तरसा शीघ्रम् मम भवभोगतृष्णां तीरय समापय। अतएव परितः व्याकुलोऽहं जीवितं कथं धारयेयम् इति रीतिं त्वमेव उपदिश।।

## ९. वाम ( मञ्जरी, मकरन्द, माधवी )

### पार्वतीतः प्रार्थना

**नदन्ति गृहे मददन्तिघटा**
**विसृजन्ति जनोपरि दानपयोदम्**
**भरन्ति गुणैर्भुवनानि मनाग्**
**विहरन्ति मनोज्ञवनेष्वनुगोदम्।**
**वहन्ति मनोरमकाव्यकलां**
**तव दासजना जनयन्ति विनोदम्**
**त्वदन्तिकतो हि जयन्ति शिवे!**
**घटयन्ति समस्तमियन्ति समोदम्।।२१।।**

गृहे मदयुक्तानां दन्तिनाम् हस्तिनाम् घटाः समूहाः। नादं कुर्वन्ति। ते लोकानामुपरि दानरूपं मेघं वर्षन्ति। निजगुणैः भुवनानि पूरयन्ति। गोदाम् अनु गोदावरीनदीतटे मनोज्ञेषु वनेषु विहरन्ति। (गोदावरीतटं प्राकृतसौन्दर्यार्थं प्रसिद्धम्।) तव दासजनाः काव्यकलाद्वारा लोकानां मनोविनोदं कुर्वन्ति। त्वत्सकाशाद् इयन्ति एतावन्ति राजत्वकवित्वादीनि घटयन्ति सम्पादयन्ति।।२१।।

## १०. किरीट

### श्रीगङ्गातः प्रार्थना

**जन्मनि जातु कृतं न हितं मम**
**देवगणो दुरितं किमपोहतु**
**जाह्नवि! कं शरणं परियामि**
**ममोद्धरणं किल कः परिशोचतु।**
**दीनमुपायविहीनमिमं**
**दयया परिगृह्य गिरं मम बोधतु**
**देहविमोकदिने भुवनेश्वरि!**
**गात्रमिदं पुलिने तव लोठतु।।२२।।**

आत्मनः परेषां च हितं न कृतम्। देवगणो मम पातकं किमिति दूरीकरोतु? न कुर्यात्। हे गङ्गे! ममोद्धारस्य कस्य हृदये चिन्तास्ति? न कस्यापि। साधनहीनम् इमं दीनं दयाद्वारा स्वीकृत्य मम वाणीम् प्रार्थनाम् भवती एव शृणोतु। का सा प्रार्थना? हे 'भुवनाधीश्वरि गङ्गे! देहत्यागदिने मम इदं शरीरं तव तटसैकते लोठतु'।।२२।।

## ११. अरसात

**पातकपुञ्जमपोहयितुं भुवि**
**याभिययौ व्यपदिश्य भगीरथम्**
**खेलदवारितवीचिघटा च**
**जटासु जगाम निमीलितमन्मथम्।**
**मञ्जुलनाथ! न शोच मना-**
**गधुनापि पुनाति भवादृशमुद्व्यथम्**
**देवधुनी तव सा विधुनीत**
**मनोमधुनीतमलीकमनोरथम्।।२३।।**

लोकानां पातकसमूहम् अपोहीयितुं दूरीकर्तुं भगीरथं व्यपदिश्य भगीरथं नृपं निमित्तीकृत्य या भुवि अवततार। खेलन्ती अवारिता (अप्रतिरुद्धा) तरङ्गवटा यस्याः ईदृशी या गङ्गा निमीलितमन्मथं संहृतकामदेवं शिवं जटासु जटानामुपरि जगाम प्राप। त्वं शोकं मा कुरु, अधुनापि सा गङ्गा भवादृशम् उद्व्यथम् उत् उच्चैः अधिका व्यथा यस्य तादृशं जनं पवित्रीकरोति। सा देवनदी मनोमधुना नीतम् नमः कल्पितम् मधु मनोमोदकमितिवत् यत् अलीकसुखम् तेन नीतम् सम्पादितम् मिथ्याभिलाषम् विधुनीत अपनयेत्। मनःकल्पितसांसारिकमधुरमनोरथस्य वशात् त्वं विषयेषु निबद्धो भवसि। गङ्गा तमेव ते विषयाभिलाषं दूरीकुर्यादित्याशयः।।२३।।

## १२. दुर्मिल

**जननावधि लौकिकसंघटना-**
**गतचित्तमनामयहीनमिमम्**
**सदनावनिवित्तयशोललना-**
**दिसमानयनानिशलीनमिमम्।**
**अपि मञ्जुलनाथ! दयाविधिना**
**कुरु ते चरणाभिमुखीनमिमम्**
**अधुना दवदुःखघनाकुलितं**
**यदुनाथ! सनाथय दीनमिमम्।।२४।।**

जननावधि जन्मन आरभ्यैव लोकस्य कार्यपरम्परासु गतं चित्तं यस्य। अतएव अनामयहीनम् आमयाभावेन रोगाद्युपद्रवाभावेन रहितम् आमयसहितमिति यावत्। गृह-भूमि-धन-कीर्ति-स्त्री-प्रभृतीनां संग्रहे नित्यरतम्। दव (वनवह्नि) वत् यद् दुःखघनं दुःखसम्भारः तेन व्याकुलितम् इमं दीनं सनाथय सर्वापद्भ्यो रक्षेति भावः।।२४।।

(३८)

## अश्वधाटी

**संदाहिनित्यपरनिन्दादिपापकृतिकन्दाधिरोपमुपयन्**
**किं दानलोभलवसंदानितो भ्रमसि मन्दालयेषु नितराम्।**
**त्वं दास्यमेत्य मुनिवृन्दार्चनीयमघबन्धात्यययाय भज भो**
**मन्दारमञ्जुमकरन्दालिमेदुरमुकुन्दाङ्घ्रिकञ्जमनिशम्।।१।।**

संदाहिनां हृदयदाहकराणां परनिन्दादिपापकार्याणां यः कन्दः मूलम् तस्यारोपणम् उपयन् कुर्वन्। संदानितो बद्धः। अघबन्धात्यययाय पापबन्धनदूरीकरणाय। मन्दार.- पारिजातस्य मञ्जुर्या मकरन्दालिः मकरन्दराशिः तया मेदुरम् सान्द्रस्निग्धम् अङ्घ्रिकमलम् भज।।१।।

**भालानतावपि करालास्यमज्ञमहिपालाग्र्यमेनमयसे**
**कालातिपातिमदहालावमत्तधनपालालयेषु विचरन्।**
**बालायितोऽसि बुधमालार्चितोऽपि न ममालापमुत्सृज सखे**
**व्यालालिकेऽपि रुचिजालावभासिव्रजपालाङ्घ्रिमर्चय चिरम्।।२।।**

भाला.- मस्तकनमनेऽपि करालमुखम् एनम् अज्ञम् महीपालश्रेष्ठम् अयसे उपगच्छसि। काला.- कालक्षेपकाः, मदमद्येन अवमत्ता ये धनपालाः धनिनः। व्याला.- कालियसर्पस्य मस्तकेऽपि कान्तिसमूहेन अवभासिनम् प्रकाशिनम् श्रीकृष्णस्य चरणम्।।२।।

**भारीभवद्भुवनचारीद्धदुःखविनिवारी व्रजावनिपतिः**
**पारीन्द्रदन्तपरिदारीन्द्रगर्वपरिहारी हरेत विपदम्।**
**नारीजनेन परिवारी दिवाकरकुमारीतटे मुदमयन्**
**हारीन्द्रनीलरुचिहारी गरिष्ठगिरिधारी धिनोतु सततम्।।३।।**

भारी.- भारायितं यद् भुवनचारिणाम् इद्धं प्रवृद्धं दुःखं तस्य निवारकः। पारी.- पारीन्द्रो हस्ती (कुवलयापीडः) तस्य दन्तविदारकः। हारी.- हारी (मनोहारी) य इन्द्रनीलः तस्य रुचिं हरति विडम्बयति। धिनोतु प्रीणयतु।।३।।

**आयासहेतुसुतजायाधनादिदुरुपायाय धावसि चिरं**
**कायावशोषिदृढदायाददुःखमवसायान्तरे तु तुदसे।**
**आयाहि सर्वमपहायावसादमयि! मायाप्ररोहणहरः**
**पायादशेषदुरपायादसौ जलधिजाया धवोऽनवरतम्।।४।।**

आया.- धनादीनां दुरुपायाय दुष्टेपायार्थम्। अवसायपर्यन्ते ज्ञात्वा। तुदसे व्यथसे। आयाहि.- अयि सर्वम् अवसादं दु:खम् अपहाय आयाहि। माया.- मायाया: प्ररोहणम् अभिवृद्धिं हरति। जल.- जलधिजाया: लक्ष्म्या: धव: पति:।।४।।

**अंसावरोहितनृशंसावलीविहितशंसाप्रसारमुदितो**

**हंसावदातभवनं साधयस्यतिरिरंसापहिंसितमना:।**

**त्वं सारशून्यपरहिंसापरेष्वथ च किं साभिमानमयसे**

**संसारसारमिह संसाधयस्व किल कंसारिपादकमलम्।।५।।**

अंसा.- स्कन्धे स्थापिता: अत्यादरभाजनानि इत्याशय:। येन नृशंसास्तद्विहिता शंसा प्रशंसा। रिरंसा.- रन्तुमिच्छया बलाद्धिंसितम् अर्थात् हीनीकृतम् मनो यस्य, ईदृशस्त्वम्। परहिंसातत्परेषु दुष्टेषु साभिमानम् किम् अयसे गच्छसि।।५।।

**शालीनवंशरुचिशालीष्टगोपवनितालीमयन् प्रणयतो**

**यालीकलोकपरिणालीमपास्य चिरमालीयताङ्घ्रिकमले।**

**कालीभवत्कुटिलकालीयपन्नगफणालीषु नर्तनपटु-**

**स्तालीवने विपिनपालीप्रमोदिवनमाली मुदं दिशतु मे।।६।।**

शालीने विनम्रे वंशे रुचिशालिनी इष्टा च या गोपवनितानाम् आली पङ्क्ति: तां प्रणयत: प्रेम्णा अयन् प्राप्नुवन्। या वनिताली अलीकां लोकप्रणालीम् अपास्य चिरम् चरणकमले आलीयत लीनाभवत्। काली.- कालरूपेण परिणमन् य: कुटिलकालियसर्पस्तस्य फणापङ्क्तिषु। विपिन.- विपिनं वनं पालयन्ति ता विपिनपाल्य: ताभि: प्रमोदते तच्छीलो वनमाली।।६।।

**संतापहेतुधनसंतानलाभसुखसंतानलोलुपमना**

**हिन्तालतालतरुकुन्तावृतासु हरिदन्ताटवीषु रमसे।**

**अन्तावसायिगृहचिन्ताशतस्य तव हन्तारमाश्रयसि कं?**

**किं तावदीप्ससिदुरन्ताढ्यमेहि हरिचिन्तामणिं श्रय सखे।।७।।**

धनादीनां लाभस्य य: सुखसंतान: सुखपरम्परा तस्यां लोलुपचित्त:। हिन्ता.- हिन्तालादयस्तरव एव कुन्ता भल्लास्तै: आवृतासु। हरिद.- दिगन्ताटवीषु दूरपर्यन्तव्याप्तेषु वनेषु। अन्ता.- अन्ते अवसीयते समाप्यते तादृशस्य तव गृहचिन्ताशतस्य। हन्तारं नाशकम् कम् आश्रयसे? कोऽपि ते गृहचिन्तानिवारको नास्तीत्यर्थ:। दुरन्ता.-दुरन्तम् भयंकरम् आढ्यं धनिनं किम् ईप्ससि वाञ्छसि। हरिरूपं चिन्तामणिं श्रय।।७।।

**आताम्रमञ्जुमणिवातायनस्थमनुयाता भवान् नरपतिं**

**धातापि यत्र नुतिधाता भवेत्तमनुयातास्म्यहं व्रजपतिम्।**

**आतापहेतुरवपातादिकृद्यदि तु दाता तवास्ति नृपति-**

**र्भ्राता बलस्य परिपाता व्रजस्य मम दाता शिवस्य स भवेत्।।८।।**

भवान्.- भवान् नरपतिम् अनुयाता (तृन्), तर्हि यत्र विधातापि स्तुतिस्थापकः ईदृशं व्रजपतिमहमनुयातास्मि अनुयास्यामि (लुट्)। अवपाता.- क्रोधे सति अधः पातादिं करोति। बलस्य बलभद्रस्य।।८।।

**छन्दातिवर्तिजननिन्दापरो ह्यहममन्दाभियोगनिरतः**

**क्रन्दामि नित्यमघवृन्दाधिपत्यमुपयन् दास्यदुःखितमनाः।**

**नन्दालये ध्रुवमलिन्दान्तरस्थितमिलिन्दायितं जनहितं**

**विन्दामि नूनमरविन्दायताक्षमिह वृन्दावनेशमनिशम्।।९।।**

छन्दातिवर्तिनो निजाभिप्रायबहिर्भूतस्य जनस्य निन्दापरः अहम् अमन्दे तीव्रे अभियोगे निरतः। अघ.- पापराशेः आधिपत्यं स्वामित्वं प्राप्नुवन् दासभावदुःखितः क्रन्दामि। अलिन्दा-द्वारप्रकोष्ठकान्तरस्थितमिलिन्द (भ्रमर) सदृशम्।।९।।

## (३९)

## नारायणनर्कुटकम्

**जय जलधिप्रसूतकमलामुखलालसदृक्**

**जय जलजाभिजात चरणानतभक्ततते।**

**जय जडजङ्गमादिजननस्थितिसंहृतिकृत्**

**जय जनतापहारक जगन्महनीय हरे।।१।।**

कमलामुखे लालसा साभिलाषा दृक् यस्य तत्सम्बुद्धौ। जलजवत् अभिजातौ सुन्दरौ यौ चरणौ तयोरानता भक्ततितिर्यस्य।।१।।

**कति कति वा न घोरपुरुपातकिनो भवता**

**दयित दयावशेन भवसागरतो ह्यविताः।**

**इममतिदीनमङ्ग मतिहीनतमं रहयन्**

**कथमु दधासि नाथ करुणावरुणालयताम्।।२।।**

घोराः पुष्कलपातकयुक्ताः। अङ्ग सम्बोधने। अतिदीनम्, मति.- मत्या अत्यन्तं हीनम् इमं माम् रहयन् दूरे कुर्वन्।।२।।

**सततमलीकलोभलवमोहमरीचिकया**

**गुरुगहने भ्रमामि भवभीमवने विमनाः।**

**प्रदिश दयावतार तव पादतलोपगते**

**दलदरुणाम्बुजाततरुणां करुणार्द्रदृशम्।।३।।**

अलीको यो लोभलवः तेन, मोहमरीचिकया च। अथवा लोभलवश्च मोहश्च तयोर्मृगतृष्णिकया, गुरौ गहने भवरूपे भीमे वने विमनाः सन् भ्रमामि। दलद.- दलत् विकसत् यत् अरुणम् अम्बुजातम् कमलम् तद्वत् तरुणां नवीनाम् तव करुणार्द्रां दृशं पादपतिते मयि प्रदिश देहि।।३।।

**भ्रमिमुपगत्य भूरि भवभीमवने गहने**

**चिरमियमद्ययावदुपयातवती विपदम्।**

**रतिमुपगच्छतान्मतिरशान्तिशताकुलिता**

**मम यमुनातटीतरुविहारपटीयसि सा।।४।।**

इयम् मम मतिः भवरूपे गहने भीमे (भयंकरे) वने भूरि भ्रमिम् भ्रमणम् उपगत्य अद्ययावत् (अद्यपर्यन्तम्) चिरं विपदम् नानाविधजन्मादिविडम्बनाम् उपयातवती प्राप्तवती। अशान्तिशतेन आकुलिता सेयं मतिः यमुनातटवर्तिवनविहारपटुतमे श्रीकृष्णे रतिं लभताम्। खिन्नस्य वनविहारनिपुणे रतिलाभः समुचित एवेत्याशयः।।४।।

**पुरुपरितापतान्तजनतागुरुतापहृते**

**य इह ततान तारणधृतामवतारधुराम्।**

**व्रजवनिताहिताय नवरासभृतां वरिता**

**भुवि भवतान्मदीयकवितास्वविता स हरिः।।५।।**

पुरु (पुष्कल) परितापेन तान्ता खिन्ना या जनता तस्या गुरुपरितापस्य हृते हरणाय, भावे क्विप्। यः हरिः तारणाय लोकानामुद्धाराय धृताम् अवतारधुराम् अवताररूपं भारम् ततान दधारेति यावत्। रासभृतां रासविलासिनां वरिता वरः। हरिः मम कवितासु अविता सर्वविधरक्षायां जागरूको भूयादित्याशंसा।।५।।

**किमु कुटिलाशयेषु बत फल्गुफलस्पृहया**

**सततमनादृतोऽपि परिधावसि धर्षितधीः।**

**परिहर पङ्किले पथि पदोपगमप्रसरं**

**परिचर मञ्जुनाथ! यदुनाथपदाम्बुरुहम्।।६।।**

निस्सारस्य फलस्य वाञ्छया अनादृतः अतएव धर्षितधीः कुण्ठीकृतबुद्धिः सकपटचित्तेषु किं धावसि? पदोप.- पादक्षेपम्।।६।।

**मुनिमनसामगम्यगुणगीतिगतिर्नितरां**

**व्रजजनजीवनाय इयाय धरावलये।**

**मनसि मनोरथप्रचिततापशताकुलिते**

**जलभृतनीलनीरदतनुः स हरिर्विहरेत्।।७।।**

मुनिमनसामपि अगम्या अबोध्या गुणा गीतयः यशांसि गतयः चिकीर्षामार्गाश्च यस्य। मनोर.- नानाभिलाषैः संचितं यत् तापशतं तेन आकुलिते। तापाकुलस्य सजलजलदविहारेण स्वाभाविकमेव सुखमित्याशयः।।७।।

**भुवमवगम्य भूरितरपापभराकुलिता-**
**मवितुमवातरद् य इह दीनदयाविवशः।**
**निबिडनृशंसकंसमदहिंसन केलिधरो**
**मयि स कृपामपारभवपारकरः कुरुतात्।।८।।**

दीनेषु दयापरवशो यः अवितुं दीनान् रक्षितुम् अवातरत्। अपारभव.- अपारस्य भवस्य पारे करोति स मयि कृपां कुरुतात्।।८।।

(४०)

## चतुष्पदीचयनम्

### (मदनविजयः)

**शिरसि बर्हिचन्द्रकचयशोभी। विलुलितकुन्तललोचनलोभी।।**
**श्रवसि मिलन्मणिकुण्डलधारी। चिबुकचुम्बिहीरकरुचिहारी।।१।।**
**उरसि मालतीदामसुगन्धे। मिलन्मञ्जुगुञ्जाचयबन्धे।।**
**सितदुकूलमावृतमहमूहे। नैशतुहिनमिव कुसुमसमूहे।।२।।**
**श्रोणिपिहितपीताम्बरशोभा। मनसि मुनेरपि विलुलितलोभा।।**
**पदनलिने मणिनूपुरनादी। स्मरमाह्वातुमिवानकवादी।।३।।**
**शरदि पूर्णशशधररुचिशाली। प्रपदचुम्बिलम्बितवनमाली।।**
**जयति हरिर्नवरासविहारी। मुदितमनोजगर्वपरिहारी।।४।।**
**मदनमनोहारी हरिर्नवनटवरवेषेण।**
**जयति कलानिधिमपि जयन्मुखसुषमालेशेन।।५।।**

चन्द्रकचयः पिच्छाग्रभागसमूहः। विलुलितैः कुन्तलैर्लोचने लोभयति तच्छीलः। हीरकरुच्या (कान्त्या) मनोहारी।।१।। गुञ्जाचयस्य बन्धो यस्मिन् उरसि। उरसि आवृतं दुकूलं कुसुमसमूहे नैशम् निशासम्बन्धि तुहिनं नीहारमिव अहम् ऊहे उत्प्रेक्षे।।२।। श्रोणौ कट्याम्। विलुलित (कृत) लोभा। निजप्रभावं दर्शयितुं मदनम् आह्वातुं आनकं दुन्दुभिं वादयति तच्छीलः, नुपूरनादो नास्ति मदनाह्वानाय दुन्दुभिघोषः सोऽयमित्याशयः।।३।। प्रपदं पादाग्रभागः।।४।।

**सुरभिकुसुमशेखरपरिराजी। कर्णकलितकुण्डलविभ्राजी।।**
**कनककलितकेयूरविभासी। मध्यमिलितमाणिक्यचकासी।।**
**मधुरमुखो मणिकुण्डलभासा। नवमणिना विभ्राजति नासा।।**
**कम्बुकण्ठराजन्मणिदामा। वदनविजितशारदशशिधामा।।७।।**

**कनकवलयशोभिनि मणिबन्धे। रत्नविभा नयनानि निरुन्धे।।**
**पीतपटे मणिरशना रम्या। सांध्यनभसि तारालिरदम्या।।**
**जङ्घायुगलमुदञ्चति ललितम्। नूनमनिन्द्यनीलमणिकलितम्।।**
**युवतिमनोहररूपविभासी। राजति मुररिपुरतुलविलासी।।**
**मधुरमण्डनेनामुना यमुनापुलिनमुपेत्य।**
**वेणुं ध्वनयन् सस्मितं जयति हरिर्मुदमेत्य।।१०।।**

शेखरेण शिरोभूषणेन राजति तच्छील:। केयूराभ्यां भुजभूषणाभ्यां विभासते। मध्ये केयूरयोर्मध्ये जटितं यन्माणिक्यं तेन चकास्ति।।६।। कुण्डलयोर्भासा कान्त्या। कम्बुसदृशे कण्ठे राजत् मणिदाम रत्नस्रक् यस्य। धाम तेज:।।७।। मणिबन्धे प्रकोष्ठे। निरुन्धे चाकचक्यमुत्पादयति। तारालि: तारकपङ्क्ति:, पीतपटे मणिकाञ्ची सांध्यगगने पीततया तारकपङ्क्तिरिवेत्याशय:।।८।। नीलं जङ्घायुगं नूनं (मन्ये) नीलमणिनिर्मितमित्यर्थ:।।९।। अमुना सुभगवेषेण (उपलक्षित:) मुदं हर्षम् एत्य प्राप्य वेणुं वादयन्।।१०।।

**मुरलीस्वरलहरी प्रचरन्ती। युवतिनिकेतमगान्मदयन्ती।**
**श्रवसि जगौ प्रियतमसंदेशम्। जनयन्ती हृदि मदनावेशम्।।**
**गृहकार्याणि विमुच्य सहेलम्। ययुर्गोपिका हरिमनुवेलम्।।**
**अपदविहितभूषणविन्यासा। सरभसमचलद्युवतिसभा सा।।**
**श्रोणितटे दधती मणिहारम्। उरसि दधौ काञ्चीमविचारम्।।**
**भुजयो: कापि नूपुरे निदधौ। पदयुगले केयूरे विदधौ।।**
**काचिदुत्तरीयं परिदधती। शिरसि शाटिकां निदधौ युवती।।**
**एवं प्रणयसम्भ्रमाधीना। युवतिमण्डली हरिमनुलीना।।**
**पप्रच्छागमहेतुममृतगिरा रमयन् हरि:।**
**ता विहारमभ्येतुमैच्छन् हृच्छयमोहिता:।।१५।।**

प्रचरन्ती गगने भ्राम्यन्ती। निकेतं निवासम्। मदयन्ती गोपिका मत्ता: कुर्वती।।११।। अनुवेलम् शीघ्रमिति यावत्। अपदे अस्थाने विहिती भूषणविन्यासो यया। युवतीनां सभा मण्डली।।१२।। अविचारम् अविचार्यैवेत्यर्थ:।।१३।। उत्तरीयमुपरिवस्त्रम्, परिदधती शाटिकास्थाने धारयन्ती। हरिमनु हरिसमीपे, लीना प्राप्तेत्यर्थ:।।१४।। अमृतगिरा अमृतमधुरया वाण्या, रमयन् प्रीणयन्। हृच्छयमोहिता: मदनवशीकृता: ता: गोप्य: विहारं रतिक्रीडाम् अभ्येतुं प्राप्तुमैच्छन् रासविलासमर्थितवत्य इत्यर्थ:।।१५।।

**प्रणयमहेतुमयन् वनमाली। तोषमियेष वेणुरवशाली।।**
**राकापतिरम्बरमधिभेजे। अमृतमयै: किरणै: परिरेजे।।**

---

**विमलपुलिनमतुलां द्युतिमागात्। चन्द्रचूर्णचयरचितमिवाभात्।।**
**विकचकुमुदिनी निर्भरगन्धी। ववौ मारुतो मानसबन्धी।।**
**मधुरमालतीसुरभिसमीपे। युवतिमनसि मदनोऽनुदिदीपे।।**
**तास्त्रिलोकसुन्दरधृतकामाः। हरिसमीपमीयुर्व्रजवामाः।।**
**वशीकारिविभ्रमशतशाली। रमणमोदमाधाद् वनमाली।।**
**मनसि मनोजभावसंरब्धा। प्रतिवनिता दयिताय विलुब्धा।**
**हरिरतुलां रतिमात्मगां रमणीनामनुमाय।**
**महिलामण्डलमध्यगो रमणविनोदमियाय।।२०।।**

अहेतुम् अकारणं स्वाभाविकमित्याशयः। तासां प्रणयम् अयन् जानन्! तोषम् इयेष तासां गोपीनां प्रसन्नतामवाञ्छत्। राकापतिः पूर्णिमाचन्द्रः आकाशमधिरुरोह।।१६।। चमत्कुर्वद्रेणुकणशालि पुलिनम् असंख्यचन्द्राणां चूर्णचयेन क्षोदराशिना निर्मितमिव अभात् भाति स्म।।१७।। मालतीसुरभेः घ्राणतर्पणगन्धस्य समीपे मालतीसौरभमाघ्रायेत्यर्थः। त्रिलोकसुन्दरी हरौ धृतः कामोऽभिलाषो याभिः।।१८।। रमणमोदं रमणं कृत्वा प्रमोदम् आधात् चकार। मनोजभावेन कामविकारेण संरब्धा संरम्भशालिनी प्रत्येकवनिता दयितार्थं विलुब्धा उत्कठिता।।१९।। रमणीनां आत्म (स्व) गतां प्रीतिं ज्ञात्वा। रमणविनोदम् इयाय चक्रे इत्याशयः।।२०।।

**त्रिभुवनमोहनमहिमानयने। मानसमोदमदिशतां नयने।।**
**रतिविलासकामालसलीला। मदयामास मोदमदशीला।।**
**नाभिनितम्बनीविपरिधर्षी। रमयामास रमणिगणहर्षी।।**
**भुजपरिरम्भनर्मपरिहासा। रसिकसभा रेमे सविलासा।।**
**अधरकपोलनाभिकुचदेशे। स्पृशन् मोहयति मदनावेशे।।**
**एवं युवतिघटा रममाणा। प्रबभौ प्रियसङ्गाद् धृतमाना।।**
**मनसि मनसिजः स्वं बहु मेने। हरिरिह हसन् खर्वमातेने।।**
**महिलानां शमयन्नभिमानम्। स्वीचकार हरिरन्तर्धानम्।।**
**सहसा हरिमन्तर्हितं वीक्ष्य रमणविरहेण।**
**विकला व्रजवनिता वनेऽन्वैष्यन् प्रियमचिरेण।।२५।।**

त्रिभुवनमोहकं महिमानम् आनयतः, त्रिभुवनवशीकरणप्रभावसम्पन्ने इत्यर्थः। रतिविलासेन या कामालसा (कामालसानां वा) लीला। मोदः मदः (मत्तता) च शीलं स्वभावो यस्याः सा।।२१।। परिधर्षी परिमर्दकः। भुजपरिरम्भः नर्मणा परिहासश्च यस्याः सा। रसिकानां गोप्यादीनां सभा मण्डली।।२२।। प्रियस्य (श्रीकृष्णस्य) सङ्गाद् धारिताभिमाना।।२३।। स्वम् आत्मानम् बहु मेने, मया हरिं रमणीनां विलासवशंवदं कृत्वा विजयो लब्धः इति गर्वं चकारेत्यर्थः। हसन् हरिः तं कामम्

खर्वं विनतम् आतेने चकार। (अतएव) श्रीकृष्णं निजवशगं मन्वानां महिलानां गर्वं परिहरन्।।२४।। रमणस्य (प्रेष्ठस्य) विरहेण विकला: अन्वैष्यन् अन्विष्यन्ति स्म।।२५।।

**वञ्जुलविपिनवीथिवनकुञ्जे। वापीविटपिवाटिकापुञ्जे।।**
**वंशगुल्मवानीरनिकाये। विविधवह्लिवीरुत्समुदाये।।२६।।**
**विचरन्त्यो व्रजवनिता: कामम्। प्रियं व्यचैषुरनिशमभिरामम्।।**
**कुटजकुन्दकुरुविन्दमगच्छन्। निचुलनीपनीवारमपृच्छन्।।२७।।**
**एवं हरिपरिदर्शनकामा। युवतिराजिरभ्रमदविरामा।।**
**हृदयदयितमनवाप्य विषण्णा। यमुनारोधसि निभृतनिषण्णा।।२८।।**
**व्रजवामाततिरन्तरधामा। हरिचरितान्यनुचक्रे क्षामा।।**
**अन्ते दीपितदारुणविरहा। सुस्वरमरुदन्निर्भरमसहा।।२९।।**
**स्वगतहृदयतां योषितां विह्वलतां विरहेण।।**
**तासां वीक्ष्य हरिर्हसन्नाविरभूदचिरेण।।३०।।**

वञ्जुलविपिनम् अशोकवनम्। वनकुञ्जे इत्यादि समाहारे क्लीबमेकवचनं च। वानीरनिकाये वेतसपुञ्जे। वीरुत् प्रतानिनी (दीर्घविस्तारयुक्ता) लता।।२६।। व्यचैषु: अन्वैषयन्। कुटजकुन्देत्यादिद्वन्द्वयो: 'विभाषा वृक्षमृग.' इत्यादिना एकवद्भाव:।।२७।। अविरामा नास्ति विश्रामो यस्या: ईदृशी अभ्रमत्। निभृते एकान्ते स्थिता।।२८।। अन्तरे हृदयाभ्यन्तरे धाम हरेर्निवासो यस्या:। क्षामा विरहकृशा। हरिचरितानि अनुचक्रे एका गोपी कृष्णभूमिकामधारयत् अन्या पूतना समवर्तिष्टेत्यादिलीला अनुचक्रुरित्यर्थ:। निर्भरम् अत्यन्तं असहा विरहासहिष्णु:।।२९।। योषितां व्रजस्त्रीणां स्वगतहृदयतां हरिसमर्पितचित्तताम्।।३०।।

**हृदयदयितमागतमवपश्यन्। गोपीराशिरुदस्थाद्धृष्यन्।।**
**कापि हरेर्भुजमंसे निदधौ। कापि तदङ्घ्रिमुरोजे विदधौ।।३१।।**
**दृक्पथतो हरिमन्तर्दधती। कापि पुलकिताप्रीयत सुदती।।**
**सत्यं प्रणयमेवमनुरुन्धन्। मदनदर्पशममेवं विन्दन्।।३२।।**
**प्रीतो हरिरारेभे रासम्। अन्योन्यादृतबाहुविलासम्।।**
**गोपीयुगमध्ये हरिरासीत्। हरियुगले गोपी समभासीत्।।३३।।**
**गोपीकरमादाद् गिरिधारी। गिरिधरकरमवहद् व्रजनारी।।**
**एवं व्रजपतिगोपीमाला। पुलिनेऽस्मिन् विजहार विशाला।।३४।।**
**अनुपमशोभावैभवं रमणीरासविलासि।।**
**व्रजजनताजीवननिधेर्जयति जगत्त्रयभासि।।३५।।**

हृष्यन् हृष्टः सन् उदस्थात् उदतिष्ठत्।।३१।। दृक्पथतो हरिम् अन्तः दधती नयनयोर्मार्गेण हृदयाभ्यन्तरे हरिं स्थापयन्ती कापि सुदती अप्रीयत। एवं प्रणयम् अनुरुन्धन् प्रणयस्यानुरोधं रक्षन्। मदनस्य गर्वशमनम् एवं प्राप्नुवन् मदनविजयमेवं कुर्वन्नित्याशयः।।३२।। आदृतो बाहुविलासो यस्मिन्, अन्योन्याबद्धभुजमित्यर्थः। समभासीत् सम् अभासीत् अशोभत।।३३।। व्रजजनजीवनधनस्य हरे रमणीनां रासे विलसति तच्छीलं अनुपमं शोभावैभवं जयतीति समाप्तिमङ्गलम्।।३५।।

(४१)

## 'कुण्डलिया'-खण्डः

**वाणीगुणमिममर्थये येन यदुपतिं स्तौमि।**
**चरणनलिनसेवापरो हेवाकादभिनौमि।।**
**हेवाकादभिनौमि सर्वतः सुकृतमुदयते।**
**व्रजपतिलीलाशीलनेन लोको मुदमयते।।**
**एतदेव याचामि देव विनिबध्नन् पाणी।**
**भवच्चरणगुणवर्णनेन रमतां मम वाणी।।१।।**

वाण्या गुणम् इममेव अर्थये प्रार्थये यद्द्वारा भगवन्तं स्तौमि। हेवाकात् अभिलाषातिशयात्। व्रजप.- व्रजनायकस्य श्रीकृष्णस्य लीलानां परिशीलनेन पुनः पुनर्गानेन श्रवणेन च प्रेमिजनो मोदम् अयते प्राप्नोति। पाणी विनिबध्नन् प्रार्थनाञ्जलिं कुर्वन्।।१।।

**मधुसूदनपदपङ्कजे रज्यच्चिन्मधुपस्य।**
**देवा अपि सेवां दधति भूरिभाग्यविभवस्य।।**
**भूरिभाग्यविभवस्य यस्य हरिनामसनाथा।**
**रसना रसनालीव सदा प्रवहद्गुणगाथा।।**
**चरणकमलपतितोऽस्मि पश्य हे कंसनिषूदन।**
**तदिह देहि तव सदयदृशं मय्यपि मधुसूदन।।२।।**

रज्यच्चि.- अनुरज्यन् चेतनारूपो मधुकरो यस्य तादृशस्य बहुभाग्यवैभवस्य पुरुषस्य देवा अपि सेवां कुर्वन्ति। रसस्य आस्वाद्यस्य आनन्दस्य नालिकेव सर्वदा प्रवहन्ती भगवतो गुणगाथा यस्याम् हरिनामसनाथायाम् आनन्दस्य नालिकायामिव यस्यां जिह्वायां भगवतो गुणसंकथा सर्वदा प्रवहति इत्याशयः। इह एतस्मिन् मयि अपि यथा पूर्वचरणे कथितं माहात्म्यमाविर्भवति तथा सदयां दृष्टिं देहि।।२।।

**गोवर्द्धनधारी सकलसुरसुखकारी भाति।**
**यः किल रासक्रीडया रवितनयामनुयाति।।**

**रवितनयामनुयाति कोटिकामद्युतिशाली।**

**व्रजवनिताह्वानाय रणद्वेणुर्वनमाली।।**

**भक्तभीतिहरणाय सदा व्रजविपिनविहारी।**

**कर्णे कलयतु दीनगिरं गोवर्द्धनधारी।।३।।**

रासक्रीडायाः हेतुना यमुनामनुगच्छति। आह्वानाय रणन् शब्दं कुर्वन् वेणुः वंशीवाद्यम् यस्य सः। दीनानां दीनां वा गिरम् वाणीम् कर्णे करोतु शृणोतु इत्यर्थः।।३।।

**कालिन्दीपुलिने पथिक! तरुणतमालमुपेहि।**

**शिरसि यस्य बर्ही लसति, तदनु शुकं दृशि देहि।।**

**तदनु शुकं दृशि देहि, कपोतस्तदधो राजति।**

**कुसुमराशिरस्यान्तिके हि सुभृशं विभ्राजति।।**

**विद्युद् द्युतिमुपयाति हंसमुखरे नवनलिने।**

**मञ्जुनाथ नय मानसं नु कालिन्दीपुलिने।।४।।**

तरुणतमालम् अर्थात् श्रीकृष्णम् शरणं गच्छ। बर्ही बर्हिपक्षयुक्तं मुकुटम्। दृशि दृष्टौ शुकं देहि, नासिकां पश्य। तस्य अधः, कपोतः कपोतसदृशसंस्थानः कण्ठः। अस्य कण्ठस्य समीपे कुसुमराशिः कुसुमगुम्फिता वनमाला। हंसाभ्यां मुखरे शब्दायमाने नवनलिने हीरकनिर्मिताभ्यां हंसकाभ्यां चरणवलयाभ्यां सशब्दे कमलसदृशे चरणयुगले। विद्युत् विद्युत्सदृशः पीतपटः कान्तिं याति। अतएव एतादृक्शोभादर्शनाय मानसं यमुनातटे नय।। रूपकातिशयोक्तिः।।४।।

**जय जलभृतनवनीरधर सुन्दर नन्दकुमार।**

**कालिन्दीतटनिकटभुवि विरचितरासविहार।।**

**विरचितरासविहार मारसुषमामदहारक।**

**व्रजवनिताशतमोहनाय नानातनुधारक।।**

**चपलाशतपरिवृतश्यामघनशतशोभामय।**

**वृन्दावनवसुधाविनोदिलीलाधर जय जय।।५।।**

जलेन भृतः पूर्णः नीरधरः मेघः। मारः कामदेवः। अनन्तगोपिकानां मोहनाय स्वयमप्यनेकमूर्तिधारक। अतएव प्रत्येकगोप्याः सविधे एकैकः कृष्णः। नानामूर्तिधारणेन विद्युच्छतपरिवृतं यत् श्यामघनानां शतं तच्छोभामय। विनोदिनी या लीला।।५।।

**व्रजनायकनयनाञ्चलं न्यञ्चति चेद् विभवेन।।**

**भूरिभयानकभवविपद् विलयमुपैति पलेन।।**

विलयमुपैति पलेन रश्मिरोधकघनतिमिरम्।
भाग्यभानुरभिभाति याति शोकानां शिबिरम्।।
दुष्टदैत्यदलदलन देवगणमङ्गलदायक।
कोटिकोटिकन्दर्परुचिर जय जय व्रजनायक।।६।।

भाग्यवैभवेन हरेर्नयनाञ्चलं यदि न्यञ्चति मदुपरि पतति। तिमिरं दौर्भाग्यरूपम्, अज्ञानरूपम् वा। शिबिरं समूहः।।६।।

## रूपमुग्धा गोपी

वनमाली विहरति वने जलदाली जटिलास्ति।
याति चांशुमाली शमं चपला नभसि चकास्ति।।
चपला नभसि चकास्ति कास्ति तव नारी निकटे।
को मार्गं तव बोधयेत मार्गेऽस्मिन् विकटे।।
यदवधि नन्दात्मजोऽलोकि मुरलीरवशाली।
तदवधि संदानिता नैति वृन्दावनमाली।।७।।

जलदानाम् आली घटा। अंशुमाली सूर्यः शमम् अस्तं याति। का नारी सहायिका। अन्यस्या निजसख्या वृत्तान्तं सूचयित्वा सखी परिबोधयति यत् तया मे प्रियसख्या मुरलीवादनशाली हरिः यदवधि अलौकि दृष्टः तदवधि संदानिता प्रेमपाशबद्धा सा आली वृन्दावनं नैति, अपितु गृहं विहाय नन्दसूनोरनुसारेण वनाद्वनं विचरतीत्यर्थः।।७।।

(४२)

## षट्पद ( छप्पय )- पटलम्

जयति जलधिपरिरचितशेषशय्योपरिशायी ।
नाभिनलिननिस्सरच्चतुर्मुखनुतिपरिचायी ।।
कमलाकरकमलाभिजातसंवाहनशाली ।
कौस्तुभमणिविभ्राजदुरसि विलुठद्वनमाली।।
यः प्रणमदमरमुकुटच्छटानीराजितचरणो लसति।
स हि सकललोकविलसितविभो विभुर्विश्वरूपो जयति।।१।।

चतुर्मुखस्य नुतिं स्तुतिं परिचिनोति स्वीकरोतीति यावत्। कमलायाः करकमलाभ्यां संजातं यत्संवाहनं पदसंवाहनम्। विभ्राजमाने उरसि विलुठन्ती वनमाला यस्य। सकलेषु लोकेषु विलसिता विभा कान्तिर्यस्य। भगवत्कलां विना लोकानां स्थितिरेव न।।१।।

**जय जलजासनविहितरम्यसामस्तुतिभासिन्।**
**जय जलनिधिजाहृदयवसतिवैकुण्ठविलासिन्।।**
**जय जलजोपमचरणचञ्चरीकायितमुनिचय।**
**जय जलजायितनयननाट्यनिष्पाद्यजगत्त्रय।।**
**जय जलधरनिभनीलरुचिरोचितमञ्जुलमूर्तिधर।**
**जय जडजङ्गमविश्वचर दामोदर दैतेयहर।।२।।**

कमलासनेन ब्रह्मणा विहिता या साम्ना सामवेदेन स्तुतिः। सागरकन्यका (लक्ष्मी) हृदयनिवासी चासौ वैकुण्ठविलासी चेति कर्म धारयः। कमलसदृशस्य नयनस्य नाट्येन इङ्गितेन निष्पाद्यं प्रादुर्भावनीयं जगत्त्रयं यस्य। नीलरुच्या रोचिता प्रकाशिता या मञ्जुला मूर्तिः। जडे जङ्गमे च विश्वस्मिन् संसारे चरति।।२।।

**चिन्तामणिचयरचितचारुपीठस्थितचरणे ।**
**कलकौस्तुभमणिकिरणकर्बुरितदिव्याभरणे।।**
**प्रणतलोकपालप्रतीक्ष्यकरुणार्द्रविलोके ।**
**शिवविरञ्चिदेवाधिदेवविरचितविश्लोके ।।**
**जयविजयपारिषदपाणिना पिहितपुरंदरगतिजवे।**
**मम मानस! मुदितमुपेयतामस्मिन् मुरजिति माधवे।।३।।**

चिन्तामणीनां चयेन राशिना रचितं यत् चारुपीठं चरणस्थापनार्थं चतुष्किका तत्र स्थितौ चरणौ यस्य तस्मिन्। कलः सुन्दरः। किरणैः कर्बुरितानि चित्रीकृतानि दिव्याभरणानि यस्य तस्मिन्। लोकपालैः प्रतीक्षणीयः करुणया आर्द्रः विलोकः दृष्टिपातो यस्य। शिवश्च विरञ्चिश्चेति यौ देवानामधिदेवौ ताभ्यामपि विरचितो विश्लोकः स्तुतिः यस्य। पिहितः अवरुद्धः पुरंदरस्य इन्द्रस्यापि गतेर्वेगो यत्र। इन्द्रोऽपि पारिषदाज्ञयैव अन्तर्गन्तुं शक्नोति। अन्यथा तु सोऽपि द्वारे एव रुद्धगतिर्भवतीत्यर्थः। मुरविजेतरि माधवे मुदितं प्रमोदः उपेयतां प्राप्यताम्। अनुभूयतामिति यावत्।।३।।

**हस्तमेकमुन्नयन् गहनगिरिराजोद्धरणे।**
**कटितटमपरं करं नयन्नृत्यायोत्तरणे।।**
**मञ्जुलगुञ्जामाल्यमुरसि विलुलितमावहते।**
**मूर्द्धनि मणिमयमुकुटमाविनम्रं यो धरते।।**
**नृत्यचलच्चरणं सकलभक्ताभयकरणं व्रजे।**
**वनमालाभरणं सदा गोवर्द्धनधरणं भजे।।४।।**

गहनो विशालः। नृत्याय नृत्यं कर्तुम् उत्तरणे रङ्गस्थलावतरणे अपरं करं कटितटम् (कटितटे) नयन्। आविनम्रं अभिमुखभागे ईषद्विनतम् 'श्रीनाथ' मूर्तेर्ध्यानम्।।४।।

निस्साधनशरणेन येन मर्यादा वितता।
दुर्विनीतदुर्दान्तदलान्निजजनततिरविता ।।
कौरवकुलमभिभूय पाण्डुसुतविपदपनीता।
भारतनाटकसूत्रकृता भुवि नीता गीता।।
निजवचनं विगणय्य निजभक्तवचनमविलङ्घ्यन्।
जयति पार्थसारथिरयं निखिलदुर्जनान् निर्जयन्।।५ ।।

वितता सर्वतः प्रसारिता। दुर्दान्तदलात् भक्तजनमण्डली अविता रक्षिता। नाटकसूत्रधारेण येन भुवि नीता, अनेन गीताया दिव्यत्वं ध्वन्यते। निजवच.- अतएव शस्त्राग्रहणस्य निजां प्रतिज्ञामुल्लङ्घ्य निजभक्तस्य भीष्मस्य वचनं (अहं समरे हरिणा शस्त्रं ग्राहयिष्यामि) अविलङ्घ्यन् सत्यीकुर्वन् पार्थसारथिः श्रीकृष्णः।।५ ।।

सकलसूरिरसनावनीषु बत या परिखेलति।
भक्तिभावमधिगम्य सुजनसम्मुखमुद्वेलति।।
यत्प्रसङ्गतोऽप्याशु कलुषनिचया विनिरस्याः।
परमहंसहर्षाय संनिकर्षावनिरस्याः।।
मञ्जुनाथमानसमिदं जपति निर्भरं गामिमाम्।
अवगाहे गोविन्दगुणगानगहनगङ्गामिमाम्।।६ ।।

भक्तिभावमुपगम्य सुजनानां सम्मुखे उद्वेलति वर्द्धते, गङ्गापि जातिविशेषस्य गानकीर्तनादिना उद्वेलतीति प्रसिद्धम्। यत्प्रसङ्गमात्रेण पापसमहाः। दूरीकार्याः भवन्ति। अस्याः गङ्गायाः समीपभूमिः हंसानां योगिनां मरालानां च हर्षाय। इदं मे मनः इमां गाम् एतद्वचनम् रटति। किं तत्? आह- गोविन्दगुणगानरूपां गभीरां पूर्वोक्तां गङ्गामवगाहे स्नानार्थं विलोडयामि।।६ ।।

( ४३ )

## 'बरवै'- विलासः

स किल कलानिधिरुदितो व्रजविभवाय।
लोचनगोचरमयतां मत्प्रमदाय।।१ ।।
वृन्दावनघनवीथीविहरणशालि ।
व्रजभूभाग्यं भवतान्मम परिपालि।।२ ।।
त्रिभुवनजनक जनार्दन जय जगदीश।
जय करुणावरुणालय देवाधीश।।३ ।।

व्रजवैभवाय उदित: अवतीर्ण: कलानिधि: श्रीकृष्णचन्द्र:। व्रजभुवो भाग्यं भागधेयं (श्रीकृष्ण:)।।१-३।।

## संस्कृत-हिन्दीभाषासमकम्

**कोटिकामसमसुन्दर नन्दकिशोर।**
**जय जय श्रीराधामुखचन्द्रचकोर।।४।।**
**जय वृषभानुकिशोरीनयनानन्द।**
**जय विह्वलव्रजवनितालीलाकंद।।५।।**
**जय जय जगदानन्दन नन्दकुमार।**
**भवबाधाहर राधाप्राणाधार।।६।।**

व्रजवनितानां या लीला: तासां कन्द मूलकारण!।।५।। भव-बाधाहरेति कृष्णसम्बोधनम्। अथवा भवबाधाहरा या राधा तस्या: प्राणाधार।।६।।

## संकीर्तन-प्रार्थनम्

**कालियकेशिनिषूदन कंसनिकन्द।**
**कोटिकामकमनीयक यदुकुलकंद।।७।।**
**गरुडगामिगोवर्द्धनगिरिवरधार ।**
**गोगोपीगणगोपक गोष्ठाधार।।८।।**
**माधव मधुमुरमर्दन मञ्जुमुकुन्द।**
**मुखमुरलीधर मनसिजमाननिकन्द।।९।।**
**चरितचकितचतुराननगापितगीत ।**
**वाणीपरिवृढवाणीविभवातीत।।१०।।**
**पुण्डरीकपुरुलोचन पुरुष पुराण!।**
**पद्मनाभ पीताम्बर पद्माप्राण!।।११।।**

कमनीय एव कमनीयक: स्वार्थे कन्।।७।। गरुडगामी चासौ गोवर्द्धनाख्यगिरेर्धारकश्चेति कर्मधारय:। गणस्य गोपक: गोप्ता।।८।। मुखे मुरल्या: धारक।।९।। नवीनवत्साविष्करणलीलया चकितो यश्चतुरानन: ब्रह्मा तेन गापितानि गीतानि येन स:। वाण्या: परिवृढस्य अधिपते: बृहस्पते: या वाणी तस्या विभवमपि अतीत, वाग्विभवातीतेत्यर्थ:।।१०।। पुण्डरीकवत् पुरुणी विशाले लोचने यस्य तत्सम्बुद्धि:।।११।।

---

## शोभा

माधवमूर्द्धनि मुकुटं द्युतिमुपयाति।
तरुणतमाले तिष्ठन् शिखीव भाति।।१२।।
चिकुरकलापे चञ्चत्कुण्डलभास्ति।
नक्षत्रं ननु नीले नभसि चकास्ति।।१३।।
करकमले हरिमुरली मञ्जु ननाद।
कूजन्निव पिकपोतोऽम्बुरुहि ससाद।।१४।।
मौक्तिकमाला विलसति वक्षसि भूरि।
नूनं नीलनभोऽङ्गणमुडुभिरपूरि।।१५।।

श्यामवर्णस्य श्रीकृष्णस्य मस्तके मयूरपिच्छानां मुकुटं मयूर इव भातीत्यर्थः।।१२।। चञ्चत्.- चमत्कुर्वतः कुण्डलस्य भा कान्तिः अस्ति।।१३।। हस्तकमले शब्दायमाना मुरली तथा शोभते यथा कूजन् कोकिल-शावकः अम्बुरुहे ससाद (निषसाद, तस्थौ)।।१४।। उडुभिः नक्षत्रैः। श्यामवर्णे वक्षःस्थले मुक्तासमूहस्तारकासमूह इव राजतीत्यर्थः।।१५।।

## मुरली

मुरलीधर तव मुरली करलीनापि।
चित्रं तरलीकुरुतेऽधरलीढापि।।१६।।
अयि मोहन तव मुरलीस्वरलीनापि।
दीना सा गतिहीना तापमवापि।।१७।।
सखि वृन्दावनवसतेर्दूरमपेहि।
गच्छसि यदि हरिमुरली श्रवसि न देहि।।१८।।
नग्ना सा श्रुतिलग्ना रतिमपहन्ति।
येन हि गृहधनसुजना दूरमयन्ति।।१९।।

करे लीना लग्ना, अधरेण लीढा आस्वादितापि गोपीजनान् तरलान् (चञ्चलान्) कुरुते इति चित्रम्। दूरे स्थितायाः, अन्येन पीताया अपि लोकानां विह्वलीकरणमाश्चर्यमित्यर्थः।।१६।। मुरलीस्वर.- तव मुरलीस्वरमात्रेणापि सा निश्चला जाता, संतापं च प्रापिता। तव साक्षात्सम्बन्धे तु न जाने तस्याः का दशा स्यादित्याशयः।।१७।। वृन्दावनस्य निवासाद् दूरमपसर। श्रवसि न देहि कर्णे मा कुरु।।१८।। नग्ना निर्लज्जा सा कर्णयोर्लग्ना सती रतिं सांसारिकनिर्वृतिं नाशयति, येन च गृहादीनां विरहो भवति। भगवदेकाश्रयो भवतीति ध्वनिः।।१९।।

## कारुण्यप्रार्थना

नन्दतनय विनयं मे किं न शृणोषि।
कर्णे करुणाक्रन्दं किं न करोषि।।२०।।
दीनान् दीनानाथोऽपि यदि जहाति।
तव विरुदे विश्वासं कोऽभ्युपयाति।।२१।।
करुणां करुणाजलधे सपदि विधेहि।
आशोणं दृक्कोणं मयि विनिधेहि।।२२।।
क्षणमपि करुणाकोणाद् यदि वीक्ष्येत।
तर्हि नाथ मम भाग्यं सुपरीक्ष्येत।।२३।।

करुणा.- करुणाजनकम् आक्रन्दम् विलापम्।।२०।। दीनानां आ (समन्तात्) नाथम् इति भाषाप्रसिद्धं नाम। विरुदे दीनोद्धारकेत्यादिस्तुतौ।।२१।। आशोणम् ईषदरुणम्।।२२।। मम भाग्यं सुपरीक्ष्येत, तव दृष्टिकोणपाते एव अहं ब्रह्मादीनामपि प्रशंसनीयो भवेयमिति मम भाग्यपरीक्षां कुर्वित्यर्थः।।२३।।

भ्रमिभृतभूरिभयानकभवपतितस्य ।
तव पदतरणिः शरणं जगति जनस्य।।२४।।
तव पदसरसिजसेवाहेवाकेन।
ध्रियतामरतिरनल्पा मम हृदयेन।।२५।।
स्वामिनि सर्वसमर्थे किं ध्वनयामि।
दीनः साधनहीनस्त्विति निगदामि।।२६।।
पापाकीर्णं जीर्णं न मामुपेहि।
चरणरेणुकणमात्रात् कृपां विधेहि।।२७।।

भ्रमिभिः आवर्तैर्भृतो यो भवः संसारसागरः तन्निपतितस्य। चरणरूपा तरणिः नौका।।२४।। मम हृदयेन तव पदकमलस्य या सेवा तस्या हेवाकेन औत्कण्ठ्येन करणभूतेर्न, हेतुना वा अरतिः अनिर्वृतिः ध्रियताम्। अहं तव चरणसेवां विना विह्वलस्तिष्ठेयं तथा मह्यं भक्तिं वितरेति प्रार्थना। 'हेवाक' उत्कण्ठातिशयः 'प्रियप्रणयहेवाकि यतो मानवतीमनः'- (कथासरित्सागरः)।।२५।। स्वामिनि.- त्वं सर्वसमर्थः स्वामी, अतएव त्वयि किं व्यञ्जयामि। अहं दीनः, तदुपरि साधनैर्हीन इति तु वदामि।।२६।। पापा.- पापिनो जराजीर्णस्य च मम सविधे आगमनपरिश्रमस्य नावश्यकता, पदधूलेः कणमात्रं प्रदाय कृपां कुर्वित्यर्थः।।२७।।

त्रस्तः सकलनिरस्तस्तावदुपैमि।
कृपालोकलवलाभे कस्य बिभेमि?।।२८।।
कं स्मरामि कं यामि च कं विनयामि।
नाथ त्वमेव बोधय, किं कलयामि?।।२९।।
त्वां विहाय विगतेर्मे त्राता कोऽस्ति।
दीननाथ दीनानां दाता कोऽस्ति?।।३०।।
चेद् विचिनोषि चरित्रं नाथ मृतोऽस्मि।
विरुदं तव परिपालय शरणमितोऽस्मि।।३१।।
करुणादृक् तव तरुणाम्भोजसमैव।
शीतलयति भवतप्तान् या सहसैव।।३२।।

सकलैः देवादिभिर्निरस्तः तिरस्कृतः अतएव त्रस्तः सन् त्वामुपैमि तव सविधे आगतोऽस्मि। तव कृपापूर्णो य आलोकः दृष्टिपातः तस्य लाभे सति अहं कस्माद् बिभेमि? न कस्माच्चिदपि भयस्यावश्यकतेत्यर्थः।।२८।। विनयामि अनुनयामि।।२९।। विगतेः गतिरहितस्य।।३०।। यदि मे चरित्रम् अन्विष्यसि तर्हि हे नाथ अहं मृतः, पापिनो मे पुण्यं चरित्रं नास्तीत्याशयः। तव विरुदम् 'अधमोद्धारक' इति। शरणम् इतः प्राप्तोऽस्मि।।३१।। तरुणं प्रफुल्लं यद अम्भोजं तत्समाना, अतएव भवतप्तान् जनान् सद्य एव शीतलीकरोति।।३२।।

## स्वोद्धारप्रार्थने युक्तिः

ग्राहाद् गजपतिरक्षा भवेत् कृतैव।
नूनमजामिलगुप्तिः कृता त्वयैव।।३३।।
गणिकागृध्रगुहादिस्त्वया ह्यगोपि।
कुगतिव्रातस्त्रातः स्यादपरोऽपि।।३४।।
किंतु नाथ चेत् क्षाम्यसि किमपि वदामि।
पूर्वां गाथां जीर्णामिह जानामि।।३५।।
प्रत्यक्षं हि परोक्षात् प्रबलमुशन्ति।
प्राक्तनविभवान्नूत्नं मधुरमयन्ति।।३६।।
तद् यदि यदुकुलमण्डन! मामवितासि।
अधमोद्धारकविरुदं भूषयितासि।।३७।।

गजपतिरक्षा अवश्यं कृतैव, यद्यपि मया न दृष्टा तथापि शब्दप्रामाण्यात्सा सत्यैव। अजामिलस्य गुप्तिः गोपनम्।।३३।। कुगतीनां कुत्सितगतियुक्तजनानां व्रातः समूहः।।३४।। पूर्वा.- पुरातनी सा

कथा जीर्णा जातेति जानामि।।३५।। प्रत्यक्षम्.- ग्राहादीनां रक्षणं परोक्षम्। ततश्च परोक्षात् प्रत्यक्षमेव प्रबलं उशन्ति वाञ्छन्ति जानन्ति। ग्राहादीनां रक्षारूपं ते वैभवं पुरातनम्, प्राचीनवैभवापेक्षया नवीनं वैभवमधिकप्रियं भवति।।३६।। ततश्च यदि त्वं माम् रक्षिष्यसि तर्हि निजविरुदं न केवलं सत्यापयिष्यसि अपि तु पूर्वतोऽप्यधिकप्रमाणितत्वादलंकृतं करिष्यसीत्याशयः।।३७।।

## मनः प्रबोधनम्

**हृदये हरिपदपङ्कजमङ्कय तात।**
**विफलं किमिति कलङ्कसि रङ्कसि वाथ।।३८।।**
**भूरि भ्रमसि भवार्णववीचिवशेन।**
**हरिचरणाम्बुजनौकां किं श्रयसे न।।३९।।**
**कितव कियत् कटुकृतिभिः कीर्तिरपोषि।**
**हरिपरिचरणे रचनां किं न करोषि।।४०।।**

तात! निष्फलं किमिति जनसमाजस्य कलङ्क इव भवसि, किमिति च रङ्क इव दीन इवाचरसि। हृदये भगवच्चरणकमलमुद्रां धारय। कलङ्कसीत्यादि आचारे क्विप्।। वीचीनां वशेन वशीभावेन।।३८-३९।। सांसारिकीभिः कट्वीभिः कृतिभिः कियत्कीर्तिः अपोषि उपार्जिता न किंचिदपीत्यर्थः। भगवदाराधने वाग्रचनां किं न प्रवर्तयसि।।४०।।

## भगवन्महिमा

**येऽमी लोकपतीनां पदमुपयन्ति।**
**ते तव दृग्विभवानां लवा जयन्ति।।४१।।**
**वैज्ञानिकबलदृप्तान्यतिविभवानि ।**
**पश्यसि पश्चिमराष्ट्राण्याजिगतानि।।४२।।**
**विलयनशीला तेऽसौ भ्रूलीलास्ति।**
**नाथ भवद्विभवाग्रे कोऽत्र चकास्ति।।४३।।**

येऽमी साधकाः इन्द्रादिलोकपालानां पदं प्राप्नुवन्ति ते तव दृष्टिवैभवानां लेशाः। दृष्टिलवप्राप्त्यैव दिव्यविभूतिः सुलभेत्याशयः।।४१।। अस्मिन् समये वैज्ञानिकबलगर्विष्ठानि भूरिवैभवानि जर्मनी-रशिया-इंगलैण्डादि पाश्चात्यराष्ट्राणि आजि (युद्ध)-गतानि यत्पश्यसि, असौ लोकानां प्रलयकरणशीला तव भ्रूलीला। तव भ्रुकुटिः सम्प्रत्येषां विलयं वाञ्छतीत्यत एवैते अभिमानमत्ता युद्ध्यन्ते इत्यर्थः। १९४१-४२-४३ तम ख्रिष्टीयवत्सरेषु प्रचलतो यूरोप (जर्मनी) युद्धस्य तदिदं स्मरणम्।।४२-४३।।

## यशोदां प्रति गोप्युपालम्भः

**नन्दगृहिणि! निजतनयः किमिदमबोधि।**
**अमुना यमुनारोधसि सरणिररोधि।।४४।।**

निजपुत्रः किमिदं शिक्षितो यत् अमुना यमुनातटे मार्ग एवावरुद्धः।।४४।।

## द्वादशमासी[1]

मार्गे मुररिपुमुरली मानमुदस्य।
मङ्क्षु मोदमङ्कुरयति मनसि न कस्य।।४५।।
पौषे शीतलपवना जवना वान्ति।
मोहनमालिङ्गन्त्यो मुदमुपयान्ति।।४६।।
माघमासि यमुनायामुषसि निमज्ज्य।
महिला मधुरिपुमवृणन् भृशमनुरज्य।।४७।।
फाल्गुन फलयसि कामान् व्रजवामासु।
कलयति होलाखेलां हरिरेतासु।।४८।।
चैत्रे चित्रं चन्द्रो निशि समुदेति।
सखि सोऽयं व्रजचन्द्रोऽनिशमुदमेति।।५९।।
वैशाखेऽत्र विशाखे! सीदसि केन।
किं न मोदमुपयाया व्रजरसिकेन।।५०।।
ज्येष्ठे प्रेष्ठमुखेन्दुं दृशि विनिधाय।
गोपी ग्रीष्मं मेने मनसि तृणाय।।५१।।
जनयति मुहुरभिलाषानाषाढोऽपि।
आशां पूरयतान्नवजलदः कोऽपि।।५२।।
श्रावण! जगदानन्दति हिन्दोलेन।
किं दोलयसि मनो मे हरिविरहेण।।५३।।
भाद्रे भूमिर्हरिताम्बुभृतानेन।
स्यान्मे हृद्भूर्हरिता हरितानेन।।५४।।
आश्विनमासि हिमांशुर्नभसि विभातु।
मम तु श्यामसुधांशुर्मुदमुपयातु।।५५।।
कार्तिकदीपालीयं व्यालीयेत।
मम हृदि यदि वनमाली नालीयेत।।५६।।

---

१. द्वादशमासेषु नायिकादेर्विरहादिवर्णनपरः संदर्भो 'बारहमासी' नाम्ना भाषायां विश्रुतः। तदनुसारेण सेयं 'दामोदरद्वादशमासी'। द्वादशमासानां समाहारः।

द्वादशमासी महतां महिता याति।
हरिचरितामृतसरिता यत्र पुनाति।।५७।।

मार्गे आग्रहायणमासे, अध्वनि इत्यपि ध्वनिः। मानिनीनां मानम् उदस्य दूरीकृत्य।।४५।। जवनाः जव (वेग) युक्ताः। मोहनसंयोगिन्यो नायिकाः प्रसीदन्ति, विरहिण्यश्च विषीदन्तीत्याशयः।।४६।। व्रजमहिला अनुरक्ता भूत्वा माघस्नानफलत्वेन श्रीकृष्णमेव वृण्वन्ति स्म।।४७।। हे फाल्गुन! व्रजनारीणां कामान् त्वं सफलान् करोषि यद् हरिः एतासु व्रजनारीषु होलिकाक्रीडां करोति।।४८।। विशाखा. एतन्नाम्नी राधासखी। व्रजस्यैकमात्ररसिकेन श्रीकृष्णेन मोदं आनन्दम् किं न प्राप्नोषि?।।५०।। आषाढमासः उत्कण्ठावशान् नानामनोरथान् जनयति, किंतु मम आशां नवीनो जलदः श्रीकृष्णः पूर्यात्।।५२।। जगदानन्द.- जगत् हिन्दोलाक्रीडया आनन्दति आनन्दितं भवति।।५३।। इयं भूः अनेन अम्बुभृता मेघेन हरिता हरितवर्णा, मम हृदयभूमिस्तु हरेः तानेन वंशीस्वरलहर्या हरिता प्रफुल्ला स्यात्। मम तु.- मम तु मनसि श्यामरूपश्चन्द्रो मोदताम्।।५५।। मम हृदये यदि वनमालीं न आलीयेत लीनो भवेत् माम् न आलिङ्गेत्। तर्हि कार्तिकमासस्य दीपावली व्यालीयेत व्यालीव आचरेत्, सर्पिणीव मां हृदये पीडयेदित्यर्थः।।५६।। महतां पुण्यकृताम् द्वादशमासी (द्वादशमासाः) महिता अभिनन्दनीया सती व्यत्येति, यत्र हरिचरित्रनदी पवित्रयति।।५७।।

(४४)

## दोहा-संदोहः

भीमभवाम्बुधिपरिगते यदि ते दया विभाति।
जगज्जीव जीवनतरिस्तर्हि पारमुपयाति।।१।।
त्रिविधतापतपनच्छटा विकटा चेदुदयेत।
पीतपटा श्यामलघटा तत्संकटाद्धरेत।।२।।
जगति पापपीनोऽपि किं दीनो व्यपदिश्येत?।
दीनदयालो! तव दया कथमु मयाऽऽमृश्येत।।३।।
भवगहने पवनेरिते दहनेऽयं निपतामि।
अवने मे करुणावने! कं भुवने कलयामि।।४।।
उदरकृते यदि जडमते! ध्रियते नटचर्यापि।
वयसि गते हरिहरकृते किं ह्रियते नामापि?।।५।।
जननावधि जननायकानभिसरसे रभसेन।
सपदि जगन्नायकमिमं किं नाश्रयसि रसेन?।।६।।
न खलु फल्गु घटनापरो भटनागरमाधेहि।
अलं मूढ! नटनाशतैर्नटनागरमादेहि।।७।।

**अघतरुणा गुरुणाऽऽवृतं भवाँस्तु मां नेक्षेत।**
**करुणामय! तरुणापि ते करुणा किमुपेक्षेत?।।८।।**

भवाम्बुधिगते (मयि)। जगत् जीवयतीति जगज्जीव: तत्सम्बुद्धि:। जीवनरूपा तरि: नौका।।१।। त्रिविधतापरूप: तपन: सूर्य: तस्यच्छटा दीप्ति: (आतप:)। श्यामलघटा (श्रीकृष्ण:) सूर्यातपहरणे मेघघटा प्रसिद्धा।।२।। य: पीनो जन: स दीन इति कथं व्यपदिश्येत (व्यवह्रियेत)। आमृश्येत स्पृश्येत (प्राप्येत)।।३।। पवनेन ईरिते प्रेरिते (प्रवर्द्धिते)। अयमहम्। हे करुणाया: अवने भूमे। अवने रक्षणे तदर्थं कं कलयामि अन्विष्यामि।।४।। हरे: हरस्य च कृते नामापि ह्रियते नाममात्रमपि परिह्रियते, भगवतो नामजपोऽपि न क्रियते?।।५।। जननायकान् समाजनेतृन् राजादीन्।।६।। फल्गु. निरर्थकसंघटनातत्पर:। भटेषु नागरं चतुरं राजादिकं न खलु आधेहि स्वामित्वे स्थापय। नटानां नागरं श्रीकृष्णम्।।७।। गुरुणा महता अघ (पाप)- रूपेण तरुणा आच्छादितम्। भवान् पुराणपुरुष:, दृष्टौ मन्दता सम्भाव्यते किंतु तरुणा नववयस्का (सर्वदा उद्धारे अनलसा) करुणापि किम् उपेक्षेत? अपितु नोपेक्षेत। नववयस्काया दृष्टि: प्रबला भवति।।८।।

**क्रूरकुकृतिकलुषाशयान् कुसृतिपरानपि पासि।**
**करुणावरुणालय! कथं मादृशमहह जहासि।।९।।**
**उन्मङ्क्तुं विवलन्नतलभवजलधौ मज्जामि।**
**नाथ! पुरा प्रोद्धृतगजं भुजं तमिह मृगयामि।।१०।।**
**जीवयसे जडजङ्गमानधमानुद्धरसीह।**
**विरुदमिदं किमु नाविदं? सविधं नैषि निरीह!।।११।।**
**नहि भुक्तिं मुक्तिं न खलु यदुनायक! याचामि।**
**भक्तिं तव पदसरसिजे देहि शरणमुपयामि।।१२।।**
**क: शमयति मम वेदनां क: कलयति हृद्गामि।**
**नाथ! त्वं कथयाधुना कथया कं व्यथयामि।।१३।।**
**भीमभवाम्बुधिमातरन्मा संशयमायाहि।**
**सलिलोपरि तारितशिलं ह्यविलम्बितमुपयाहि।।१४।।**
**करितो गुरुता नास्ति मे गिरितो गुरुता नैव।**
**गिरिधर तेन भुजेन मे भुजमुद्वह दययैव।।१५।।**

कुकृतय:- कुत्सिता कृतिर्येषां ते। कुसृतिपरान् कुमार्गलग्नान्।।९।। उन्मङ्क्तुं विवलन् बहिर्निस्सर्तुं विचेष्टमान:। अतले अगाधे। प्रोद्धृत: गजेन्द्रो येन तम्।।१०।। हृद्गामि हृद्गतं दु:खम्। एवमसाध्यपरिस्थितौ आत्मकथया कं व्यथयामीति त्वं कथय।।१३।। भवसागरतरणे संशयं मा कुर्या: येन पर्वतशिला अपि तारितास्तस्य मनुष्यतारणं किं कठिनम्।।१४।। गिरिधर! येन गिरिरपि धारित: स त्वम्।।१५।।

---

गो. वै. १०-

## विहारिविनयवर्णिका

**निन्दतु जगदिह कुटिलतामेतां जह्यां नाथ।**

**सरलमनसि निवसन् व्यथां बहेस्त्रिभङ्गी नाथ!।।१६।।**

जगत् कामं निन्दतु, अथ अथापि एतां कुटिलतां न जह्यां त्यजेयम्। यतः यदि मे मनसि कुटिलता न स्यात्, सरलता शुद्धचित्तता अवक्रता च स्यात् तर्हि त्रिषु स्थानेषु भङ्ग (वक्रता) शाली त्वं तत्र निवसन् व्यथां वहेः प्राप्नुयाः। अवक्रे स्थाने अधिकरणे वक्रं वस्तु कथं पदं दध्यात्? अवक्रे कोषे वक्रः खड्गो न तिष्ठतीति प्रसिद्धम्। दोषस्यापि गुणत्वकल्पनाल्लेशालंकारो वाच्यः। कुटिलतया सर्वैस्त्यक्तस्य दीनदयालुतया त्वमेव नाथः, इत्यादिर्व्यर्थङ्ग्यः।।१६।।

करौ कुबत जग, कुटिलता तजौं न, दीनदयाल।

दुखी होहुगे सरल हिय बसत, त्रिभंगी लाल।।१६।।

**कस्य दुर्गतेर्बन्धुरसि को भवता समतारि?।**

**मुधा भ्रमसि यदुवर! मुदा मिथ्याविरुदमधारि।।१७।।**

दुःखा गतिर्यस्य ईदृशस्य कस्य दीनस्य त्वं बन्धुः? कः पातकी भवता अतारि उद्धृतः। हे यदुवर! 'अहं दीनबन्धुः पतितोद्धरणः' इति कीर्तिं भावयन् मुदा मोदेन मुधैव भ्रमसि। इदं विरुद्ध मिथ्यैव त्वया अधारि। 'ये पूर्वं भवता तारितास्ते न वास्तवे दीनाः न वस्तुतः पातकिनः। अहं सत्यो दीनः पातकी च। अतएव विरुद्ध सत्यीकरणाय ममोद्धार आवश्यकः' इत्यादिर्व्यङ्ग्योऽर्थः।।१७।।

बंधु भये का दीन के, को तार्‍यो, यदुराय।

तूठे तूठे फिरत हो, झूँठे बिरद कहाय (बुलाय)।।१७।।

**दीनरवे कियदाह्वयं न हरेऽवितुमागामि।**

**जगदीशोऽपि जगद्गुरुर्जगद्वायुनाऽऽक्रामि।।१८।।**

दीनतापूर्णे स्वरे कियत् त्वाम् आह्वयम्, तथापि माम् अवितुं भवता न आगामि मम सहायो भवितुं भवान् न आगतः। जगतो गुरुः, जगतः स्वामी भवानपि जगतो वायुना प्रभावेण आक्रान्तः। 'गुरोः प्रभावः शिष्ये, स्वामिनश्च सेवके भवति' किन्तु इतो विपरीतमजनीति मन्दभाग्यस्य मेऽदृष्टम्। परं भवान् शरणागतेभ्योऽभयदानप्रतिज्ञाशाली 'सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम।।' अतएव सर्वसमर्थस्य ते नैवं स्यादित्यादि व्यङ्ग्यम्।।१८।।

कब कौ टेरत दीन रट, होत न स्याम सहाय।

तुमहूँ लागी जगत गुरु, जग नायक, जग बाय।।१८।।

**प्रत्ययमिह यदि यदुपतिः सम्पदमृतेऽपि पाति।**

**तर्ह्येतामवगुणभृतां को मनसाप्युपयाति।।१९।।**

सम्पदम् धनसम्पत्तिम् ऋते विनापि यदि यदुपतिर्मे प्रत्ययं प्रतीतिं विश्वासं रक्षति तर्हि अवगुणपूर्णां सम्पत्तिं मनसापि को ध्यायेत्, न कोऽपि। भाषाकिंवदन्ती, न संस्कृते प्रसिद्धा।

सम्पत्तेरावश्यकता संसारे प्रत्ययस्थापनाय। यदि मे प्रत्ययं भगवान्निर्वाहयेत् तर्हि सम्पत्तेः काऽऽवश्यकता। अकिंचनसहायको भगवान् सर्वभावेन मे रक्षक इत्यादि व्यङ्ग्यम्।।१९।।

तौ अनेक औगुन भरिहि चाहे याहि बलाय।
जो पति संपति हू विना जदुपति राखे जाय।।१९।।

**मादृशदुर्मुखविमुखतोऽप्यभिमुखतामाधाय।**
**निजकुकृतैः संकुचितमिह संकोचयसि चिराय।।२०।।**

निजकुकृत्यैः पूर्वमेव संकुचितम् लज्जितम् माम् अनया रीत्या चिराय अत्यधिकं संकोचयसि यत् मादृशे दुर्मुखे पापकलङ्कवशाददर्शनीयमुखे तदुपर्यपि नित्यं विमुखे भवन्तं प्रति अननुकूले अपि अभिमुखतामनुकूलताम् आदधासि अभिमुखतामाधाय संकोचयसि इति छन्दोबन्धाद् भङ्ग्यन्तरम्। विमुखतः इति सार्वविभक्तिकस्तसिः। भक्त्यादिगुणानां का कथा, ये विमुखाः सन्ति तानपि त्वमुद्धरसीति धन्या ते दीनदयालुतेत्यादि व्यङ्ग्यम्।।२०।।

निज करनी सकुचेहि कत सकुचावत इहि चाल।
मोहू से नित बिमुख त्यौं सनमुख रहि गोपाल।।२०।।

**निजनिजमतलग्ना वृथा न कलकलं कलयन्तु।**
**सर्वैः सेव्यः स यदुपतिरेकस्त इति विदन्तु।।२१।।**

नानामत (सम्प्रदाय)- वादिनो व्यर्थं कलकलं कुर्वन्ति, येन केनापि प्रकारेण सर्वेषामपि सम्प्रदायानामेको व्रजराजकिशोर एव सेवनीयः इति ते जानन्तु।। 'भगवान् रुचिभेदेन नानाभावनाभिरुपासमानानपि उद्धरतीत्यादि' व्यङ्ग्यम्।।२१।।

अपने-अपने मत लगे बादि मचावत सोर।
ज्यौं त्यौं सब कौं सेइबो एकै नंदकिसोर।।२१।।

**यत्नशते विहितेऽपि कः कलयतु पृथगुपपाद्य।**
**मोहनरूपमिलन्मनोऽभूज्जललवणमिवाद्य।।२२।।**

अनन्तयत्नैरपि 'इदं लवणम्' इति उपपाद्य (उपपत्तिं दत्त्वा) पृथक् कः कलयतु? न कोऽपि समर्थः। मोहनस्य भगवतः रूपे मिलित्वा मे मनः अद्य जलगतं लवणिमिव अभवत्। जले मिश्रितं तद्रूपतां गतं लवणं यथा पृथक् कर्तुं न शक्यते तथा मोहनशक्तिशालिनो भगवतो लावण्ये मिलित्वा मनोऽपि लवणगतिमगात्। लावण्ये मिलितस्य लवणगतिः स्वभावसिद्धैव। मोहनस्य रूपेण मे मनो मिलित्वा तद्रूपमभूत्, कथं पृथक्कर्तुं शक्येत' इत्यर्थः (विहारिरत्नाकरः)।।२२।।

कीनेहूँ कोरिक जतन अब कहि काढै कौन।
मौ मन मोहनरूप मिलि पानी मैं कौ लौन।।२२।।

**धर मालाक्षेपणिमिमां न परमुपायमवेहि।**
**संतर भवसागरमिमं हरिगुणतरिमादेहि।।२३।।**

जपमालारूपां क्षेपणीं 'नौकादण्डः क्षेपणी स्यात्' धर गृहाण, अपरमुपायं न जानीहि। हरिगुणगानरूपां तरिं नौकाम् आदेहि अवलम्बस्व।।२३।।

पतवारी माला पकरि, और न कछू उपाउ।

तरि संसार पयोधि कौं, हरि नावैं करि नाउ।।२३।।

**जगतो बोधयिता हरिर्नावाबुध्यते जातु।**

**दृशा दृश्यते जगदियं दृक् किं दृशमुपयातु।।२४।।**

न अवाबुध्यत न अज्ञायत। यया दृशा चक्षुषा जगद् दृश्यते इयं सा दृक् किं दृष्टिमुपयातु? अपि तु न दृश्यत इत्यर्थः।।२४।।

जगत जनायो जिहिं सकल सो हरि जाने नाहिं।

ज्यौं आँखिन सब देखिये, आँखि न देखी जाहिं।।२४।।

**प्रलयकारि ववृषुर्भुशं घना नभसि समवेत्य।**

**गिरिं करेऽधाद् गिरिधरो हरन् हरेर्मदमेत्य।।२५।।**

प्रलयकारि यथा स्यात्तथा। एत्य गोकुलवासिनां साम्मुख्यमुपेत्य हरेः इन्द्रस्य मदं हरन् गिरिम् अधात् अधरत्।।२५।।

प्रलय करन बरषन लगे जुरि जलधर इक साथ।

सुरपति गरब हर्यौ हरषि गिरिधर गिरि धरि हाथ।।२५।।

**मोहमिहावह मोहने घनश्याममीक्षस्व।**

**विहर निकुञ्जविहारिणा गिरिधरमुरसि धरस्व।।२६।।**

यदि ते मोहम् ममत्वं स्नेहम् कर्तुमिच्छा तर्हिं मोहने श्रीकृष्णे (मोहन इति भक्तकविपद्धत्या श्रीकृष्णे योगरूढम्) आवह कुरु (अन्ये पदार्थाः पर्यन्ते वैरस्योत्पादका बन्धकाश्च, मोहनस्तु सर्वदा मोहन इति व्यङ्ग्यम्)। यदि सतृष्णदर्शनेच्छा तर्हि घनवच्छ्यामं श्रीकृष्णमीक्षस्व, [दर्शनसुखकरतया प्रसिद्धो मेघः, तद्वत् कृष्णोऽपि सर्वेषां सुखकराणां मौलिभूतः]। निकुञ्जविहारशीलस्य नित्यो विहारः कदापि नोपराममेतीति तात्पर्यम्। गिरिधरो हि निजध्यायकस्य सर्वात्मना निर्वाहकः, येन हि गिरिं करे धृत्वा समग्रा व्रजवासिनो महेन्द्रकोपाद् रक्षिता इति तात्पर्यम्। सर्वानपि मानसेन्द्रियाभिलाषान् भगवत्येव समर्पय, अनन्यचेतसा लीयस्वेति चरमं व्यङ्ग्यम्।।२६।।

मन मोहन सों मोह करि, तू घनस्याम निहारि।

कुंजबिहारी सौं बिहरि, गिरिधारी उर धारि।।२६।।

**स्वल्पगुणैस्तुष्यति पुरा प्रकृतिः सा हि समापि।**

**अद्यश्वस्तनदानिता नाथ धृता भवतापि।।२७।।**

भवान् पुरा स्वल्पैरपि गुणैरतुष्यत्, पुरायोगे लट्। सा प्रकृतिः स्वभावः समाप्ता कृता व्यस्मारि त्यक्ता। अद्यश्वस्तनाः अद्य वा श्वो वा भवाः ये दातारस्तेषां भावः भवतापि धृतः। पूर्वं भवान्

दीनदयालुतया यत्किचिंद्गुणैरेव भक्तेषु कृपामकरोत्, अधुना बहुगुणशालित्वेऽपि कालविलम्बं करोषि ततश्च कृपाकरणाय बहुगुणशाल्यहमस्मीति निभृतं व्यज्यते। 'नाथ' इति सम्बोधनेन 'जगत्स्वामिनस्ते गुणानभिलक्ष्य कृपाकरणं नोचितम्। एतद्धि वणिजामिव वस्तुपरिवर्तनम्, यद्धि अन्ये देवा अपि कुर्वन्ति। किन्तु भवान् निस्साधनेऽप्यनुग्रहं करोतीत्यादि।' गूढं सूच्यते।।२७।।

थोरेहीं गुन रीझते, बिसराई बह बानि।
तुमहूँ कान्ह मनौ भए आज काल्हि के दानि।।२७।।

**लक्षसहस्रण्यर्जयतु कोटिं कोऽपि दधातु।**
**सम्पत्तिर्मम यदुपतिर्हरन् विपत्तिं भातु।।२८।।**

लक्षाणि च सहस्राणि च। दधातु गृहे स्थापयतु। विपत्तिपरिहाराय लोका धनसंग्रहं कुर्वन्ति किंतु तद्धनं सान्तम्, चौरादिभिर्हार्यं च। किन्तु मम सम्पत्तिभूतो हरिर्नित्यः सदा मे आपत्तिहरणे सज्जश्च। कष्टसंगृहीतो निधिरिव मे हरिः प्रेमास्पदमित्यादि ध्वन्यते।।२८।।

कोऊ कोटिक संग्रहौ, कोऊ लाख हजार।
मो संपति जदुपति सदा बिपति बिदारनहार।।२८।।

**मोहनमूर्तेर्यदुपतेरद्भुतगतिराभाति ।**
**मनसि वसति तदपि स जगति प्रतिबिम्बितमुपयाति।।२९।।**

मोहिनी मूर्तिर्यस्य तस्य। मनसि वसन्नपि स जगति प्रतिबिम्बनमुपयाति, जगद्वर्तिषु सर्वेषु पदार्थेषु निजप्रतिबिम्बं दर्शयति। यः पदार्थः कस्यचिदन्तः प्रविष्टो भवति तस्य प्रतिबिम्बो बहिर्न प्रतिफलति, किंतु मानसस्य अन्तर्निवसतोऽपि हरेः प्रतिबिम्बो बहिः सर्वस्मिन्नपि जगति पतति, इत्येव अद्भुता गतिः। मोहनमूर्तिरितिपदेन हरेस्तथा मोहिनी शक्तिर्यस्याः हृदयस्यान्तः स्थापनेन मानसं तथा मोहितं भवति यथा सर्वं जगत् श्यामसुन्दरमयमवलोकयति। तन्मयो भूत्वा भक्तो जगद्बन्धाद्विमुक्तो भवतीत्यादि व्यज्यते।।२९।।

मोहन मूरति स्याम की अति अद्भुत गति जोइ।
बसत सुचित अंतर तऊ प्रतिबिंबित जग होइ।।२९।।

**भवसागरमिममुत्तरन् को हि पारमुपयाति।**
**स्त्रीछविछायाग्राहिणी मध्य एव गृह्णाति।।३०।।**

सिंहिकानाम्नी काचिद् राक्षसी आत्मन उपरि गच्छतो यस्य कस्यचित्पक्ष्यादेः प्रतिबिम्बं छायाम् आदाय तद्द्वारैव तं पदार्थमाकृष्य भक्षयति स्म, या हि रामावतारे समुद्रं तरता हनुमता समापि। स्त्रियाः शोभा भवसागरमुत्तरन्तं मध्य एव गृह्णाति, ततश्च यो हि हनूमानिव संयतेन्द्रियो बलवांश्च भवेत् स एव तां पराजित्य पारगामी भवतीति सूच्यते। 'छविछायाग्राहिणी'। अत्र तुगागमो भाषानुरोधान्न कृतः। 'आगमशास्त्रमनित्यमिति' वा व्याकरणानन्यभक्तैः शरणीकरणीयम्।।३०।।

या भव पारावार कौं उलँघि पार को जाय।
तिय छबि छायाग्राहिनी ग्रहै बीचहीं आय।।३०।।

**प्रलयरोपिकोपावृतं पुरुहूतं प्रलुलोप।**

**गोगोपीगोपालकान् गिरिधर एव जुगोप।।३१।।**

प्रलयं रोपयति करोति ईदृशेन क्रोधेन आवृतम्। लुलोप लुप्तमकरोत्, पराजित्य द्रावयामास। तौदादिकाल्लुम्पतेर्लिट्। गिरिसदृशं दुरुद्धरं धृत्वापि ररक्षेति 'गिरिधर' पदेन सूच्यते। ततश्च भक्तवत्सलः सर्वसमर्थश्च स एव सर्वात्मना सेव्य इति चरमं ध्वन्यते।।३१।।

लोपे कोपे इन्द्र लौं रोपे प्रलय अकाल।

गिरिधारी राखे सबैं गो, गोपी, गोपाल।।३१।।

**नायमन्यसमयः सपदि तं नाविकमन्विष्य।**

**सागरपारं योऽनयत् प्रस्तरतरौ निवेश्य।।३२।।**

अन्यः साधारणः अयं समयो नास्ति, अधुना भवसागरपारगमनाय तं कर्णधारमन्विष्य गवेषय, यो रामावतारे पाषाणरूपायां तरौ नौकायां निवेश्य वानरभल्लूकादीन् सागरपारमनयत्।।३२।।

यह विरिया[1] नहिं और की तू करिया[2] वह सोधि।

पाहन नाव चढाइ जिहिं कीने पार पयोधि।।३२।।

**येन पतितततिरुदतरद्धृदि तदेव कलयाथ।**

**मम हि गुणागुणगणमिमं गणय न गोपीनाथ।।३३।।**

हृदि कलितेन येन वस्तुना (दयारूपेण) पतितानां ततिः समूहः उदतरद् भवसागरमुदलङ्घयत्, अथ तदेव हृदि कलय कुरु। यदि गुणावगुणानां गणनां करिष्यसि तर्हि अवगुणपूर्णस्य ममोद्धारोऽसम्भवः, किंतु दयामेव मनसि स्थापयेर्यद्वशात्पूर्वमधुना च पातकिनामुद्धारोऽभवद्भवेच्च। 'गोपीनाथ' पदेन व्रजवासिनो यथा सर्वापद्भ्यो रक्षणपूर्वं दयया सर्वथा उद्धृतास्तथाहमपि वाञ्छामीति ध्वन्यते। 'इमम्' इत्यनेन प्रत्यक्षो मेऽवगुणराशिरिति सूच्यते।।३३।।

कीजै चित सोई, तरे जिहिं पतितन के साथ।

मेरे गुण औगुन गननि गनौ न गोपीनाथ।।३३।।

**यत्र यत्र तिष्ठन् हरिः सुभगशिरोमणिरैक्षि।**

**गतेऽपि तस्मिन् स्थलमिदं दृशं हरत् समवैक्षि।।३४।।**

यस्मिन् यस्मिन् स्थाने तिष्ठन् हरिः ऐक्षि ईक्षितः (ईक्षतेः कर्मणि लुङ्)। सुभगानां सुन्दराणां शिरोमणिः। तस्मिन् (हरौ) मथुरां गतेऽपि। तत् स्थानं क्षणकालाय दृष्टिम् आकर्षत् समवैक्षि विलोकितम्। हरेः सुभगतामाहात्म्यात्तस्य स्थितिस्थलमपि तथा रमणीयं भवति यथा तद्दर्शनाय स्वतो दृष्टिराकृष्टा भवति।।३४।।

---

१. बिरिया=बार। (बिहारीरत्नाकर)। २. करिया=कर्ण (नौकादण्ड, अतएव नौकाचालक कर्णधार)। उसका धारण करने वाला 'केवट' भी करिया।

जहाँ जहाँ ठाढ़ौ लख्यौ स्याम सुभग सिरमौर।
बिनहूं उन छिन गहि रहत दृगनि अजौं वह ठौर।।३४।।

**वारसहस्रण्ययि हरे! विनतिमिमां कलयेय।**
**यथा तथा बत निर्वहन् राजसभां सेवेय।।३५।।**

सहस्रवारान् इमां विनतिं नम्रतापूर्विकां प्रार्थनां करोमि यद् येन केनापि प्रकारेण भवतो राजसभायां (दरबारे) निर्वाहं कुर्वन् पतितः स्यां न तु ततो बहिर्भूतः। नाहं मुक्तिं दिव्यलोकादिकं वा वाञ्छामि किंतु भवतश्चरणतलपतित एव सर्वदा स्याम्, कामं मे पातकविचारेण भवतोऽनुग्रहस्य पूर्णत्वाभावादादरोऽनादरो वा भवेदिति तात्पर्यम्।।३५।।

हरि! कीजति बिनती यहै तुम सौं बार हजार।
जिहिं तिहिं भाँति डर्‍यो रहौं पर्‍यौ रहौं दरबार।।३५।।

**सो.- त्यज तीर्थान्यनुरागमय हरिराधातनुरुचौ।**
**प्रतिपदमयति प्रयाग इह व्रजकेलिनिकुञ्जपथि।।३६।।**

तीर्थानि त्यज, हरिराधयोस्तनुरुचौ शरीरकान्त्याम् अनुरागम् अय प्राप्नुहि (कुरु)। ययोः (हरिराधिकयोः) व्रजस्य केलि (बिहार)- निकुञ्जानां पथि मार्गे प्रतिपदम् (प्रत्येकचरणे) प्रयागतीर्थम् अयति प्राप्नोति (भवति)। अन्यतीर्थोपगमनस्य परिश्रमं मुधा किं कुरुषे, श्रीकृष्णराधिकयोः श्रीअङ्गानां कान्त्यामेव अनुरज्य, राधाकृष्णावेव सेवस्वेत्यर्थः। व्रजभूमौ निकुञ्जकेल्याः समये ययोः प्रतिपदविन्यासे तीर्थराजः प्रयागः स्वयमुपगच्छति। श्रीकृष्णराधिकयोर्ध्यानपूर्वकमनुरागे कृते व्रजस्य प्रत्येकपदे प्रयागराजोपगमनस्य फलं प्राप्यते, किं मुधा एकैकतीर्थसेवनश्रमेणेति सूच्यते। किञ्च-हरेश्छविः श्यामा सा यमुना, राधाया गौराच्छविर्गङ्गा। तयोरनुरागश्च मध्ये सरस्वती (कविसमये अनुरागस्य सरस्वत्याश्च रक्तवर्णत्वात्)। ततश्च प्रयागस्य त्रिवेणी स्वयमेषा उपस्थिता, किं मुधा तत्र तत्र चरणचङ्क्रमणश्रमेणेति गूढं ध्वन्यते।।३६।।

तजि तीरथ हरि राधिका तन दुति कर अनुराग।
जिहिं ब्रज केलि निकुञ्ज मग पग पग होत प्रयाग।।३६।।

**दो.- हृत्स्नानागारं वहे तापत्रयात् प्रताप्य।**
**इदमुपेत्य कुहचिद्धरिः स्विद्यति पुलकमवाप्य।।३७।।**

आध्यात्मिकाधिदैविकाधिभौतिकेति तापत्रयात् प्रताप्य इदं हृदयरूपं स्नानागारं वहे रक्षामि। (हरेरागमनाय मया सज्जीकृतम्)। यदि कदाचिद् हरिः इतः समुपगच्छेत्तर्हि इदं स्नानागारं उपेत्य प्राप्य उष्णतावशात् पुलकं रोमाञ्चं प्राप्य कदाचिद् हरिः स्विद्यति ('पसीजैं'- हिन्दी) अर्थात् मयि करुणार्द्रो भवेत्। अतिकठोरपुरुषस्य स्वेदनेन 'पसीजना', शिथिलीभावः मृदुभावो लक्ष्यते भाषायाम्। तदनुसारेण- 'मम हृदयं पूर्णतया नानासंतापैः संतप्तम्, अत एव यवनसम्राजां स्नानागारे ('हम्माम') इव कदाचिद्धरिश्चेत् प्रविशेत् (अर्थात् यदि मम ध्यानवशाच्चेतसि संचरेत्) तर्हि तप्तस्य मे दीनतां दृष्ट्वा कदाचिन्मयि करुणार्द्रः सन् ममोद्धारं कुर्यादिति गूढं ध्वन्यते।।३७।।

मैं तपाय त्रयताप सौं राख्यौ हियौ हमाम।

मति कबहुँक आयें यहाँ पुलकि पसीजैं स्याम।।३७।।

**समयात् प्रकृतिविपर्यये कः शीलं न जहाति।**

**करुणां करुणाकृज्जहौ कुमतिकलावुपयाति।।३८।।**

समयात् समयस्य परिवर्तनेन प्रकृतेः स्वभावस्य परिवर्तने सति कः पुरुषो निजमाचरणं न त्यजति। (यतः) कुत्सितमतिशालिनि कलिकाले उपयाति आगच्छति सति करुणाकरो हरिरपि करुणां जहौ तत्याज। हरिः सर्वदा करुणाकर इति प्रथितः, किंतु साम्प्रतं मम दुर्दशां दृष्ट्वापि न मय्यनुकम्पां करोति। अतएव कलिसमयवशाद् हरेरपि स्वभावपरिवर्तनं जातमित्यर्थः। अनेनोपालम्भेन 'हे हरे! नाहमधिकं कालविलम्बं सहे साम्प्रतं निजदयास्वभावाद्यैव मयि करणीयेति' ध्वन्यते।।३८।।'

समै पलट पलटै प्रकृति, को न तजै निज चाल।

भौ अकरुन करुना करौ इहिं कपूत कलिकाल।।३८।।

**यथा भवेयं स्यां तथा नाथ निजाचरितेन।**

**अतिकठिनं मम तारणं किं गोपाल हठेन।।३९।।**

हे नाथ! निजेनाचरितेन अहं यथा भवितुं योग्यः स्यां तथा भविष्यामि। निजाचरितानां शुभाशुभं फलमहं स्वयं भोक्ष्ये इत्यर्थः। मम तारणम् उद्धरणम् (कर्मबन्धनाद्विमोक्षः) अतिकठिनम्। अतएव मम तारणे हठं मा कुरु [मम पातकानि तादृशानि येषामग्रे पूर्वपातकिनां पातकानि अतिसामान्यानि। अतएव तत्तारणमात्राभ्यासिनो भवतः सकाशान्मम तारणमहं दुष्करं मन्ये। प्रणयभाजनं श्रीमानस्मिन् कर्मणि महान्तं श्रममनुभवेदित्यपि मम नेच्छा। ततश्च यदि मे तारणेच्छा तर्हि महापातकिनो ममोद्धारे महदवधेयमिति ध्वन्यते]।।३९।।

ज्यौं ह्वैहौं, त्यौं होंउगौ हौं हरि अपनी चाल।

हठ न करौ, अति कठिन है मो तारिबौ गुपाल।।३९।।

**भूरि कृतज्ञो नाथ मम सम्यक् सुदृशाकारि।**

**भवता भवतारण! कृतिर्यन्मम सूक्ष्ममधारि।।४०।।**

हे भवतारण हे संसारोद्धारक! मम कृतिः ममाचरणं यद् यदि भवता सूक्ष्मतया अधारि अवधारितं दृष्टम्, तर्हि हे नाथ! भवता मम सुदशा सम्यक् अकारि! ममोद्धारः सम्यग् व्यधायि इति काकुः। एतत्परिश्रमार्थम् अहं भवतः कृतज्ञः कृतज्ञतया भवतो निर्मञ्छनतामगाम्। ['मैं तुम्हारी बलिहारी गया' इति हिंदीशैली]। सेयं विपरीतलक्षणा। 'यदि भवता ममाचरणं दृष्टं तर्हि तस्यातिहीनतया मम अतिदुर्दशा भवताकारि' इति लक्ष्योऽर्थः। यदि ममोद्धरणमभीष्टं तर्हि ममाचरणोपरि दृष्टिर्न देया, 'भवतारण' विरुदेन भवता दयावशादेवमेवोद्धारः कर्तव्य इति व्यङ्ग्यम्।।४०।।

तौ बलियै, भलियै बनी, नागर नंदकिसोर।

जो तुम नीकैं कै लख्यौ मो करनी की ओर।।४०।।

सो.- देहि नाथ मे मुक्तिमधमसमूहे यामदाः।
बन्धे चेदनुरक्तिरथ बधान ते गुणगणैः।।४१।।

हे सर्वसमर्थ (अधमोद्धारक)! यथा अनेकेभ्योऽधमेभ्यः पूर्वम् अदाः दत्तवान् तां मुक्तिं मह्यमपि देहि। चेत् मम बन्धने एव भवतः संतोषस्तर्हि ते गुणगणैर्बधान। सगुणस्वरूपस्योपासनायां मां योजयेत्यर्थः। [बन्धने गुणस्य (रज्ज्वाः) अपेक्षा अतएव ते गुणैर्मां बद्धं कुरु इति श्लेषोऽपि]।।४१।।

मोहू दीजै मोष, ज्यौं अनेक अधमन दियो।
जो बाँधैं ही तोष, तौ बाँधौ अपने गुनन।।४१।।

दो.- स्पर्द्धा बद्धा त्वयि च मयि कोऽभिजयेदधुनाथ।
निजनिजविरुदनिवाहने द्वावपि निरतौ नाथ।।४२।।

हे नाथ! त्वयि मयि च (तव मम च मध्ये) स्पर्द्धा बद्धा दृढीभूता। अथ, अधुना दृश्यताम्, को जयेत्, द्वयोर्मध्ये को विजयशाली भवति। निजनिजविरुदस्य निजनिजपूर्वप्रशस्तेः लज्जानिर्वाहे त्वम् अहं चेति द्वावपि तत्परौ। मम विरुदं पतितः अधमः इत्यादि। अतएवाहं निजनामरक्षार्थं पतितकर्तव्यानि न त्यजेयम्। भवतो विरुदं 'पतितपावनः' इति, अतएव भवानपि मम पातकानि संनाश्य मां पावयितुं प्रयतेथाः। अतएवाधुना द्रष्टव्यम्- पराजिततया पातकादहं विरतो भवामि, अथवा दुष्करमिति कृत्वा ममोद्धरणाद्भवान् उपरतो भवतीति। यदि सत्यो भवान् पतितोद्धारकस्तर्हि पूर्णपातकिनोऽपि ममोद्धारः कर्तव्य एवेति व्यङ्ग्यम्।।४२।।

मोहि तुम्हें बाढी बहस, को जीतै जदुराज।
अपने अपने बिरद की दुहू निबाहन लाज।।४२।।

(४५)

## सोरठासमुदयः

काव्यकल्पनाकारु कृपयतु मयि तेजः किमपि।
मनसि चकासतु चारुचरणसरोरुहरेणवः।।१।।
व्रजजगतीजीवातुरातुरहृदयरसायनम्।
मम हि शर्म निर्मातु मातुलहृदि शूलं किमपि।।२।।
यादवकुलावतंस विबुधवंशवारिधिविधो।
मुनिजनमानसहंस कंसनिकन्दन पाहि माम्।।३।।
सुहृदो मेऽपसरन्तु सन्तु सुखं विमुखाः परे।
किंतु नाथ न हरन्तु गन्तुकाममेता दृशः।।४।।
कामं मां क्लिश्नन्तु भवतापाः पापानुगाः।
अङ्के मां कलयन्तु पङ्केरुहसरसा दृशः।।५।।

यच्छसि यदुवर यर्हि गर्हितगुहसदृशेऽपि शम्।
दीने दिशसि न तर्हि बर्हिपक्षधारिन् दृशम्?।।६।।
स्वैरमिदं मे देहि देहिषु दूषितमपि पदम्।
एकमिदं प्रविधेहि धेहि दयादृष्टेर्लवम्।।७।।
अधमतमेषु निषीद सीदति किं ते मानसम्।
मञ्जुनाथ न विषीद यदि सिध्यति पत्युः कृपा।।८।।
जिह्वायां तव नाम चरणरेणुरूषितमुरः।
वसतिरपि व्रजधाम धन्यानामन्ते भवति।।९।।
कपटैर्जन्म जगाम, कामपि सुकृतिं न कृतवान्।
किंत्वन्ते तव नाम जपति जिह्वया जय्यसौ।।१०।।

काव्यकल्पनायां कारुशिल्पि तेजः सरस्वती। कृपयतु कृपां करोतु।।१।। जीवातुर्जीवनौषधम्। मातुलः कंसः।।२।। विबुधा देवास्तेषां वंशोन्नायक!।।३।। गन्तुकामं परलोकं गन्तुमिच्छन्तम् मुमूर्षुम् एतास्तव दृशः न परिहरन्तु।।४।। पङ्केरुहवत् सुभगाः भगवतो दृष्टयः।।५।। यर्हि यदा गुहो व्याधराजः। तर्हि दीने न दिशसि? अपि त्ववश्यं दिशसि, काकुः।।६।। पदं स्थानं (जन्म)।।७।। मानसं किं सीदति खिद्यते, खेदो न योग्यः। यदि स्वामिनो दया भवति।।८।। रूषितं लिप्तम्।।९।। अन्ते चेत्तव नाम जयति असौ जयी।।१०।।

भ्रान्तं भवविगमाय न श्रान्तं क्षणमेकमपि।
यान्तं त्वदुपगमाय तान्तं किं विरुजसि विभो।।११।।
निगमगेयगुणधाम कामकोटिलज्जकवदन।
मञ्जुलमेघश्याम मामपनय पथतोऽपनय।।१२।।
वाचं विनियच्छामि कामं भ्रामय मां भवे।
किंतु यत्र गच्छामि तत्र नाथ ते स्यामहम्।।१३।।
सोऽयं सुचिरायाथ कथमुत्पथगामी भवेत्।
अन्तर्यामी नाथ! लब्धः स्वामी चेद् भवान्।।१४।।
दुर्गतदुःखनिकन्द कन्दति मन्दोऽयं चिरात्।
किं दयसे न मुकुन्द कुन्दविनिन्दिकया दृशा।।१५।।
गोपगृहेभ्यो येन नीतं नवनीतं पुरा।
तेन चित्रचरितेन भुवि नीता गीताद्भुतम्।।१६।।

यदि मधुरिमलवलेहि मञ्जुनाथ मानसमिदम्।
तर्हि दृशं विनिधेहि मधुसूदन मुखपङ्कजे।।१७।।
सत्सङ्गो ह्यविराममखिलकामनानां लयः।
धन्यानां धृतिधाम तव नामस्मृतिरन्तिमा।।१८।।
मयि साम्मुख्यसमेतमेतदेव दयतां भवान्।
मरणे मम विहरेत चेतसि ते चरणे रतिः।।१९।।

भवस्य संसारस्य विगमाय निवृत्तये। त्वदुपगमाय त्वत्प्राप्तये यान्तं गच्छन्तम्, तान्तं खिन्नम् (इमं दीनम्) किं विरुजसि (दर्शनमदत्त्वा किं पीडयसि)।।११।। कोटिः कोटिसंख्या। अपनयपथतः दुर्नीतिमार्गात्।।१२।। विनियच्छामि रुणध्मि, किंचिदपि न वदामीत्यर्थः।।१३।। सोऽयं (ते भक्तः)।।१४।। कन्दति क्रन्दति, दृशा किं न दयसे दृष्टिदानद्वारा दयां किं न करोषि?।।१५।। भुवि नयनेन गीताया दिव्यत्वम्।।१६।। मधुरिम्णो माधुर्यस्य लवं लेढि (आस्वादयति) तच्छीलम्।।१७।। अन्ते तव नामस्मरणं धन्यानां भाग्यवतामेव धृतिधाम धैर्याधायकं भवतीत्यर्थः।।१८।। मयि मां प्रति सम्मुखतां कृत्वा (मदनुकूलो भूत्वेत्यर्थः)।।१९।।

कस्य सविधमुपयामि यामिकजनविनियन्त्रितः।
कस्य सदसि याचामि वाचा दुर्गतदीनया।।२०।।
दुर्दिवसेषु दयेत को दारुणदुरिताविले।
कस्य सदयमुदयेत दीनदुःखदमनोद्यमः।।२१।।
निस्साधननिकृतेषु केन कारुणिकता कृता।
जात्यादिभिरधमेषु कस्य सुधावृष्टिर्भवति।।२२।।
लभते कस्य द्वारि परितापी पापी शमम्।
अभयसत्रमाधारि केन सर्वजगतः कृते।।२३।।
पद्भ्यां कोऽभिससार ग्राहग्रस्तं गजपतिम्।
लज्जां कोऽभिजहार द्रुपदसुताया नृपसदसि।।२४।।
आयुः समं समाप्य भुवि नीतो वीतोऽसुभिः।
यन्नामामृतमाप्य चिरममरीभवति ध्रुवम्।।२५।।
नहि जहाति यो जातु जगति जिह्मगानपि जनान्।
स ममोद्धारी भातु बर्हिपक्षधारी सदा।।२६।।

---

गरुडध्वज गोविन्द गोपीजनजीवननिधे।
मधुमुरहरण मुकुन्द माधव मुरलीधर हरे।।२७।।
दनुजदर्पपरिहार दामोदर दुर्जनदमन।
राधाप्राणाधार पीताम्बर नीरजनयन।।२८।।
कविकलया कलयामि यामिह रचनामञ्जरीम्।
तामेतां निदधामि दामोदरपदपङ्कजे।।२९।।

यामिकजनैः द्वारपालैः विनियन्त्रितः अवरुद्धः अहं राजादेः कस्य समीपं गच्छामि? राजादेः समीपे गमनस्यैवावसरो न भवतीत्याशयः। दुर्गता दुरवस्थापन्ना (गद्गदा)।।२०।। दुर्दिवसेषु संकटदिनेषु। दारुणैः प्रचण्डपापैः आविले मलिने (पापिनि जने)।।२१।। निस्साधनाश्च निकृताः तिरस्कृताः च। जात्यादि. गणिका-गुहगृध्रादिषु।।२२।। शमं शान्तिम्। अभयसत्रम्- 'सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम'।।२३।। अभिजहार ह्रियमाणां प्रत्याजहार (परावर्तयामास)।।२७।। समं सर्वम्। असुभिः प्राणैः वीतः रहितः (मृतः)।।२५।। जिह्मगान् वक्रगामिनः (पूतनाशिशुपालादीन्)।।२६।। दनुज.- दर्पं परिहरतीति दर्पपरिहारः (अण्)।।२८।।

(४५)

## अमृतध्वनिः

नन्दन् नन्दनिकेतने विन्दन्नखिलसुखानि।
नन्दयतान्नन्दात्मजो भिन्दन् दनुजकुलानि।।
भिन्दन् दनुजनिवृन्दं नगमुपखिन्दन् नखरे।
छिन्दन् भवभयमिन्दन् जगति विरुन्धन् समरे।।
स्पन्दद्भ्रमरममन्दद्रुमभवचन्दच्चन्दन ।
चन्द्रद्युतिमपि निन्दद्वदन विनन्दन्नन्दन।।१।।

दनुजनि (दैत्य) वृन्दं भिन्दन् नाशयन्। नखरे नगं पर्वतम् उपखिन्दन् परिघ्नन् आघट्टयन्निति यावत्, 'खिद परिघाते' तुदादिः। जगति इन्दन् परमसमर्थो भवन्, 'इदि परमैश्वर्ये'। समरे (द्रोहिणः) विरुन्धन् आक्राम्नन्। स्पन्दन्तः सौगन्ध्यवशात् किंचिच्चलन्तः भ्रमरा यस्मिन्नेवं यथा स्यात् तथा अमन्दद्रुमभवः अतएव चन्दन् आह्लादयन् चन्दनः अङ्गरागो यस्य, तत्सम्बुद्धौ। 'स्पदि किंचिच्चलने' अनुदात्तेत्त्वाद्विकल्पेनात्मनेपदम्। विनन्दन्तः मोदमानाः नन्दनाः सूनवो यस्य तत्सम्बुद्धौ।।१।।

नृत्यन्मुरहरमनुसरन्नारीनूपुरनादि ।
रासमध्यमासीत् तदा गुञ्जन्मुरजह्लादि।।
गुञ्जन्मुरजमुदञ्चन्निनदमखञ्जन्नवरति ।
पुष्यन्मदमतितुष्यन् हरिरविदुष्यन् विहरति।।

**चञ्चन्नयनमुदञ्चत्करुणममुञ्चन्निह चर।**

**नित्यं विहर न भृत्यं परिहर नृत्यन्मुरहर।।२।।**

गुञ्जन् प्रतिध्वनिं प्रसारयन् मुरजो यस्मिन् यथा स्यात् तथा। उदञ्जन् उच्चैर्व्यक्तीभवन् निनदो यस्मिन् यथा स्यात् तथा। अखञ्जन्ती न खञ्जा गतिविकला भवन्ती नवरतिर्यस्मिन् यथा तथा। पुष्यन् मदः प्रमदो यस्मिन् यथा स्यात् तथा, अतितुष्यन् हरिः अविदुष्यन् कावैकृत्यमनुपगच्छन् (मदनविजयित्वात्) विहरति। चञ्चन्ती वात्सल्यवशाद् भक्तेषु गतिशीले नयने यस्मिन् यथा स्यात् तथा। उदञ्चत्करुणम् उदञ्चन्ती प्रस्फुरन्ती करुणा यस्मिन् यथा स्यात् तथा) भक्तं (माम्) अमुञ्चन् दूरे न कुर्वन् इह रासे चर। अन्यत् स्पष्टम्।।२।।

( ४६ )

## हरिगीतिकादिच्छन्दः संदर्भः

### हरिगीतिका

**वृन्दारकानतमौलिगतमन्दारवनगन्धावहा**

**मज्जन्मनुजवृन्दाय या सायुज्यसुखसंधावहा।**

**मन्दाय मे मन्दारवन्मन्दान्यसुखपरिपाकिनी**

**वन्दारुभवबन्धापहा गोविन्दपदमन्दाकिनी।।१।।**

देवानाम् आनतमौलिगतानां मन्दारपुष्पाणां श्रेष्ठगन्धं धारयति सा। स्नानं कुर्वते जनसमूहाय भगवतः सायुज्यसुखसंधानकारिणी। प्रणमतां भवबन्धच्छेदिनी गोविन्दचरणरूपा स्वर्गङ्गा। मूढाय मह्यं कल्पवृक्षवत् अमन्दसुखपरिपाकयुक्ता (भवतु)।।१।।

### मरहटा

**अयि दीनदुःखहर सकलसौख्यकर दयया दृशमिह देहि**

**करुणावरुणालय जनितजनाभय सपदि सदयमवधेहि।**

**पदपङ्कजसद्मनि संनतसङ्गिनि पतितमेतमवयाहि**

**अयि दीननाथ तव मञ्जुनाथमिममुद्धर न किल जहाहि।।२।।**

अस्मिन् दीने दयया दृष्टिं देहि। जनितं जनानां भक्तानाम् अभयं येन तत्सम्बुद्धौ। सपदि शीघ्रम्, अवधेहि अवहितो भव। सामान्यपातकी नास्मि, अतएव अवहितः सन्नुद्धारे प्रवर्तस्व। महापातकित्वं ध्वन्यते। संनतानां प्रणतानां सङ्गिनि सहायके तव पदपङ्कजरूपे गृहे पतितम् एतं (माम्) अवयाहि जानीहि। उद्धर, न जहाहि (त्यज)।।२।।

### चवपैया

**अयि सुखलवलालस प्रियसख मानस**

**मम मतिरिह यदि नेया।**

**तर्ह्यलमभिरामे कीलितकामे**

**रामे मतिरुपधेया।।**

**यत्राहितचापे दनुजदुरापे**

**देवा दर्पमविन्दन्।**

**ते कुपितकपीशा नद्धनदीशा**

**रावणविभवमभिन्दन्।।३।।**

मम सम्मतिर्यदि ग्राह्या तर्हि अलं सुन्दरे, अतएव नियन्त्रितकामदेवे रामचन्द्रे बुद्धिः योजनीया। दनुजैः दैत्यैः पराक्रमद्वारा दुष्प्रापे यस्मिन् देवा दर्पम् अगच्छन्। रामशौर्ये देवानां गर्व आसीदित्यर्थः। नद्धः सेतुना बद्धः नदीशः समुद्रो यैस्ते कुपिताः कपीशाः वानरश्रेष्ठाः रावणोत्कर्षम् अचूर्णयन्।।३।।

### पद्धरि

**श्रीकृष्णचन्द्र व्रजपतिकिशोर**

**राधामुखेन्दुचञ्चलचकोर।**

**अयि सकलसूरिगुणनीयगाथ**

**मम मनसि सर्वदा विहर नाथ।।४।।**

राधामुखचन्द्राग्रे चकोर! सकलसूरिभिः कविभिः गुणनीया आवर्तनीया कथा यस्य तत्सम्बुद्धौ।।४।।

**खेलत्कलिन्दजाकूलगामि**

**गोविन्दचरणनलिनं नमामि।**

**मकरन्दबिन्दुमधिगम्य यस्य**

**मुदमेति मनो मुनिमधुकरस्य।।५।।**

कलिन्दजायाः यमुनायाः कूलगतं चरणकमलम्। यन्मकरन्दस्य बिन्दुमपि प्राप्य मुनिरूपस्य भ्रमरस्य मानसम् आनन्दति।।५।।

### उल्लाना

**सकलजगज्जीवननिधे!**

**मयि विधेहि करुणां विधे!।**

**चरणतले पतितं सुतं**

**न किमवसे दयया द्रुतम्।।६।।**

सकलजगतां जीवननिधिरूप! हे विधायक भगवन्!।।६।।

## ( ४७ ) गीतिगोपुरम्

### प्रभातगीतिः *

विनयमयत मानसेन नन्दगोपबाले।
विनयमयत. ।।१ ।।
चपलारुचिडम्बरेण परिहितपीताम्बरेण।
वपुषा घनसुन्दरेण नन्दितव्रजबाले ।।२ ।। विनय. ।।
कुण्डलमिह गण्डलम्बि चञ्चति चपलाविडम्बि।
कमलोपमचरणचुम्बिलम्बितवनमाले ।।३ ।। विनय. ।।
उरसि कुसुममादधाति शिरसि मुकुटमाविभाति।
यमुनापुलिनानि याति तिलकार्चितभाले ।।४ ।। विनय. ।।
दानवकुलमिदमगाहि येनाहिततिरदाहि।
प्रणयं मनसानुयाहि तस्मिन् व्रजपाले ।।५ ।। विनय. ।।
क्रीडति कृष्णेऽनुरहसि राधामुखमुग्धमनसि।
कालियफणनृत्यसदसि यमुनार्पितताले ।।६ ।। विनय. ।।
पृथिवीभरभर्जनाय दुर्मदनृपतर्जनाय।
पाण्डवहितसर्जनाय कौरवकुलकाले ।।७ ।। विनय. ।।
दुर्मदमदमीलनाय निजपणपरिशीलनाय।
कल्किनि कटुकीलनाय करधृतकरवाले ।।८ ।। विनय. ।।
निगमागमगीतगाथ देहि दृशं दीननाथ।
दययोद्धर मञ्जुनाथमस्मिन् भवजाले ।।९ ।। विनय. ।।

विनयं नम्रतां (भाषानुसारं सादरप्रार्थनाम्) अयत कुरुत इत्यर्थः ।।१ ।। चपला (विद्युद्) वत् रुचिडम्बरः कान्तिसमूहो यस्य ईदृशेन परिहितेन धारितेन पीताम्बरेण, तथा घन (मेघ) सुन्दरेण वपुषा च आनन्द्रिता व्रजबाला (स्त्रियः) न ईदृशे (नन्दगोपबाले) ।।२ ।। चपलाविडम्बि विद्युत्तिरस्कारकम्। चरणचुम्बिनी लम्बिता वनमाला यस्य तस्मिन् ।।३ ।। यः कुसुमम् आदधाति धारयति। यः यमुनापुलिनानि याति तस्मिन् अथवा याति गमनं कुर्वति (शतृ) तस्मिन् ।।४ ।। येन दानवकुलम् अगाहि अमाथि (अनाशि) कर्मणि लुङ् ।।५ ।। अनुरहसि एकान्ते क्रीडति क्रीडनं कुर्वति कृष्णे। कालियफणानामुपरि नृत्यस्य यत् सदः सभा तस्मिन् यमुनया अर्पितास्ताला यस्मै,

---

* 'प्रभाती' प्रभृतिशैल्या बहुभिः प्रकारैरस्या गानम्- 'ठुमुक चलत रामचंद्र बाजत पैजनियाँ' इत्यादिवत्।

कालियदमनसमये तटपाषाणशिलासु यो जलस्यास्फालनशब्दः तद्धि नृत्यसमये हरिप्रियया यमुनया तालदानं कृतमित्याशयः।।६।। दुर्मदानां मदस्य मीलनाय मुद्रणाय (लोपाय), निजप्रणस्व (यदा यदा धर्मग्लानये दुष्टा विजृम्भन्ते तदाहं धर्मरक्षां करोमीति) रक्षणाय तथा कटूनां (लोकाऽहितकारिणां नृपाणाम्) कीलनाय दमनाय करधृतकरवाले कल्किनि कल्किरूपधारिणि नन्दगोपबाले।।८।।

## देशमल्लार-रागेण

**जय जय गणनायक वरदायक!**

**जय जय. ।।१।।**

**दुःखहरण सुखकरण गणाधिप, जय जय सिद्धिविधायक।।**

**जय. जय.।।२।।**

**प्रथमनमस्कृत सकलसुरैरपि शरणापन्नसहायक।।**

**जय जय.।।३।।**

**लम्बोदर शिखिवाहनसोदर! निजजनशुभपरिचायक।।**

**जय जय.।।४।।**

**सिन्धुरवदन सदन सम्पत्तेः सिद्धिसुखामृतपायक।।**

**जय जय.।।५।।**

**एकदन्त विपदन्तविधायक विघ्नविहिंसनसायक।।**

**जय जय.।।६।।**

**मञ्जुनाथमिममाशु सनाथय, सकरुण सिद्धविनायक।।**

**जय जय.।।७।।**

शिखिवाहनस्य स्वामिकार्तिकेयस्य सहोदरभ्रातः! निज (भक्त) जनेभ्यः शुभपरिचयदायक! सिन्धुर (गज) वदन! सिद्धिनाम्न्याः प्रियतमायाः सुखरूपस्यामृतस्य पायक! विघ्नानां विहिंसने दूरीकरणे सायक बाणसदृश!।

## दादरा

**मम दैन्यं न जानासि नाथ किमु मुहुरावेदये।**
**पराधीन्यं न जानासि नाथ किमु मुहुरावेदये।।१।।**
**भवत्पदाब्जमुपादेयमस्ति भक्तानाम्।**
**न किंचिदन्यदितो रोचतेऽनुरक्तानाम्।।**
**क्षयिष्णु नाकसुखं भाति बुद्धिरिक्तानाम्।**
**त्वमेव दिव्यनिधिः स्नेहरसासिक्तानाम्।।**
**अयि कुत्राधुना यासि नाथ! किमु मुहुरावे.।।२।।**

अजामिलादिमहापापिनो दिवं याताः।
त्वया प्रभूतदयासागरेण निध्याताः।।
इतः परेऽपि किमन्ये प्रभो! न विख्याताः।
तवेह ये करुणापात्रतामुपायाताः।।
अपि मामेव हातासि नाथ! किमु मुहुरावे.।।३।।
भ्रमामि भूरि भृतो भावनाभिमानेऽहम्।
न जातु मोदमये त्वद्गुणानुगानेऽहम्।।
भवन्तमेव विभो रक्षकं विजानेऽहम्।
ऋते भवन्तमवन्तं परं न जानेऽहम्।।
वद किं मे विधातासि नाथ? किमु मुहुरावेद.।।४।।
भवन्निकेतमहं नाथ समागच्छामि।
पदाम्बुजस्य तले मस्तकं नियच्छामि।।
कृपाकटाक्षलवं नाथ किंचिदिच्छामि।
कदा लभेय तमित्याकुलं विपृच्छामि।।
शृणु वाक्यानि मे मञ्जुनाथ! किमु मुहुरावे.।।५।।

परस्य आधीन्यं अधीनतां [न जानासि] वारं वारं किम्-निवेदयामि। त्वया निध्याताः विलोकिताः तव ये दयापात्रतामुपायाताः, ईदृशाः किम् एभ्यः अजामिलादिभ्यः अन्ये न विख्याताः? अपितु बहवः। हे नाथ! किं मामेव हातासि त्यक्तासि (त्यक्ष्यसि, भविष्यति लुट्)? भावनायाः अभिमाने भृतः भ्रमामि। त्वद्गुणगाने मोदं न अये न प्राप्नोमि। परमेवं मम स्पष्टे दोषेऽपि भवन्तमेव रक्षकं जानामि। भवन्तम् ऋते (विना) परं अन्यं अवन्तं रक्षन्तम् (रक्षकम्) न जाने। हे नाथ! मे किं विधातासि कर्तासि (करिष्यसि), वद।।४।। निगच्छामि स्थापयामि। तं (कृपालवम्) कदा लभेय (प्राप्नुयाम्) इति आकुलं यथा तथा पृच्छामि।।५।।

# लावनी

## रासलीलायां मदनविजयः

जयति जगदानन्दनकारी। माधवो मनसिजमदहारी।।
गोपिकाजनजीवनधारी। सकलनिजभक्तभीतिहारी।।
निखिलजगदालम्बनकारी। जयति हरिरुन्मदपरिहारी।।१।।
जयति जगदानन्दनकारी। माधवो मनसिजमदहारी।।

दो.- व्रजवामाकामानसौ पूरयितुं विजहार।
तदिह दिव्ययमुनातटे रन्तुं मनश्चकार।।
कारणं विना प्रणयकारी। माधवो मनसि.।।२।।

शरदि वियदासीदतिविमलम्। चकाशे शशधररुचिरमलम्।।
कुमुदकरमुकुलितनवकमलम्। लसति कालिन्दीकूलमलम्।।

दो.- शशधरकरनिकरैरियं रजनी शुशुभे भूरि।
परितः प्रमदभरैरिदं सकलं भुवनमपूरि।।
पूरितः प्रमदैर्गिरिधारी। माधवो.।।३।।

गोपिकाकामान् पूरयितुम्। मनोभवदर्पं दूरयितुम्।।
रसे हृदयानि विनोदयितुम्। वेणुमारेभे वादयितुम्।।

दो.- मञ्जुमुरलिकानादमिममुपगतमात्मगृहेषु।
संनिशम्य गोपीगणो गतवान् वनकुञ्जेषु।।
येषु रेमे स मनोहारी। माधवो.।।४।।

इह हि गोपीषु सपरिहासम्। ततो व्यातेने स हि रासम्।।
विदित्वा मनसिजमदवासम्। तिरोऽभूत्सोऽयं सविलासम्।।

दो.- हरिमवीक्ष्य वामा इमाः कामाकुलमनसो हि।
तरुवीथीषु विचिन्वते दर्पो दूरमरोहि।।
मोहितः कुसुमचापधारी। माधवो.।।५।।

तदनु हरिविरहाकुलहृदया। दृगम्बुजपूरितबाष्पचया।।
वधूततिरुज्झितहरिविचया। प्रतेपे निहितहरिप्रणया।।

दो.- हरिचरितानुकरणपरा भृशमनुरागभरेण।
व्रजवनिता दयितानुगां जगुः कीर्तिमचिरेण।।
येन हरिरुदयति भयहारी। माधवो.।।६।।

अहह निजभक्तदयाशाली। आविरासीदिह वनमाली।।
प्रसन्ना रेमे प्रमदाली। पुलककुलकलितगण्डपाली।।

दो.- मनसिजमदमर्द्दनमिमं मुररिपुमयसि न केन।
रात्रिंदिवमिममनुभजेर्मञ्जुनाथ हृदयेन।।
येन स हि दुष्कृतविनिवारी। माधवो.।।७।।

रासलीलाव्याजेन स्मरस्य गर्वो योऽपकृतस्तत्कथा भागवतस्थानुसंधेया। निखिलस्य जगतः आलम्बनकारी आश्रयदाता। उन्मदान् जनान् परिहरति दमयति तच्छीलः। अनेन गर्वितस्य कामस्य अग्रे भावी पराजयः सूच्यते।।१।। निष्कारणं स्वार्थं विना प्रणयकारी।।२।। रासलीलासमये विरोधिनः कामस्य पूर्णोद्दीपनसामग्री शरदाविर्भावादिकं वर्ण्यते- अमलं यथा तथा शशधरस्य रुचिः कान्तिश्चकाशे। कुमुदस्य चन्द्रस्य करैर्मुकुलितानि नवकमलानि यस्मिन्नीदृशं कालिन्दीकूलम् अलं यथा तथा लसति। प्रमदो हर्षः।।३।। रसे आत्मलीलारसे भक्तानां हृदयानि विनोदयितुं सुखयितुम्। अनेन। भगवदवतारस्य भक्तोद्धारः प्रयोजनं सूचितम्।।४।। व्यातेने चकार। राससमये प्रणयासक्तं हरिमनुमाय मनसिजस्य मदनिवासो गर्वोदयो जातः, तं विदित्वा हरिस्तिरोऽभूत् अन्तर्हितोऽभवत्। तरुवीथीषु वामाः स्त्रियः हरिं विचिन्वते। दर्पः दूरम् अरोहि, स्थापितः, गर्वो दूरीकृत इत्यर्थः। रोहयतेः कर्मणि लुङ्। एतं हरेः प्रभावं दृष्ट्वा कुसुमचापधारी कामः मोहितः।।५।। उज्झितः त्यक्तः हरेर्विचयः अन्वेषणम् यया सा, हरिप्रणयासक्ता वधूततिः (गोपीमण्डली) प्रतेपे, किमित्यस्माभिर्गर्वो विहित इत्यनुतापं चक्रे। दयितस्य श्रीकृष्णस्य अनुगतां तत्सम्बन्धिनीम् कीर्तिं जगुः (भगवद्गुणगानं चक्रुः)।।६।। प्रमदानाम् आलिः पङ्क्तिः। केन न अयसि किमिति शरणं न गच्छसि? हे मञ्जुनाथ! इमं श्रीकृष्णं हृदयेन अनुभजेः, स्मर, सेवस्व।।७।।

## नाटकीयगीतिः

**नटवर गिरिधर जगदभिराम मामपि तारयस्व हे।। नटवर.।।**

**शारदशीतकिरणसुन्दरमुख**

**नयनयुगलजनितानतजनसुख।**

**चरणशरणगतभक्तदुरितमिह वारयस्व हे।। नटवर.।।**

**प्राणाधार मुनिनुतचार जनिसुखसार**

**कलिमलहार हृतभूभार गुणकूपार मङ्गलकार।**

**दुरितकृदपि तव सेवक इत्यवधारयस्व हे।। नटवर.।।२।।**

शरत्कालिकः शीतकिरणः चन्द्रः, तद्वत् सुन्दरमुख! नयनयुगलेन जनितं प्रणतानां जनानां सुखं येन (कृष्णेन) तत्सम्बोधनम्।। मुनिभिः नुतः स्तुतः चारः चरितं यस्य तत्सम्बुद्धौ। जनेः जन्मनः सुखस्य सारभूत! हृतो भूमेर्भारो येन। गुणानां कूपार सागर!।।

## वैवाहिकगीतिवत्*

**जयति नवरासविहारी। अहो भक्तजनदुरितनिवारी।।**

**असुरनिकरपरिपीड्यमानवसुधाभरहारी रे।। जयति नव.।।१।।**

**बलसूदनमदनिदमनकारी। कालियसर्पदर्पपरिहारी।।**

**सुरपतिपीडितनिजजनपालनगिरिवरधारी रे।। जयति नव.।।२।।**

* 'कृष्ण कूं गावैं गारी।' हाँ सखी बरसानेवारी।। इति गीतिवत्।

सुरभितनववनमालाधारी। ललितलुलितनवकुन्तलभारी।।
स्मरशरपरवशहृदयनवव्रजनार्यभिसारी रे।। जयति नव.।।३।।
यमुनाविपुलपुलिनसंचारी। नानाविधनवकौतुककारी।।
चरणकमलमकरन्दमञ्जुमथुरावनचारी रे।। जयति नव.।।४।।

बलसूदनस्य इन्द्रस्य मददमनकारी। सुरपतिना इन्द्रेण पीडितानां निजजनानां पालनार्थं गिरिवरस्य धारकः।।२।। विलुलितः मृदुः कुन्तल (केश) भारो यस्य।।३।। मकरन्देन मञ्जुनि मनोहरे मथुरावने मधुवने चरति तच्छीलः। 'मञ्जु-मथुरा' आभ्यां कर्तुर्नाममुद्रापि।।४।।

## देशमल्लाररागेण

जय जय नन्दतनय करुणामय। जय जय.।।
निजजनदुरितनिकरपरिभञ्जन! भवभयमाशु विनाशय।।१।।
यमुनाकूलकदम्बविलम्बितहिन्दोलनमुदिताशय।।२।।
व्रजवनितावृतगोपकिशोरीभूषितललितलतालय।।३।।
सरसरसितजलदालिगलितजलबिन्दुजनितमदनोदय।।४।।
चपलाचलितचकितनववनितालिङ्गनसंजनिताभय।।५।।
तव चरणाहितनिखिलमनोरथमञ्जुनाथमपि मानय।।६।।

कदम्बवृक्षे लम्बितेन हिन्दोलनेन मुदिताशय प्रसन्नचित्त।।२।। गोपकिशोर्या श्रीराधया भूषितः लतालयः कुञ्जगृहं यस्य तत्सम्बुद्धौ।।३।। सरसं रसितं गर्जितं यस्याः, ईदृश्याः जलदाल्याः मेघमालायाः गलितैर्जलबिन्दुभिर्जनितः कामोदयो यस्य।।४।। चपलायाः विद्युतः चलनेन चकितानां वनितानाम् आलिङ्गने संजनितम् अभयं येन।।५।।

## नाटकीयगीतिः

जय जय जगदीश मुरारे! जय करुणाकर कंसारे।।
भवता कलिता नरलीला। वसुधाभरविशमनशीला।
चिरसदय सतामुद्धारे। ।। जय जय.।।१।।
व्रजगोपवधूष्वविकारम्। रासं कृतवानसि सारम्।
अयि जितदुर्मद दनुजारे! ।। जय जय.।।२।।
स्वामिन् न च याचे नाकम्। दिव्याभिस्तनुभिः साकम्।
मम शरणं भव संसारे। ।। जय. जय०।।३।।

वसुधाभारस्य दूरीकरणशीला नरलीला भवता कलिता कृता। अतएव सताम् उद्धारे चिरकालात्सदय!।।१।। गोपवधूषु अविकारं मदनविकाररहितं यथा स्यात् तथा। जिताः दुर्मदाः मत्ताः

कंसादयो येन तत्सम्बुद्धौ।।२।। नाकं स्वर्गम्। दिव्याभिः तनुभिः अमरयोनिभिः साकं सह, अर्थात् देवेषु जन्मापि न याचे।।३।।

## नाटकीयगीतिः

जयति दुरितहारी लसद्गिरिधारी। जयति.।।

मञ्जुवदन कुञ्जसदन कञ्चचरण रञ्जयन् जनम्।

जयति दुरितहारी लसद् गिरिधारी।।१।।

त्वयाद्य हर्षिताः स्वसेवकाः कृताः।

खलास्तु धर्षिता मदिताश्च देवताः।।२।।

जय जय देव।

लोचनचन्दिर कौशलमन्दिर मन्मथसुन्दर नीतिनिधे।

जय जय भयहर धर्मधुरन्धर करुणाकर कृतविबुधविधे।

विबुधेश! शुभवेष!! मृदुकेश!!! जयति दुरितहारी।।३।।

अयि कंसनिकन्दन निकटमेहि।

तव करुणादृशमिह मयि निधेहि।।

गोपवधूचेतोहारी। जयति दुरितहारी लसद्गिरिधारी।।४।।

कुञ्जः सदनं विहारगृहं यस्य तत्सम्बुद्धौ।।१।। मदिताः हर्षिताः कृताः।।२।। कृताः विबुधानां देवानां विधयः (रक्षाकार्याणि) येन तत्सम्बुद्धौ।।३।।

## मरुप्रसिद्ध 'माँड' रागेण

जय जय राधिकापते!

जय नटनागर सौभगसागर हे रमापते।।

दो.- योजितयोगसमाधयो मुनयो यामुपयान्ति।

त्वद्भक्तास्त्वत्सेवया तां पदवीमनुयान्ति।। जय.।।१।।

कण्टकसंकुलमपि यदा काननमिदमुपयासि।

मम हृदयावनिमिह पुनर्नागर! किमिति जहासि।। जय.।।२।।

दृप्यत्सुरपतिमदभरं हृतवानसि रभसेन।

त्वं शरणं करुणानिधे। कलितोऽनेन जनेन।। जय.।।३।।

**कालियफणधरशिरसि यद्वितरसि लयसंचारि।**
**तदिह चरणसरसीरुहं शरणं दुरितनिवारि।। जय.।।४।।**

यदा कण्टकाकीर्णं वनमेव अटसि तदा कोमलां हृदयभूमिं किमिति जहासि त्यजसि इति चातुर्यसूचकेन नागरपदेनाक्षिप्यते।।२।। 'लय' पूर्वकं संचरति तच्छीलम्। दुरितं निवारयति तच्छीलं च।।४।।

## उर्दूभाषाचत्वरः

### ('गजल')

### (१)

**नन्दनन्दन हे मुकुन्द मनोऽरविन्दमुपेहि मे।**
**एतदभ्युदितानुरागमिलन्मरन्दमवेहि मे।।१।।**
**कण्टकाकुलितानि यासि वनानि गोपरिचारणे।**
**कंजलोचन कोमलं क्षणमेव मानसमेहि मे।।२।।**
**घूर्णमानमनारतं धनदुर्मदेषु जनेष्वलम्।**
**मानसं विमनायते बत लालसालवलेहि मे।।३।।**
**मन्यसे करपल्लवं कमलालयाकरकीलितम्।**
**त्वत्पदाम्बुजमेव मौलितटे ततो विनिधेहि मे।।४।।**
**आगमेषु च शासनेषु मतान्तरेषु निरन्तरम्।**
**मोहितोऽस्मि परिभ्रमन्नधुना समक्षमुदेहि मे।।५।।**
**मायया परिमुह्य सम्प्रति संततं विचराम्यहम्।**
**सान्त्वनं तु दयावतार दयादृशैव विधेहि मे।।६।।**
**मञ्जुनाथनिवेदनं क्षणमात्रमेव निशम्यताम्।**
**किंचिदञ्चितलोचनं करुणादृशं तव देहि मे।।७।।**

मम मनोरूपम् अरविन्दम् उपेहि, कमलमेतदासनरूपेण ते ददामीत्यर्थः। एतत् मनः-कमलम् अभ्युदितो योऽनुरागः स एव मिलन् मकरन्दो यस्मिन् तादृशम् अवेहि जानीहि। त्वत्प्रेम्णा समकरन्दमिदं जानीहि।।१।। यदा कण्टकयुक्तानि वनानि यासि तदा कोमलं मे मानसं क्षणकालार्थमेव समागच्छ।।२।। घूर्णमानं भ्रमत्। लालसालवं लेढि आस्वादयति तच्छीलम्। सदा लालसाव्याकुलमित्यर्थः।।३।। करपल्लवं लक्ष्म्याः करेण अवरुद्धं मन्यसे तर्हि मे मस्तके ते पदकमलमेव निधेहि।।४।। आगमेषु वेदादिषु, शासनेषु वेदान्तादिशास्त्रेषु, मतान्तरेषु सम्प्रदायेषु। उदेहि उत्+आ+इहि।।५।। किंचित् अञ्चितलोचनं (प्रहितनयनं यथा स्यात् तथा)।।७।।

( २ )

भगवन्! दयादृगेषा मयि दीयतां दयालो!
अधुनावहेलना मे न विधीयतां दयालो।।१।।
सुकृतीति को न पायात्पुरुषं सुरोऽपरोऽपि।
अयमद्य पापकारी परिचीयतां दयालो।।२।।
करितो न पीनकायो गिरितो गुरुर्न चाहम्।
दुरितोपरोधतो मे न निलीयतां दयालो।।३।।
कति तारिता भवेयुर्भवतापराधिनोऽलम्।
अपि दीनदुष्कृतोऽयं न विहीयतां दयालो।।४।।
विषयाटवीषु बाढं भ्रमितोऽतिदुःखितोऽहम्।
अयि नाथ! वेदना मे व्यपनीयतां दयालो।।५।।
अहमस्मि सार्वभौमो निखिलाघकारकाणाम्।
भवताद्य भूरि भूमन्नवधीयतां दयालो।।६।।
भ्रमता भृशं भवेऽस्मिन्नयि नाथ! वीक्षितोऽसि।
अधुना तु मे समीपान्न निलीयतां दयालो।।७।।
कृपया ममावनाय व्यवसीयतामुताहो।
करुणार्णवेति नाम व्यपनीयतां दयालो।।८।।
निगमैस्तवावबोधे कियदङ्ग गीयते स्म।
अयि मञ्जुनाथवाचा कति गीयतां दयालो।।९।।

एषा सुप्रसिद्धा ते दयादृक् मयि दीयताम्।।१।। अपरः त्वदन्यः कः सुरः अपि 'सुकृती' (अयं पुण्यवान्) इति विचार्य पुरुषं न पायात्? अपितु पुण्यवन्तं सर्वं एव देवगणो रक्षेत् परं हे दयालो! अयं मादृशः पापकारी अद्य परिचीयताम्। पुण्यवतामुद्धारस्तु कृत एव, किंतु अद्य अस्य पापिनोऽपि परिचयः प्राप्यताम्।।२।। करितः गजेन्द्रात् पीनशरीरो नास्मि। गिरितः गोवर्द्धनपर्वताद् गुरुश्च नाहम्। अतएव मे पापोपरोधकारणात् न निलीयताम्।।३।। विहीयतां त्यज्यताम्।।४।। भूमन् पृथिवीनाथ!।।६।। मम रक्षणाय व्यवसीयतां निश्चयः क्रियताम्, उताहो आहोस्वित् करुणार्णवेति दयासागरेति नाम दूरीक्रियताम्।।८।। तव बोधार्थं निगमैर्वेदादिभिः कियद् गीतम्।।९।।

( ३ )

व्रजराज गोकुलेन्दो जय कीर्तिजादृगिन्दो!।
परिपाहि दीनलोकानपि सर्वसौख्यसिन्धो।।१।।

भवदाश्रयं दधाना वयमद्य मोदमानाः।
करुणावलोकलेशं वितराशु दीनबन्धो।।२।।
किमु सर्वसंकटेभ्यो यमुनातटे तदानीम्।
व्रजवासिनोऽविता नो? वद दैत्यवृन्दकन्दो।।३।।
वसुधासुधानिधीशे करुणामहोदधीशे।
त्वयि को न वानुरज्येद् गुणरम्यरत्नसिन्धो।।४।।
तव माययाधिरूढो मूढो भ्रमामि कामम्।
अधरीकरोषि किं मामपि विश्ववृत्तविन्दो।।५।।
सुदिनं समीयतां मे बहुभाग्यमीयतां मे।
भव लोचनातिथिस्त्वं व्रजभूमिभालविन्दो!।।६।।
विजहासि लोकलोभाद्धरिपादपद्मशोभाम्।
अयि मञ्जुनाथ धिक् त्वामपयाहि ब्रह्मबन्धो।।७।।

कीर्तिजायाः राधिकायाः (राधामातुः कीर्तिरिति नाम) दृशोः इन्दुरूप!।।१।। व्रजवासिनः न अविताः (रक्षिताः) इति काकुः। अपि त्ववश्यं रक्षिताः। दैत्यवृन्दानां कन्दो शोषक!।।३।। वसुधायाः सुधानिधीशे चन्द्रे, करुणायाः महोदधीशे महासागरे त्वयि।।४।। विश्वस्य वृत्तान्तं विन्दति (प्राप्नोति, जानाति) तत्सम्बुद्धौ, हे अन्तर्यामिन् मां किम् अधरीकरोषि धिक्करोषि।।५।। मम सुदिनं समीयतां प्राप्नोतु, महाभाग्यम् ईयताम् आगच्छतु ('ईङ्' गतौ)। हे व्रजभूमेर्भालबिन्दु (तिलक)-सदृश! त्वं लोचनातिथिर्भव। तव लोचनातिथित्वं मम सुदिनप्राप्तिः, महाभाग्यं चेत्याशयः।।६।। हे ब्रह्मबन्धो ब्राह्मणाधम! अपयाहि दूरं गच्छ।।७।।

(४)

अये पद्मेऽङ्घ्रिपद्मे मे मनः स्यात्।
भवत्पादाग्रलग्नोऽयं जनः स्यात्।।१।।
त्वदग्रे दृश्यते देवोऽपि याचन्।
कियत्कीटायितोऽयं निर्धनः स्यात्।।२।।
कथं विन्देय पद्मे! ते प्रसादम्।
न चन्द्रं लब्धुमीशो वामनः स्यात्।।३।।
न वित्तैः शक्नुते शक्रोऽपि लब्धुम्।
कुतस्तोषाय दीनोऽकिंचनः स्यात्।।४।।

कृपादृक्कोणतस्तुष्येन्मनो मे।
न किं वा चातकप्रीत्यै घनः स्यात्।।५।।
भजेद् बीजं स्वहृत्पद्मान्तरे यः।
स वै पद्मालये! पद्मासनः स्यात्।।६।।
कथं वै मञ्जुनाथं नेक्षसे त्वम्?
दयादृष्टिं विना सिद्धिर्न नः स्यात्।।७।।

हे पद्मे लक्ष्मि! तव अङ्घ्रिपद्मे चरणकमले मे मनः स्यात्।।१।।
भवत्याः अग्रे देवोऽपि याचमानो दृश्यते तर्हि मादृशः कीटायितः कियत् (क्रियाविशेषणम्) स्यात्।।२।।
अकिंचनः सर्वथा निर्धनः।।४।। यः जनः भवद्बीजम् श्रीम् इति स्वहृदयकमलान्तरे भजेत् जपेत् स पद्मासनः ब्रह्मा भवेत्।।६।।

(५)

नन्दसूनो! किं विधूनोष्यद्य माम्।
दीनमेनं मुञ्चसे हा किंतमाम्।।१।।
श्रीपतेस्ते का भवेद्दीने दया।
सर्वदोत्सङ्गे निधत्से यद् रमाम्।।२।।
राजभोगान् न्यस्य शाकैः प्रीयसे।
को न विन्ते ते कृपां भिन्नक्रमाम्।।३।।
किं विपृच्छस्यद्य मे वाचालताम्।
कल्पये वाचं विदां वाचंयमाम्।।४।।
त्वन्मुखाग्रे दृश्यते दीनः शशी।
चेतसा कश्चिन्तयेच्चन्द्रोपमाम् ।।५।।
तावकानां त्वत्स्मृतौ या जायते।
मूर्च्छनां मन्येय तां संवित्समाम्।।६।।
मञ्जुनाथप्रार्थने चेन्नेक्षसे।
निःस्पृहो याचामि कस्माद् वा क्षमाम्।।७।।

विधूनोषि दुःखं ददासीत्याशयः। किंतमाम् किमर्थम्।।१।। निधत्से धारयसि।।२।। दुर्योधनस्य राजभोगान् अपास्य विदुरस्य शाकैः प्रसन्नो भवसि, अतएव ते कृपां लोकतो भिन्नमार्गां को न विन्ते विचारयति।।३।। अद्य मे वाचालतां किं पृच्छसि, विदुषां वाणीं वाचंयमां भाषणाद्विरताम्

कुर्वे।।४।। चन्द्रस्य उपमाम् (सादृश्यम्)।।५।। त्वदीयानां भक्तानां विरहावस्थायां तव स्मरणे या मूर्च्छा भवति तां चेतना-सदृशीं जाने।।६।। प्रार्थनायामपि त्वं न पश्यसि, तर्हि अहमपि मानवशात्तटस्थो भवामि। कस्मात् कारणात् त्वत्तः क्षमां याचे।।७।।

(६)

भो विभो दयादृगियं दीनदुर्बले देया।
वेदना ममाद्य घना देव दूरमाधेया।।१।।
साम्प्रतं विधो वामे रक्षकोऽस्ति को वा मे?
याचना मदीयेयं मानसे न किं नेया?।।२।।
दोषमेक्ष्य देवा मे दूरतोऽद्य धावन्ते।
दीननाथ हन्त दया किं त्वयापि नोपेया?।।३।।
त्वत्कृपामुपाश्रयतां चेद् गुणा गवेष्यन्ते।
दीनबन्धुता तव किं नाथ मादृशैर्गेया।।४।।
शीघ्रता प्रसिद्धा ते दीनदुःखदाहार्थम्।
मन्दता मदर्थमहो नाथ नाद्य निर्मेया।।५।।
भ्रामयेदजस्त्रमियं सर्वतोऽद्य संसारे।
दैवदुर्लिपिर्निहिता मामकीनभाले या।।६।।
द्रोहमोहमानमदा मामहो विबाधन्ते।
एकतोऽयमेकोऽहम्, सा च वाहिनी जेया।।७।।
मायिकप्रपञ्चेऽस्मिन् नाथ नद्धनेत्रोऽहम्।
तावकी कया विधया रूपमाधुरी पेया।।८।।
दृश्यते दया यदि नो दीनहीनलोकेऽस्मिन्।
विश्रुता तदा भवता दीनबन्धुता हेया।।९।।
कर्ममोहितोऽद्य भृशं कीदृशं नु नृत्यामि।
मञ्जुनाथनाट्येऽस्मिन् दीननाथ दृग् देया।।१०।।

घना निबिडा मे वेदना दूरमाधेया दूरीकर्तव्या।।१।। विधौ विधातरि वामे प्रतिकूले।।२।। मम दोषम् आ ईक्ष्य। किं त्वयापि दया न उपेया अवलम्बितव्या? अपि त्ववश्यं कर्तव्या।।३।। तव कृपाम् अवलम्बमानानां दीनानां यदि गुणाः अन्विष्यन्ते तर्हि तव दीनबन्धुता कस्माद् गेया।।४।। दुःखदाहार्थं दुःखानां नाशार्थम्। मन्दता न निर्मेया कर्तव्या।।५।। एकस्मिन् पक्षे एकः अहम्, अग्रतस्तु द्रोहमोहादीनां सेना जेतव्या।।७।। मायाप्रपञ्चे निरुद्धनेत्रः अहम्, आभ्यां नेत्राभ्यां तव रूपमाधुर्यं केन

विधिना साभिलाषमास्वाद्यम्।।८।। कर्मवशाद् नानाप्रकारैश्चेष्टां करोमि अस्मिन् नाट्ये कृपादृष्टिः कर्तव्या।।१०।।

(७)

कीर्तये कालिन्दि मातस्त्वामहम्।
शङ्कितः शरणं पुरः प्रायामहम्।।१।।
त्वं हि चेदवधीरयस्ययि देवि माम्।
कं परं शरणं सुरं यायामहम्।।२।।
त्वत्तरङ्गैः सङ्गमङ्गे चेद् दहे।
भूतिमत्त्रिदिवावनौ भायामहम्।।३।।
निर्मलं यदि ते जलं मौलौ वहे।
संतरेयं त्वत्पतेर्मायामहम्।।४।।
पातक! प्रोत्सर्प दूरम्, नैषि चेत्।
मज्जये कालिन्दिधारायामहम्।।५।।
गोपने यमुने! न मे समुपेक्ष्यताम्।
पीडितः पतितोऽस्मि मृत्स्नायामहम्।।६।।
मानुमासीर्मञ्जुनाथं निर्बलम्।
त्वत्तटे प्रायां तरुच्छायामहम्।।७।।

(पापैः) शङ्कितः सन् त्वां शरणं प्रायाम् आयासिषम् (आगतः)।।१।। चेत् अवधीरयसि तिरस्करोषि।।२।। यदि तव तरङ्गैः अङ्गे संगमं प्राप्नोमि तर्हि वैभववत्यां देवभूमौ स्वर्गे अहं भायां शोभितो भवेयम्।।३।। त्वत्पतेः श्रीकृष्णस्य।।४।। हे पातक! मत्सकाशाद् दूरमपसर्प! यदि दूरं न एषि (गच्छसि) तर्हि त्वां कालिन्दीधारायां मज्जयामि ब्रोडयामि।।५।। गोपने रक्षणे न उपेक्षा क्रियताम्। मृत्स्नायां मृत्तिकायाम्।।६।। निर्बलं मा अनुमासीः मा जानीहि। तव तटे तरूणां छायाम् अहं प्रायाम् आगमम्। त्वत्तटागमनेन निर्बलता गता, अहमात्मबलसम्पन्नो जातः।।७।।

(८)

भूतेश भवत्पादयुगं भूरि भजेयम्।
हे भर्ग! भवन्मूर्तिमबन्धाय यजेयम्।।१।।
विन्दामि महादुःखमहं मोहमहाब्धौ।
आख्याहि दयानीरनिधे! कुत्र व्रजेयम्।।२।।

दीयेत दयादृष्टिलवो मह्यमयं चेत्।
कुर्वीत कथं नाम मनोमोहमजेयम्।।३।।
पुत्रादिपरीवारजनैर्वित्तमुपात्तम्।
हा हन्त! मनोदुःखमिदं कं विभजेयम्।।४।।
दीनेषु दयावश्यमपश्यं न सुरं तम्।
हे नाथ भवातङ्कविभङ्गाय भजे यम्।।५।।
त्वन्मौलिगता देवधुनी पापमपोहेत्।
चेतः परितापं व्यपनीयान्नगजेयम्।।६।।
विन्दामि पदाम्भोजयुगं ते शरणं चेत्।
मन्ये न तदा देव! मनोमोहमजेयम्।।७।।
त्वं देहि दयादृष्टिमये मञ्जुलनाथे।
वाञ्छाद्य महेशान मनाङ् मानसजेयम्।।८।।

अबन्धाय मोक्षाय भवन्मूर्तिं यजेयं पूजयेयम्।।१।। इयम् अजा माया मनोमोहं कथं कुर्वीत।।३।। परिवारजैर्मम धनम् उपात्तं विभक्तम्। किंतु इदं मनसो दुःखं कस्मै विभक्तं कुर्याम्?।।४।। दयाया वश्यं वशीभूतं तं सुरं न अपश्यं यं भवदुःखदूरीकरणाय अहं भजे।।५।। इयं नगजा पार्वती चित्तस्य संतापं व्यपनीयात् दूरीक्रियात् इति आशिष्यते।।६।। मनसो मोहं मूढताम् अजेयं न जेतुं शक्यम् न मन्ये, अपि तु मया स जेयो भवेत्।।७।। मानसजा इयं वाञ्छा।।८।।

(९)

भारती मे भवाय बोभूयात्।
मानसे मे सुखानि सा सूयात्।।१।।
शेमुषीं मे विशोध्य विज्ञानैः।
मानसं मे विमोहमालूयात्।।२।।
किं विशङ्कां करोषि चेतो मे!
त्वामियं देवता गिरां पूयात्।।३।।
लालसासौ ममाद्य चित्तस्था।
शारदा मे प्रमोदमाहूयात्।।४।।
शारदासौ सरोजपीठस्था।
मानसं मे प्रमादमाधूयात्।।५।।

त्वं कृपां चेत् करोषि मातर्मे।
नो कृतान्ताद् बिभेमि सासूयात्।।६।।
मौनमेया न मञ्जुनाथेऽस्मिन्।
गीतिभिस्त्वां परस्तु कः स्तूयात्।।७।।

भारती सरस्वती। भवाय कल्याणाय।।१।। शेमुषीं बुद्धिम्। आ लूयात् छिद्यात् (इति आशीः)।।२।। गिरां देवता सरस्वती पूयात् पवित्रं क्रियात् इत्याशीः।।३।। प्रमोदम् आहूयात् (प्रमोदस्य आह्वानं क्रियात्), प्रमोदमानयेदित्याशयः।।४।। सासूयात् असूयासहितात् यमात्।।६।। मौनं न आ+इयाः, मा गच्छेः।।७।।

(१०)

दया तवेह मामये मुकुन्द! नन्दयेन्न किम्?
पदारविन्दमेतकन्मनो मिलिन्दयेन्न किम्।।१।।
कथं तरामि यन्त्रणां दुरन्तचिन्तयानया।
निपीडितस्य मोहनो मनोऽभिनन्दयेन्न किम्।।२।।
भुवोऽतिभारमुद्धरन् जहार यः सदापदम्।
विमोहमेष माययाधिकं निकन्दयेन्न किम्।।३।।
भृशं भ्रमामि वासनावशोऽविशोच्य दुर्नयम्।
भवद्दया तु दुर्गतेर्गतिं विमन्दयेन्न किम्।।४।।
भवान् हि तापहारको न वारको ममापदाम्।
इयं ममावधीरणा प्रभोऽद्य निन्दयेन्न किम्।।५।।
दयालवोऽपि लीलया त्वया चिकीर्ष्यतेऽपि चेत्।
अखर्वगर्वतत्परैर्नरैः प्रवन्दयेन्न किम्।।६।।
वचोऽद्य मञ्जुनाथ ते न चेत्प्ररोचते विदाम्।
चराचरेशचेतसोऽपि चारु चन्दयेन्न किम्।।७।।

अये मुकुन्द! तव दया मामिह किं न नन्दयेत्, अपि त्ववश्यमानन्दयेत्। एतकद् एतत् ते पदारविन्दं किं मां मिलिन्दं भ्रमरं न कुर्यात्? तत्करोतीति णिच्।।१।। 'यन्त्रणां कथं तरामि' अनया चिन्तया पीडितस्य मे मनः मोहनः (श्रीकृष्णः) किं न अभिनन्दयेत्?।।२।। सताम् आपदम्, सदा आपदं वा मायया अधिकीभूतं मोहं किं न निकन्दयेत् नाशयेत्।।३।। दुर्नयं दुर्नीतिम् अविशोच्य अविचार्य। दुर्गतेः गतिं मां प्रति आगमनस्य शक्तिं किं मन्दां न कुर्यात्?।।४।। तापहारकोऽपि भवान् मम आपदां वारकः निवारकः न जातः, इति इयं मम अवधीरणा तिरस्कारः किं भवन्तं लोके न निन्दितं

कुर्यात्?।।५।। त्वया चेत् लीलयैव दयाया लेशः चिकीर्ष्यते कर्तुम् इष्यते, तर्हि गर्वितनरैः तेषां द्वारा किं मां वन्दनीयं न ककुर्यात्?।।६।। ते वचः विदुषां न रोचते चेत्, तर्हि चराचरनायकस्य चेतसः अपि चित्तमपि, (कर्मत्वेनाविवक्षया षष्ठी) किं न चन्दयेत् आह्लादयेत्? अपि त्ववश्यं प्रमोदयेत्।।७।।)

**अयि चित्त! चिरेण विचिन्तयतोऽपि च चञ्चलता न गता न गता।**
**अपि नाम निरन्तरयत्नशतैस्तव निष्ठुरता न गता न गता।।१।।**
**कियदिच्छसि निर्भरशान्तिसुखं न नियच्छसि पादमथाभिमुखम्।**
**अयि गच्छसि साधुपथाद्विमुखं तव निष्क्रियता न गता न गता।।२।।**
**क्षणमेव विमुह्यसि वामदृशा, न फलं परिपश्यसि दूरदृशा।**
**विमृशामि सखे! यदि तत्त्वदृशा, तव कामुकता न गता न गता।।३।।**
**न हि साधुजनैः सह संरमसे, न फलं विमलं त्वमिहावहसे।**
**चपलाय सखे यशसे यतसे, तव दुर्मदता न गता न गता।।४।।**
**अभिनन्दसि शास्त्रगतं न मतम्, न हि विन्दसि संततमात्महितम्।**
**बत निन्दसि लोकमतं विमतम्, तव मत्सरता न गता न गता।।५।।**
**न हि दीनजनान् परितोषयसे, बहु घोषयसे निजदानरुचिम्।**
**अयि चित्त सखे तव लोलुपतानृतकीर्तिवितानगता न गता।।६।।**
**भगवद्गुणगीतिषु नाद्रियसे, ह्रियसे मधुगायकगीतिगणे।**
**जरसा विरसापि तवोत्सुकता मधुरस्वरतानगता न गता।।७।।**
**तव विस्वरगीतिमिहार्पयसे न विलोकयसे विविधान् विबुधान्।**
**अधुनापि च मञ्जुलनाथ मनाक् तव दुर्मुखता न गता न गता।।८।।**

अयि चित्त! चिरकालाद् विचारं कुर्वतः अपि तव चपलता न गता न गता (न गतेति द्विरुक्त्या निश्चयातिशयः सूच्यते। एवमग्रेऽपि)।।१।। शान्तेः सुखं तु कियद् वाञ्छसि, किंतु तदर्थम् अभिमुखं पादं न स्थापयसि, अर्थात् यत्नकरणार्थम् अग्रे न चलसि। निष्क्रियता अकर्मण्यता।।२।। वामदृशा वामलोचनया स्त्रिया क्षणे एव मुग्धो भवसि।।३।। चपलाय अस्थिराय कियत्कालं स्थायिने यशसे। दुर्मदता मत्तता।।४।। विमतं तव प्रतिकूलं लोकमतं त्वं निन्दसि। तव मात्सर्यम्।।५।। दानरुचिं दानशीलताम् घोषयसे लोकेषु प्रख्यापयसि। अनृतो मिथ्या यः कीर्तिवितानः यशः कलापः तत्सम्बन्धिनी ते लोलुपता न गता। अतियत्नेऽपि ते कृत्रिमकीर्तिलालसा न यातेत्याशयः।।६।। नाद्रियसे न आदरं करोषि। मधुरे गायकानां गीतिगणे ह्रियसे आकृष्यसे। वृद्धावस्थया विरसीकृतापि, मधुरो यः स्वरसंतानः तद्गता तव उत्सुकता उत्कण्ठा न गता।।७।। विस्वरां विरूपस्वरयुक्ताम् गीतिम् अर्पयसे निवेदयसि।।८।।

( १२ )

अये पद्मालये! मातर्दयातः पाहि दीनं माम्।
क्षणं वीक्षस्व संसारेऽद्य निस्सारे निलीनं माम्।।१।।
तवालम्बादहं बालोऽधुना लोकं सुखं मन्ये।
त्वमेवोपेक्षसे कस्मादकस्माद्धैर्यहीनं माम्।।२।।
अनन्तैर्दुःखसंवर्तैर्निकामं खिन्नचित्तोऽहम्।
दृशं सौख्यस्पृशं मातर्दिशन्ती पाह्यधीनं माम्।।३।।
न जानन्मार्गमेतं ते दुरन्तेऽस्मिन् भवेऽभ्राम्यम्।
इदानीं त्वद्दयाधारे नयागारे नवीनं माम्।।४।।
भवाब्धौ निर्भरासङ्गैस्तरङ्गैर्भ्रान्तवान् बाढम्।
न जाले पातयेर्मातर्विदित्वा मूढमीनं माम्।।५।।
नृपाः प्राप्याधिकारं ते निकारं वित्सु विन्दन्ते।
न कुर्वीथाः कृपाम्भोधे! कलौ कस्याप्यधीनं माम्।।६।।
सुसूक्ष्मं जीवने मातर्न मे पुण्यं परीक्षेथाः।
निरीक्षेथाः क्षणं मातः प्रपुष्यत्पापपीनं माम्।।७।।
अनन्तेऽस्मिन् विधानेऽहं न जाने तथ्यमीमांसाम्।
त्वमेवाख्याहि कर्तव्यं कृपाब्धे मामकीनं माम्।।८।।
न लज्जेयं भवेत् किं ते? निमज्जेन्मञ्जुनाथश्चेत्।
अये मातर्नयेथास्त्वत्पदाब्जे तावकीनं माम्।।९।।

दुःखसंवर्तैः दुःखपूरस्य उपप्लवैः। सौख्यस्पृशं सौख्यस्पर्शिनीम्, सुखदामित्यर्थः। अधीनं मां पाहि।।३।। तव मार्गं न जानन् अस्मिन् भवे संसारे अभ्रमम्। इदानीं तव दयाया आधारो यत्र ईदृशे अर्थात् त्वद्दयया प्राप्ये आगारे गृहे नवीनं मां नय। नवीनो हि मार्गं न जानीयात्, अतएव त्वमेव मां त्वत्कृपालभ्ये स्थाने प्रापयेत्याशयः।।४।। निर्भरः आसङ्गः आश्लेषो येषाम् अर्थात् अतिनिबिडैः तरङ्गैः। मां मूढं मीनं विदित्वा जाले न पातयेः।।५।। नृपाः तव लक्ष्म्याः अधिकारं प्राप्य विद्वत्सु निकारं तिरस्कारं विन्दन्ते दर्शयन्ति।।६।। मम जीवने अतिसूक्ष्ममपि पुण्यं न परीक्षेथाः। सूक्ष्मवस्तुदर्शने तव क्लेशो भवेत्। अतएव पुष्यद्भिः पीनैः पातकैः पीनं पुष्टं मां निरीक्षेथाः। तव दृष्टिदाने च ममोद्धारः।।७।। इदं कर्तव्यम्, इदं कर्तव्यम्, इति अनन्ते विधिप्रपञ्चे अहं तथ्यमीमांसां सत्यनिर्णयं न जाने। मामकीनं मदीयं कर्तव्यं त्वमेव आज्ञापय।।८।। तावकीनः त्वदीय इति ख्यातः मञ्जुनाथो यदि भवसागरे निमज्जेत् तर्हि ते लज्जा किं न भवेत्?।।९।।

( १३ )

**दोहाच्छन्दोभिरपि सेयं गीतिः प्रसिद्धा**

अये पद्मालये! मातर्दयातः पाहि दीनं माम्।
क्षणं वीक्षस्व संसारेऽद्य निस्सारे निलीनं माम्।।१।।

दो.- मुग्धेन्दीवरसुन्दरे नयने सिन्धुकुमारि!
यदि धत्से दारिद्र्यमपि तत्र न चान्तिकचारि।।
गलत्कणयाचनालीनं विजीनं पाहि दीनं माम्।।२।।
दृप्यद्धनपतिदुर्वचननिचयनचिरनिर्वेदि ।
मम मानसमिदमिन्दिरे! बत बहुतरपरिखेदि।।
त्वमेवाख्याहि पन्थानं भवारण्याध्वनीनं माम्।।३।।
तव पदसरसिजरजसि यदि मानसमिदमुपयाति।
सततमितरचिन्तनमपि प्रायः सपदि न भाति।।
अये मथुरापतेः कान्ते! त्वमन्ते पाहि दीनं माम्।।४।।

तत्र दारिद्र्यं समीपचारि समीपगतमपि न भवति। विजीनम्, क्षतावस्थं वृद्धमिति यावत्।।२।। दृश्यन्तो गर्विष्ठाः ये धनिकाः तेषां दुर्वचननिचयेन नचिरं तत्कालं वैराग्ययुक्तम्। नचिरेत्यत्र नशब्देन समासः, न तु नञ्।।३।। तर्हि इतरेषां देवधनिकादीनां चिन्तनमपि न भाति।।४।।

( १४ )

भो विभो! मम मानसे सा मञ्जुमूर्तिरुदेतु ते।
दीनदुःखनिबर्हणी या सा दया समुदेतु ते।।१।।
हन्त मे भ्रमसंततं हृदयं विषीदति संततम्।
किंचिदञ्चतु लोचनं मयि मीलिताखिलहेतु ते।।२।।
आश्रयोऽसि निराश्रयाणामुच्छ्रयोऽसि सुसम्पदाम्।
आलयोऽसि हि संविदामवदानमन्तरमेतु ते।।३।।
दुस्तरं भवसागरं समवाप्य मज्जति मानसम्।
पारमेतदुपेयतामुपयत् पदाम्बुजसेतु ते।।४।।
तारिता भवता भवेयुरजामिलप्रमुखाः सुखम्।
पातकी बत तादृशोऽहमियं दयापि बिभेतु ते।।५।।

ज्ञानमस्ति न मे, समेति न चापि कापि विचारणा।
संदधामि पदावलम्बनमंहसो जयकेतु ते।।६।।
न स्मरत्यथ नो नमस्यति नो गृणाति न सेवते।
हे दयाम्बुनिधे! तदेषा भावना न समेतु ते।।७।।
स्थानमेकमुदीर्यसे सुरभारतीसेवाजुषाम्।
मञ्जुनाथनिवेदनं बत संनिधौ समुदेतु ते।।८।।

मम मानसे सा प्रसिद्धा ते मञ्जु (मनोहर) मूर्तिः उदेतु। ते मानसे च दीनदुःखनाशिनां दया उदेतु। निबर्हणीति लेखनी-रमणीत्यादिवत्।।१।। भ्रमेण संततं व्याप्तम्। मीलिताखिलहेतु कारणापेक्षाशून्यम् (स्वाभाविकदयात एव) ते लोचनं मयि किंचित् अञ्चतु उपयातु।।२।। सम्पत्तीनां त्वम् उच्छ्रयः पराकाष्ठा असि। संविदां ज्ञानानाम् आलयः स्थानम्। ते अवदानं बलं मे अन्तरं मानसं प्राप्नोतु।।३।। उपयत् प्राप्नुवत् ते पदाम्बुजमेव सेतुर्यस्मै तद् एतद् मानसं (मम) भवसागरपारम् उपेयतां प्राप्नोतु।।४।। अंहसः पापस्य विजये केतु (ध्वज) सदृशम्।।६।। नो गृणाति (गायति गुणान्)। एष विचारोऽपि मा आगच्छतु।।७।। संस्कृतसेविनां त्वमेव एकं स्थानम् उदीर्यसे प्रोच्यसे।।८।।

(१५)

अयि व्रजराज! मुञ्चसे किं माम्?।
पदपतितं न वीक्षसे किं माम्।।१।।
अवति शिशुं दयालुरन्योऽपि।
भवपतितं निरीक्षसे किं माम्।।२।।
तव भुवने दयालुता ख्याता।
अपि दुरितैरुपेक्षसे किं माम्।।३।।
सुबहु मयास्ति वेदना सोढा।
भवगहनैः परीक्षसे किं माम्।।४।।
यदि पशवोऽपि तारिता भवता।
न यदुपतेऽवलम्बसे किं माम्।।५।।
प्रकटय मे सुमञ्जुमूर्तिं ते।
नयनसुखान्निबर्हसे किं माम्।।६।।
चरणसरोजमञ्जुलामोदैः ।
प्रमदयसे न मानसे किं माम्।।७।।

**अधमतमोऽपि मञ्जुनाथोऽयम्।**
**त्वदनुचरं न मन्यसे किं माम्।।८।।**

अन्य: मार्गे गच्छन् तटस्थोऽपि शिशुं रक्षति। मां केवलं निरीक्षसे, किमिति न त्रायसे इत्याशय:।।२।। भवगहनै: संसारजालै:।।४।। पशव: गजेन्द्र-व्रजगवीप्रभृतय:।।५।। निबर्हसे वञ्चयसि।।६।। मानसे मां किमिति न प्रमोदयसे।।७।। मां किं त्वं विदीर्णहृदयं वाञ्छसि? मम हृदयस्फोटदशा संनिहितेत्याशय:।।८।। मञ्जु: (सुन्दर:, त्वम्) नाथो यस्य, तथा च त्वत्स्वामिकोऽहं त्वद्दयायोग्य:।।९।।

## (१६)
## 'गजेन्द्रमोक्ष:'

**हे गजेन्द्रदयानिधे! गुणवारिधे! द्रुतमीयताम्।**
**विजहासि किं करुणाम्बुधे! सविधेऽद्य नाथ समीयताम्।।१।।**
**गजराज एष मनोहरे विजहार दिव्यसरोवरे।**
**सह संस्फुरत्प्रमदच्छटां करिणीघटामुपनीय ताम्।।२।।**
**करकीर्णपङ्कजरेणुभि: स करेणुभिर्विहरंश्चिरम्।**
**ह्रदमध्यमेष गतो ह्यभूदनुभूय तद्रमणीयताम्।।३।।**
**पयसीह कोऽपि दुरुद्धरो मकरोऽङ्घ्रिमस्य समाक्षिपत्।**
**अथ तौ महामकरद्विपौ दधतुर्मिथो दमनीयताम्।।४।।**
**मकरो महाप्रबलो जले स बलेन दन्तिनमाहरत्।**
**करुणां दशामुपगच्छता करिणाथ किं नु विधीयताम्?।।५।।**
**सुहृदोऽथ भीतहृदोऽद्रवन् करिणीषु किंकरणीयता।**
**अवशोऽधुना भृशगद्गदो द्विरदो दधौ भवदीयताम्।।६।।**
**हृदि चिन्तयंश्चरणोत्पलं कमलं करेण विनिक्षिपन्।**
**करुणं जुहाव जगत्पते! त्वरितेन नाथ समीयताम्।।७।।**
**अयि नाथ! यामि जलान्तरे मकरेण निर्मथितोऽन्तरे।**
**अयि हे परेश! करेण मे ह्यवलम्बनं प्रतिदीयताम्।।८।।**
**गजपुङ्गवस्य सवेदनं करुणं निशम्य निवेदनम्।**
**निजलोकतस्त्वरितोऽभ्यया द्विरदेऽवयान् दयनीयताम्।।९।।**
**अयि नाथ! सम्प्रति पश्य मां विषमामवेहि दशामिमाम्।**
**पतितस्य किं नु भवार्णवे करलम्बनं न विधीयताम्।।१०।।**

**मथितोऽस्मि वासनयाऽनया व्यथितोऽस्मि नाथ निरन्तरम्।**
**अधुना तु कंजरुचिस्पृशा करुणादृशा परिचीयताम्।।११।।**
**अयि दीनमेनमवेर्हरे! बत मञ्जुनाथशिरोऽन्तरे।**
**करपल्लवस्तु न चेत् क्षणं पदपल्लवोऽपि निधीयताम्।।१२।।**

गजेन्द्रोपरि दयायाः सागर! ईयताम् आगम्यताम्।।१।। संस्फुरन्ती प्रमदच्छटा हर्षच्छविः यस्याः तादृशीं करिणीघटां करेणुसमूहं सह संनीय।।२।। करेण शुण्डया कीर्णाः क्षिप्ताः पङ्कजपरागा याभिः। तस्य ह्रदस्य रमणीयतामनुभूय।।३।। गजस्य दमनीयः अभिभवनीयः मकरः, मकरेण दमनीयो गज इति मिथो दमनीयताम्।।४।। आहरत् आकर्षत्।।५।। किं करणीयं यासां तद्भावः किंकर्तव्यता विमूढता। भवदीयतां पूर्वजन्मनो भवदीयभक्तताम्, शरणागतिमित्यर्थः।।६।। सवेदनं वेदनासहितम्। द्विरदे गजे दयायोग्यताम् अवयान् जानन् अभ्ययाः आगतोऽभूः।।९।। करेण आलम्बनं न विधीयताम्? अपि तु अवश्यं क्रियताम्।।१०।। विषयवासनया। कंजरुचिस्पृशा कमलशोभाधारिण्या दृष्ट्या।।११।। दीनम् एनं मञ्जुनाथम् अवेः रक्षेः। शिरसः अन्तरे मस्तकस्योपरि।।१२।।

(१७)

**भूयात् प्रभोऽधुना तु दया दीनदुर्जने।**
**किं वा विलम्बसे मम सौभाग्यसर्जने।।१।।**
**नानाविधैर्न धैर्यमहो तापसंचयैः।**
**दह्ये दयानिधान भृशं भूरिभर्जने।।२।।**
**पश्याग्रतोऽयमेति यमो मां विकर्षयन्।**
**हा हन्त! याति धैर्यमिदं तीव्रतर्जने।।३।।**
**संतोषमाप्य चित्तमिदं शान्तिमेतु मे।**
**संतापितो भ्रमामि सदा सम्पदर्जने।।४।।**
**भ्राम्यामि मूढ एष महाघोरसंकटे।**
**कस्मादुपेक्षसेऽद्य ममोन्मार्गवर्जने।।५।।**
**वीक्षस्व दीन एष कियत् क्रन्दते चिरात्।**
**कस्माच्छृणोषि नाथ विपद्घोरगर्जने।।६।।**
**संतापितस्य दीनदशां किं न वीक्षसे।**
**यातासि किं प्रसादमसूनां विसर्जने?।।७।।**
**हे नाथ! मञ्जुनाथमिमं न्यक्करोषि किम्।**
**सैषोऽस्ति चक्रवर्तिसमो दुष्टदुर्जने।।८।।**

---

गो. वै. १४

दीने सत्यपि दुर्जने (मयि)।।१।। सांसारिकेऽस्मिन् संतापजनितभर्जने दह्ये दग्धो भवामि।।२।। मम उन्मार्गाद् वर्जने निवारणे कस्मात् उपेक्षां करोषि?।।५।। मम विपत्तीनां घोरं गर्जनं भवति, तस्य कोलाहले मम क्रन्दनं कस्मात् शृणुयाः इत्याशयः।।६।। मम असूनां प्राणानाम् विसर्जने निर्गमने एव किं प्रसन्नतां यातासि यास्यसि?।।७।। दुष्टे दुर्जने च लोके अयं चक्रवर्तिसदृशः (महापापी), अतएव चक्रवर्तिनस्तिरस्कारो नोचितः।।८।।

(१८)

अये कामये नाथ किंचिद्दृशं ते।
क्षणं देहि दीनेऽनुकम्पालवं ते।।१।।
अहो मे बहोः कालतो लालसेयम्।
कदाऽऽलोकयेयं पदाम्भोरुहं ते।।२।।
क्षणं वीक्ष्यतां नाथ दीना दशा मे।
धरायां विलोठामि हा सम्मुखं ते।।३।।
न किं वैद्य! संवीक्षसे रुग्णमेतम्।
वराकश्चिरादागतोऽयं गृहं ते।।४।।
चिरं चिन्तया किं तयाहं न दूये।
प्रभो! हन्ति या दीनमेनं जनं ते।।५।।
प्रभो भासि सर्वस्य चित्तान्तराले।
किमालेखये दुःखमेतच्चिरं ते।।६।।
बलं धर्मकर्मादि केषांचन स्यात्।
अलं केवलं मेऽनुकम्पाबलं ते।।७।।
यमाद् दुर्यमाद् रक्षणं दूरमास्ताम्।
प्रभो! प्रार्थयेऽहं क्षणं वीक्षणं ते।।८।।
कथं वा हरेऽहं हरे! मन्दकर्मा।
सरोजप्रभामोचनं लोचनं ते।।९।।
लभेताञ्जसा मूढचेता नु मादृक्?
लभन्ते बुधाः संविदन्ते पदं ते।।१०।।
अहं पातकी ख्यातकीर्तिर्जनानाम्।
परं किं दयाब्धेर्दयायाल्लयं ते।।११।।

प्रभुः पातकान्येक्ष्य चित्रायितोऽभूत्।
अये मञ्जुनाथ! प्रभावो ह्ययं ते।।१२।।

लालसा इयम्।।२।। हे वैद्य (हे भगवन्) एवं रुग्णं (माम्)।।४।। एतद् दु:खं ते किम् आलेखयेयं सूचयेयम् इत्याशयः। आलेखये इति णिजन्तादात्मनेपदे लट् उत्तमपुरुषैकवचनम्।।६।। दुष्करो यमः (यमनं दमनम्) यस्य तस्माद् यमात्।।८।। हे हरे! मन्दकर्मा अहं ते लोचनं कथं हरे (मदभिमुखं कथमाकर्षयेयम्)।।९।। मूढो मादृशस्ते पदम् अञ्जसा सहजम् नु किम् लभेत? नैवेत्यर्थः। बुधाः संविदन्ते तत्त्वज्ञानस्यान्ते ते पदं लभन्ते।।१०।। अहं प्रसिद्धः पातकी अस्मि, परं दयासागरस्य ते दया किं लयम् अयात् याता? अपि तु न लुप्ता।।११।। प्रभुस्ते पातकानि दृष्ट्वा चकितोऽभूत्, अयं ते प्रभावः। धन्योऽसि।।१२।।

(२९)

मानुगृह्णासि न किं पासि विभो दीनं माम्?।
किं न जानन्नपि जानासि विभो दीनं माम्।।१।।
पश्य मे दीनदशामद्य दयालो! किंचित्।
किं प्रगल्भोऽपि न पुष्णासि विभो दीनं माम्।।२।।
कर्मबन्धेन निबद्धोऽस्मि महामूढोऽहम्।
किं पुनर्मोहतो बध्नासि विभो दीनं माम्।।३।।
नावलम्बं ददसे किं विलम्बं कुरुषे।
किं न कारुण्यतो गृह्णासि विभो दीनं माम्।।४।।
हन्त संतापयुतो भूरि रमे संसारे।
किं मुधा मायया मथ्नासि विभो दीनं माम्।।५।।
कोऽसि कुत्रासि कथं लभ्यसेऽहं नो जाने।
तत्त्वमिदं किं न समाख्यासि विभो दीनं माम्।।६।।
दर्शनं नो ददसे वैषयिकैर्मोहयसे।
मूढमालक्ष्य विमुष्णासि विभो दीनं माम्।।७।।
पादमुद्राङ्कनतो मौलिमिमं मुद्रय मे।
किं विमोहेन विमृद्नासि विभो दीनं माम्।।८।।
मूर्तिमेतां मधुरां किं न हरे दर्शयसे।
दीननाथोऽपि न किं यासि विभो दीनं माम्।।९।।
ज्ञानशून्योऽपि चिरादद्य गुणान् गायति ते।
मञ्जुनाथोऽपि, न विजहासि विभो दीनं माम्।।१०।।

किं न अनुगृह्णासि अनुग्रहं करोषि? किं न पासि। सर्वज्ञतया सर्वं जानन्नपि मां किं न जानासि।१।। प्रगल्भश्चतुरः।।२।। ददसे 'दद दाने'। गृह्णासि स्वीकरोषि।।४।। संतापयुक्तोऽपि संसारे रमे सुखमनुभवामि।।५।। वैषयिकैः विषयसम्बन्धिभिः प्रपञ्चैः। विमुष्णासि वञ्चयसि।।७।। तव चरणं संस्थाप्य तच्चिह्नेन मे मस्तकं चिह्नितं कुरु। विमृद्नासि मर्दयसि।।८।। किं न यासि रक्षणार्थं मां किं नोपगच्छसि?।।९।। मञ्जुनाथश्चिराद् ज्ञानशून्योऽपि अद्य ते गुणान् गायति। अत एव दयालुस्त्वमपि तं न त्यजसि।।१०।।

## (२०)

## भवाटवी

अहो कं वाऽऽश्रयेयं दीनबन्धो।
स्वदुःखं कं वदेयं दीनबन्धो!।।१।।
महाघोरे घनेऽहं काननेऽस्मिन्।
वद त्वं कं भजेयं दीनबन्धो!।।२।।
वनाग्निः सर्वतो मे संवृतोऽयम्।
अहो कुत्र द्रवेयं दीनबन्धो?।।३।।
पथि श्रान्तो नितान्तोत्पीडितोऽहम्।
कथं शान्तिं वहेयं दीनबन्धो।।४।।
प्रभो! भ्राम्यामि दिङ्मूढोऽतिवेलम्।
कथं मार्गं जुषेयं दीनबन्धो!।।५।।
अहो वन्यद्विपो मामेति हन्तुम्।
वटेऽस्मिन्नापटेयं दीनबन्धो!।।६।।
द्रुतं शाखां प्रगृह्याऽऽलम्बितोऽहम्।
परं कूपस्तलेऽयं दीनबन्धो।।७।।
अधः कूपो द्विपोऽयं सम्मुखे मे।
कथं शाखां त्यजेयं दीनबन्धो!।।८।।
परं क्षौद्रस्य वृक्षाद् बिन्दवो मे।
मुखे ह्यायान्त्यमेयं दीनबन्धो।।९।।
इमां शाखामपीमौ मूषकौ द्वौ।
लुनीतः किं चरेयं दीनबन्धो।।१०।।

क्व भो गच्छामि कुर्वे किं प्रभो मे।
त्वमेवाख्याह्युपेयं दीनबन्धो।।११।।
विहाय त्वां कमन्यं मञ्जुनाथम्।
वटेऽस्मिन्नारटेयं दीनबन्धो!।।१२।।

घने परस्परं वृक्षाणामाश्लेषेण निबिडे।।२।। पथि श्रान्तः मार्ग-चलनेन खिन्नः।।४।। पूर्वादयो दिशः का इति दिग्भ्रमान्मोहयुक्तः। अतिवलं निरन्तरम्। जुषेयं प्राप्नुयाम्।।५।। वटवृक्षे आपटेयम् आगच्छेयम्।।६।। शीघ्रं शाखां गृहीत्वा लम्बितः। वृक्षस्य अधस्तात् कूपः।।७।। परं कूपहस्तिभयात् वृक्षशाखां कथं त्यजेयम्?।।८।। परं वटवृक्षे 'मधुचक्र' स्रुतस्य क्षौद्रस्य मधुनः बिन्दवो मम मुखे अमेयं अपरिमितं यथा स्यात् तथा आयान्ति इति लोभः।।९।। उपरि दर्शनेन ज्ञातं यद् अवलम्बिताम् इमां शाखां शुक्लकृष्णौ द्वौ मूषकौ निरन्तरं छिन्तः। दार्ष्टान्ति के तु जीवस्य आयुः कालरूपां शाखां दिनरात्रिरूपौ शुक्लकृष्णौ द्वौ मूषकौ अनवरतं कर्तयतः।।१०।। उपेयम् उपगन्तव्यं शरणं त्वमेव आख्याहि।।११।। मञ्जुं त्वां नाथं विहाय जीवनरूपेऽस्मिन् वटवृक्षे कम् आरटेयम् आह्वयेयम्।।१२।।

(२१)

भ्रमन्तं भूरि संसारे मुरारे! पाहि दीनं माम्।
पदाब्जे ते विलोठन्तं द्रुतं संयाहि दीनं माम्।।१।।
मुहुः क्लिश्नाति चिन्तासौ समन्तादाकुलीभूतम्।
ततोऽपि व्रीडयत्येषा महत्त्वाशा हि दीनं माम्।।२।।
न दूये दुर्जनालापैः पराभूये न संतापैः।
चिरायोपेक्षणं ते बाधते संदाहि दीनं माम्।।३।।
न भाग्यं तादृशं यत् ते विलोके रूपसौभाग्यम्।
धिनोति ध्यानसौख्यं ते सुधासंवादि दीनं माम्।।४।।
न दैन्याद् दूयते चित्तं न वित्तं स्तूयते भूरि।
अधैर्यं किंतु संधत्ते सदा संनाहि दीनं माम्।।५।।
अविश्रान्तं प्रतीक्षातो नितान्तं श्रान्तचित्तोऽहम्।
दयालो! दृक्सुधासारैर्नवं निर्माहि दीनं माम्।।६।।
श्रुतीनां भूरिभूतीनां विकल्पैर्दिग्विमूढोऽहम्।
कथंकारं विलोके त्वां मनागाख्याहि दीनं माम्।।७।।
कृपापीयूषलेशार्थे प्रयस्यन् दूयमानोऽहम्।
निलीनं द्वारदेशे ते न प्रत्याख्याहि दीनं माम्।।८।।

**दयामालम्ब्य ते भूमन्! सनाथो मञ्जुनाथोऽहम्।**
**इदानीं त्वद्वशोऽहं पाहि मा वा पाहि दीनं माम्।।९।।**

संयाहि रक्षणार्थम् आगच्छ।।१।। व्रीडयति लज्जितं करोति।।२।। पराभूये पराजित: (पराभूत:) भवामि। संदाहि हृदयदाहकम्।।३।। सुधासंवाहि अमृतप्रवाहकं ते ध्यानसुखमेव मां धिनोति प्रीणयति।।४।। वित्तं भूरि न स्तूयते न अभिनन्द्यते, वित्तार्थमेव बहुलं प्रयासो न क्रयत इत्याशय:। परं संनाहि सदा संनद्धं (सज्जम्) अधैर्यं मां संधत्ते आश्रयति। त्वं मम कामवस्थां करिष्यसीति अधैर्यं सदा मे तिष्ठतीति भाव:।।५।। दृष्टिसुधावर्षणेन दीनं मां नवीनं कुरु, संसारभ्रमणपरिश्रमं छिन्धि, इत्याशय:।।६।। भूरिशाखानां वेदानां विकल्पै: 'केन मार्गेण गच्छेयम्' इति किंकर्तव्यविमूढ:।।७।। प्रयस्यन्, प्रयासं कुर्वन्। न प्रत्याख्याहि निषेधं मा कुरु।।८।।

(२२)

**दयालो! किमालोकसे नि:स्पृहम्।**
**चिरं व्याकुलो हन्त लोठाम्यहम्।।१।।**
**न किं वीक्षसे नाथ! दीनाननम्।**
**चिरं चिन्तया हन्त दैन्यावहम्।।२।।**
**खरैरश्रुपूरैर्निरुद्धे दृशौ।**
**कथं नाम शोके विलोके त्वहम्।।३।।**
**सुहृत्-सूनु-सम्बन्धिनोऽप्यद्य माम्।**
**विमुञ्चन्ति भूमौ गतं निस्सहम्।।४।।**
**न कंचित्सहायं विलोके विभो!**
**क्व भो दर्शयिष्यामि चित्ताग्रहम्।।५।।**
**मतेर्दीनबन्धो! न गन्धोऽस्ति मे।**
**सदा मन्दकर्माणि कुर्वेऽन्वहम्।।६।।**
**कथं पुण्यमन्वेषये जीवने।**
**इदं दुष्कृतानन्तदावेऽदहम्।।७।।**
**इदानीं प्रभो मञ्जुनाथो धृतिम्।**
**दयालोस्तवैवाद्य हस्तेऽवहम्।।८।।**

नि:स्पृहम् तटस्थ: सन् किं पश्यसि, रक्षां किं न करोषि?।।१।। दैन्यावहम् दीनतासूचकम्।।२।। खरै: शोकवर्द्धकत्वात् निष्ठुरै:।।३।। निस्सहं स्पर्शमात्रस्यापि असहनम्, मुमूर्षुमिति यावत्।।४।। यदा कश्चित् सहायक एव नास्ति तदा चित्तस्य आग्रहम् अभिनिवेशं कुत्र दर्शयिष्यामि?

न कुत्रापीत्यर्थः।।५।। मम बुद्धेर्लेशोऽपि नास्ति, अत एव बुद्धिशून्यः प्रतिदिनं मन्दकर्माणि करोमि।।६।। इदं पुण्यं पापरूपे अनन्ते दावे वनाग्नौ अदहम्।।७।। इदानीं मञ्जुनाथोद्धारस्तव हस्ते एवास्ति।।८।।

(२३)

**हंहो मुकुन्द मामहो दीनं न पासि किम्?।**
**दीनं दयानिधे तवाधीनं जहासि किम्?।।१।।**
**आकण्ठमग्नमेनमहो मोहसागरे।**
**हित्वा दयावतार विदूरे प्रयासि किम्।।२।।**
**बद्धोऽस्मि पूर्वमेव पुराकर्मबन्धनैः।**
**तस्योपरि प्रभोऽद्य विमोहं ददासि किम्।।३।।**
**भ्रान्तो भ्रमामि भूरि विभो कर्मकानने।**
**मायामरीचिकां पुनर्मूढे दधासि किम्।।४।।**
**चित्तेन चिन्तयैव चिरादर्तिराचिता।**
**प्रेमाम्मयेन नाथ न चेमां लुनासि किम्।।५।।**
**नेमां रुणत्सि मोहिनी मायास्ति सम्मुखे।**
**कूपान्तिकेऽन्धमेनमपास्यापयासि किम्।।६।।**
**चित्तान्तरे जनस्य निवासं करोषि चेत्।**
**चित्तस्य वेदनां तदा मे नावयासि किम्।।७।।**
**पश्याद्य दयादृष्टये द्वारे लुठामि ते।**
**पश्यन्नपि प्रभोऽद्य न पश्यन्निवासि किम्।।८।।**
**तापेन भूरि तापितो लोठामि भूतले।**
**हंहो दयानिधान! दयां नोपयासि किम्?।।९।।**
**दीनोऽपि तावकोऽस्मि विहीनोऽपि साधनैः।**
**मामद्य मञ्जुनाथ विमोहैः प्रमासि किम्।।१०।।**

मोहसागरे आकण्ठं मग्नम् एनं मां हित्वा त्यक्त्वा।।२।। पुराकर्म०- पूर्वं कृतानां कर्मणां बन्धनैः।।३।। भ्रान्तो भ्रमामि कर्तव्येषु भ्रमयुक्तोऽहं कर्मवने भ्रमामि। मायारूपां मरीचिकां मृगतृष्णाम्।।४।। चित्तेन चिन्ताद्वारा चिरात् अर्तिः पीडा संचिता, इमां प्रेमवर्षया किं न छिनत्सि।।५।। कूपसमीपे अन्धम् एनं माम् अपास्य त्यक्त्वा किमिति गच्छसि? माया कूपसदृशीत्यर्थः।।६।। अवयासि जानासि।।७।। साधनैः हीनः दीनः अपि अहं त्वदीयः अस्मि। विमोहैः मां किं प्रमासि? विमोहानुत्पाद्य तेषां द्वारा मां किं परीक्षसे।।१०।।

( २४ )

दोषं ददासि चेद् विभो! चित्तं तदा व्यकारि किम्?।
पुण्यं परीक्षसे प्रभो! बुद्धिर्न सा व्यतारि किम्?।।१।।
जाने प्रभो! त्वदिच्छया लोकोऽखिलं विचेष्टते।
हंहो दयानिधे तदा दोषो मम व्यचारि किम्।।२।।
स्वामिन्! ममैनसामहो संख्यां कथं करिष्यसे?
सेयं परार्द्धपूरिणी पूर्वं प्रभो! ह्यकारि किम्।।३।।
पूर्वं त्वजामिलादयस्त्रातास्त्वया दयावशात्।
अस्मत्कृते दयानिधे! सेयं दया न्यवारि किम्।।४।।
पापीति मां कथं त्यजेर्वादं भजे दयानिधे!
पृच्छाम्यहम्-'पुरा त्वया पापी न वोदधारि किम्?'।।५।।
माहं विशेषलम्पटो बाढं पटो! परीक्ष्यताम्।
किंतु प्रलोभनैः प्रभो! ज्ञानं मम त्वहारि किम्।।६।।
स्वामी स मञ्जुनाथ ते स्तोकं न दोषमीक्षते।
पुण्यैः प्रसन्नताथ चेद् दानं दयानुसारि किम्?।।७।।

'त्वं पापान्याचरसि' इति मह्यं त्वं दोषं ददासि, तर्हि हृदि स्थितेन त्वया मम चित्तं किं व्यकारि विकृतं कृतम्। सा बुद्धिः पुण्यानुसारिणी किं न व्यतारि अदायि?।।१।। मम दोषः किं व्यचारि कथं विचारितः।।२।। एनसां पापानाम्। सेयं संख्या परार्द्धपूरिणी परार्द्धपर्यन्ता किमिति अकारि? मम दोषाः परार्द्धसंख्यातोऽप्यधिकाः, अतएव अग्रे संख्याभावात् परिमाणं कथं भवेदित्याशयः।।३।। न्यवारि निवारिता, त्यक्ता।।४।। पापीति कृत्वा मां कथं त्यजसि? हे दयानिधे! अस्मिन् विषये वादं भजे करोमि, अतएव पृच्छामि- 'किं त्वया कश्चित् पापी न उदधारि उद्धृतः। यदि पूर्वं पापी उद्धृतस्तर्हि अहं किमर्थं त्यक्तो भवितुमर्हामि?।।५।। हे पटो! चतुर बाढं परीक्षा क्रियताम्- अहम् अतिलम्पटो लुब्धः नास्मि। प्रलोभनैः मम ज्ञानं तु अहारि। प्रलोभनानि दत्त्वा मम ज्ञानस्यापहरणं कृतम्। अत एव मम लम्पटताप्रवृत्तिदर्शनम्।।६।। स स्वामी स्तोकमपि दोषं न ईक्षते। यतः यदि पुण्यैः प्रसन्नता तर्हि दयानुसारि दानं किं जातम्। पुण्याभावेऽपि यदि कृपा भवेत् तदैव दयादानमित्याशयः।।७।।

( २५ )

हरे! संतरेद् भाग्यनौका ममेयम्।
क्षणं क्षेपणी स्याद् दया चेत् तवेयम्।।१।।
भवाब्धिस्तु कल्लोलमालाकुलोऽयम्।
महाजर्जरा नाथ! नौका ममेयम्।।२।।

ततोऽप्यद्य विद्योतते नैव भास्वान्।
घटा चोत्कटा व्योम्नि विस्फूर्जितेयम्।।३।।
न पश्यामि मार्गं निरुद्धोऽन्धकारे।
विचारेण हीनातिदीना दशेयम्।।४।।
महासागरे दुस्तरे वाति वायौ।
मिमङ्क्षुस्तरिर्दोलते चञ्चलेयम्।।५।।
भ्रमीणां भ्रमिर्भूरि भीतिं विधत्ते।
न जाने कदानेन लीयेत सेयम्।।६।।
इदानीं न मे शक्तिरस्याः प्रवाहे।
क्षणादेव हे देव मग्नो भवेयम्।।७।।
न वीक्षेऽधुना त्वां विना रक्षकं मे।
यदन्तःस्थितं त्वां किमावेदयेयम्।।८।।
इदानीं तु हे नाथ नेत्रे निबद्धे।
निरुद्धेयमत्रैव नौः, किं चरेयम्?।।९।।
दृशा मञ्जुनाथं क्षणं वीक्षसे चेत्।
निमग्नोऽपि कामं हरे संतरेयम्।।१०।।

क्षणार्थं तव दया यदि क्षेपणी नौकादण्डः स्यात् तर्हि मम भाग्यरूपा नौका संतरेत्।।१।। विस्फूर्जिता विजृम्भिता।।३।। विचारेण हीना, विचारमपि कर्तुं मे सामर्थ्यं नास्ति।।४।। मिमङ्क्षुः मज्जनाशङ्काग्रस्ता तरिर्दोलते आलोडिता भवति। आशङ्कायां सन्।।५।। भ्रमीणां जलावर्तानाम् भ्रमिः भ्रमणम्। अनेन (आवर्तभ्रमणेन) न जाने सेयं तरिः कदा लीना भवेत्।।६।। चरेयं करोमि।।९।। यदि तव दयादृष्टिर्भवेत् तर्हि तदिदं मे जलं निमज्जनं संतरणं भवेदित्याशयः।।१०।।

(२६)

उपेक्षयालं जहासि कालम्, द्रुतं न किं पासि भो विभो माम्।
सुधामये! कामयेऽनुकम्पां मुधावजानासि भो विभो माम्।।१।।
तवावलम्बेन निर्भयोऽहम्, न वा विलम्बेन लाभमीक्षे।
समन्ततो व्याधिसंततोऽहम्, कुतो न गृह्णासि भो विभो माम्।।२।।
अयेऽवलोकस्व बन्धबाधाम्, ममापराधांस्तु मानुमासीः।
दयाब्धिराकर्णितो मया त्वम्, कथं विमृद्नासि भो विभो माम्।।३।।

निरन्तरं बाधते विचिन्ता दुरन्तसंतापसंकुलं माम्।
किरन्तमश्रूणि दुःखदूनं कथं न पुष्णासि भो विभो माम्।।४।।
त्रिलोकलक्ष्मीललाममूर्तिर्विलोकनीयोऽसि लोकपालैः।
अकिंचनं माययानया ते कथं नु मुष्णासि भो विभो माम्।।५।।
भ्रमन्ननेकासु भूमिकासु श्रमं कियन्नाथ धारयेऽहम्।
न पारये, हन्त पालयेथाः, कियद् विमथ्नासि भो विभो माम्।।६।।
क्व यामि, किं वाऽऽचरामि, कीदृग् भवामि, कस्मै निवेदयामि।
कथं विलोठामि ते पदाब्जे न किं त्वमाख्यासि भो विभो माम्।।७।।
विशीर्यते देहसंधिबन्धो, न दीनबन्धो! सहे निवोढुम्।
न चेतना चेष्टतेऽधुना किं न वानुगृह्णासि भो विभो माम्।।८।।
न कोऽपि मार्गावबोधको मे, भवन्निकेतं वदेत् तु को मे?
व्यथाशतैराकुलं किलेमं वृथा निगृह्णासि भो विभो माम्।।९।।
सुमञ्जुना ते गुणेन भूमन्! स मञ्जुनाथोऽद्य निर्भयोऽयम्।
विना भवन्तं न वेद्म्यवन्तम्, पुनर्न किं पासि भो विभो माम्।।१०।।

उपेक्षां मा कुरु, कालं जहासि मे उद्धारकालं वृथैव यापयसि। 'अये हरे! अहम् अनुकम्पां सुधाम् दयारूपम्, अमृतम् (व्यस्तरूपकम्) कामये वाञ्छामि। व्यर्थमेव माम् अवजानासि तिरस्करोषि।।१।। गृह्णासि स्वीकरोषि।।२।। मम सांसारिकबन्धनानां बाधाम् अवलोकस्व। मम अपराधानाम् अनुमानं मा कुरु ['सांसारिकी इयती अस्य पीडा, अत एव अनेन पापानि अपि बहूनि कृतानि' इति]। विमृद्नासि अपराधदण्डदाने मर्दयसि।।३।। पुष्णासि रक्षसीति यावत्।।४।। अकिंचनं दीनम् मां मायया कथं मुष्णासि प्रतारयसि। लोकपालैरपि समये दर्शनीयस्य ते इदं नोचितमित्यर्थः।।५।। अनेकासु भूमिकासु अनेकेषु जन्मसु इत्याशयः। परिश्रमं कियत् (क्रियाविशेषणम्) धारयामि।।६।। अङ्गानां संधिबन्धो विशीर्यते, मम देहो विशीर्णप्राय इत्याशयः। मम चेतना न चेष्टते, मम चैतन्यं नास्तीत्याशयः। किं न अनुगृह्णासि अनुग्रहं करोषि।।८।। निगृह्णासि दमयसि।।९।। गुणेन दयागुणेन। सः अयं मञ्जुनाथः। भवन्तं विना अन्यम् अवन्तम् रक्षकम् न जानामि।।१०।।

(२७)

अयि नाथ दयादृष्टिं तव देहि दयालो! मे।
विदधासि तिरस्कारं किल केन कृपालो मे।।१।।
भ्रान्तोऽस्मि भृशं भूमन्! भ्रमभूरिभवारण्ये।
अधुना तु वनान्तेऽस्मिन् भव नाथ! निभालो मे।।२।।

मम मन्दकृतिस्तोमो बत बीजमभूत् पूर्वम्।
कृतकर्मतरुः सोऽयम्, अधुना तु विशालो मे।।३।।
अयि नाथ! गजेन्द्रेऽभूद् भवदीयदया पूर्वम्।
अधुना तु दयासिन्धो! वद केन करालो मे।।४।।
लोठामि भृशं भूमौ दीनोऽयमहं त्वग्रे।
निद्रासि कथंकारं ननु शेषशयालो! मे।।५।।
विदधासि दयादृष्टिं यदि किंचिदपि स्वामिन्।
न हि नाथ! भयं किंचित् कलयेदपि कालो मे।।६।।
यदि कष्टमये काले न करोषि करालम्बम्।
तव भूरिकृपालोकैः किमकारि कपालो मे?।।७।।
भृशमन्यजनप्रीत्यै सुरशाखिचयोऽप्यास्ताम्।
व्रजभूमिभवो भूत्यै भवतात्स तमालो मे।।८।।
अयि नाथ! न नाथेऽन्यत्, परमस्तु भवच्चित्ते।
बत मञ्जुलनाथोऽयं चपलोऽपि च बालो मे।।९।।

हे कृपालो! मे तिरस्कारं केन विदधासि।।१।। भ्रमबहुले भवरूपे अरण्ये। हे नाथ! मे निभालः (निभालयतीति निभालः, निरीक्षकः) भव।।२।। मम मन्द (निषिद्ध) कर्मसमूहः पूर्वं बीजरूपे अभूत्। अधुना मे कृतकर्मरूपः तरुः विशालो जातः। बीजरूपेण स्थितं मन्दकृत्यं विशालवृक्षरूपे परिणतमित्यर्थः।।३।। मे मदर्थं केन करालः क्रूरः असि।।४।। अयमहं दीनस्तु भूमौ लुठामि, हे मम शेषशायिन्! त्वं कथं निद्रासि? एवं कष्ट-करुणकाले निद्रा ते किं उचिता?।।५।। कालः साक्षात् यमः अपि।।६।। यदि कष्टसमयेऽपि मम करावलम्बनं न करोषि, तर्हि तव कृपाकटाक्षैः किम्।।७।। अन्यजनानां प्रीतये कल्पवृक्षसमूहः भवतु। मम तु भूत्यै (कल्याणाय) व्रजभूमिजातः तमालवृक्षः श्रीकृष्णः अस्तु, इति आशीः। रूपकातिशयोक्तिः।।८।। नाथे आशासे, याचामि। मञ्जुनाथः चपलः अपि मे बालः शिशुः अस्ति इति भवच्चित्ते अस्तु।।९।।

(२८)

## नवप्रचलितगीतिः

भयभीतमेनमालोक्य स मामविता भविता वनमाली मे।
भृशमन्धकारिभवभीतिपथे सविता भविता वनमाली मे।।१।।
भ्राम्यामि भूरि संतापभृतो भुवनेषु नेह मिलितो ह्यविता।
तप्तस्य भूरिकारुण्यसुधास्त्रविता भविता वनमाली मे।।२।।

ननु कस्य पुरो वाचाभरेण याचामि दैन्यचिन्ताकरेण।
संसारघोरसंतापलेशलविता भविता वनमाली मे।।३।।
धनगर्वमत्तधनिकालयेषु लिप्साभरेण घनपङ्किलोऽस्मि।
कारुण्यपूरपीयूषभरात् पविता भविता वनमाली मे।।४।।
यदि मञ्जुनाथसूक्तिर्न मता कविताप्रबन्धमाधुर्यविदाम्।
कीर्तिप्रसारसौभाग्यसारसविता भविता वनमाली मे।।५।।

एनं मां भयभीतम् आलोक्य सः दयालुत्वेन प्रसिद्धः वनमाली मे अविता रक्षकः भविता भविष्यति [अद्य न चेत् तर्हि मम दीनतामालोच्य श्वः अवश्यं रक्षको भविष्यतीति व्यञ्जनाय अनद्यतनभविष्यति लुट्]। अन्धकारयुक्ते भव (संसार) भयपूर्णे मार्गे वनमाली मे सविता सूर्यः भविष्यति। भवमार्गे श्रीकृष्ण एव मम मार्गदर्शको भविष्यतीत्याशयः।।१।। हि अविता रक्षकः। ततस्य मम कृते कारुण्यरूपायाः सुधायाः स्रविता स्रावकः, वर्षकः।।२।। दैन्यचिन्ताजनकेन वाणीभरेण कस्य जनस्य पुरः अग्रे याचामि। संसारतापलेशस्य लविता छेदकः, नाशकः।।३।। घनं यथा स्यात् तथा पङ्किलः अतिकलुषः अस्मि। पविता पावकः, शोधकः।।४।। न मता न सम्मता तर्हि वनमाली मे कीर्तिप्रसाररूपस्य सौभाग्यसारस्य सविता उत्पादकः भविता।।५।।

## (२९)

## भगवान् शंकरः

अये गिरीन्द्रनन्दिनीश! नन्दयस्व माम्।
अये शशाङ्कशोभिभाल! पालयस्व माम्।।१।।
जाता नितान्ततान्तता संतापितस्य मे।
पीयूषपूरयोषतः संतोषयस्व माम्।।२।।
याचे न चेतसा भवन्तमीहितान्तरम्।
दृशा दयास्पृशा तु तत् सम्भावयस्व माम्।।३।।
यदा पशुर्विशाम्पते! भवताधिरुह्यते।
तदा पदाग्रदानतः सम्मानयस्व माम्।।४।।
भवान् भवानुकीर्तने ख्यातस्त्रिलोचनः।
एकेन लोचनेन तु प्रनिभालयस्व माम्।।५।।
जाने भवन्तमद्रिजाजाने! ममाश्रयम्।
मा मा निराशतां प्रदाः परिवारयस्व माम्।।६।।

चित्तेन अहम् ईहितान्तरम् अन्यद् ईहितं वाञ्छितम् न याचे ।।३ ।। पशुः नन्दीश्वरो वृषभः।।४ ।। हे भव ! कीर्तनकथायां भवान् त्रिलोचनः प्रसिद्धः। प्रनिभालयस्व विलोकय।।५ ।। मह्यं निराशतां मा प्रदेहि मां निराशं मा कुरु, मां परिवारयस्व निजं परिवारं 'सेवकं' कुरु।।६ ।।

(३०)

अहो शम्भो! भवेत्किं भो ममैवार्थे विलम्बोऽयम्?।
समुद्धारेच्छया नूनं पुरारे! तेऽवलम्बोऽयम्।।१ ।।
कियद् भ्राम्यामि भो भूमन्! भवेऽस्मिन् भूरि भीतोऽहम्।
अहो भूतेश! किं कुर्वे, भवाध्वा भूरिलम्बोऽयम्।।२ ।।
मनोमोहाय जायन्ते जगद्वस्तूनि पर्यन्ते।
अहो मे लोलुपस्याग्रे धृतोऽभूत् किं करम्भोऽयम्।।३ ।।
बहिर्जानन्ति मां सन्तं हृदन्तं केऽपि नेक्षन्ते।
अहो किं दर्शयेदग्रे दुरन्तं दुष्टदम्भोऽयम्।।४ ।।
विभो! वीक्षस्व चिन्तासौ न किं तावद् दुरन्ता मे।
अहो लग्नो हृदन्ते मे न कृन्तेत् किं कलम्बोऽयम्।।५ ।।
अहो भूतेश! भुक्तेभ्यो न भोगेभ्यो विरज्येऽहम्।
कथं मुञ्चेन्मुखायातं तृषार्तो मिष्टमम्भोऽयम्।।६ ।।
सुखं मोदेत मेदिन्यां सनाथो मञ्जुनाथोऽयम्।
भवेद् भूतेश! भावत्को दयालेशोऽ*वलम्बोऽयम्।।७ ।।

निश्चितं समुद्धारस्येच्छया अयं ते अवलम्बः आश्रयः कृतोऽभूत्।।१ ।। भवस्य अध्वा मार्गः अतिदीर्घः।।२ ।। पर्यन्ते अवसाने मोहाय भवन्ति। करम्भो दधिमिश्रसक्तुः।।३ ।। हृदन्तं हृदयपर्यन्तम्। अयं दम्भः बाह्याडम्बरः किं दुरन्तम् दुष्परिणामं दर्शयेत्।।४ ।। हृदन्ते लग्नः कलम्बः बाणः किं न कृन्तेत्। इयं चिन्ता बाणसदृशीत्याशयः।।५ ।। तृषार्तः मुखागतं मिष्टम् अम्भः जलं कथं मुञ्चेत्।।६ ।। दयालेशः अवलम्बः बलं भवेत्। पाठान्तरे तु अद्य भवदीयः दयालेशो भवेत् तर्हि मञ्जुनाथः सनाथः सन् मोदेत।।७ ।।

(३१)

वन्ददामहे महेशपदाम्भोजमुज्ज्वलम्।
सेवामहे महेशपदाम्भोजमुज्ज्वलम्।।१ ।।
संतापितस्य तापहरं किंचिदस्ति चेत्।
बुध्यामहे महेशपदाम्भोजमुज्ज्वलम्।।२ ।।

---

* 'द्य शम्भोऽयम्' इति पाठान्तरम्।

लीयेत लाभलोभलवोऽप्यन्तरस्य चेत्।
विन्दामहे महेशपदाम्भोजमुज्ज्वलम्।।३।।
यायाद् यमोऽपि मौनमहो नम्रमौलि चेत्।
अर्चामहे महेशपदाम्भोजमुज्ज्वलम्।।४।।
संसारसागरस्य महापोतमाततम्।
श्लाघामहे महेशपदाम्भोजमुज्ज्वलम्।।५।।
एतावदेव देव! सदाभ्यर्थयामहे।
पश्याम हे महेश! पदाम्भोजमुज्ज्वलम्।।६।।
गर्वोद्धुरं कदापि न याचामहे नरम्।
याचामहे महेशपदाम्भोजमुज्ज्वलम्।।७।।
काव्येषु मञ्जुनाथ! न नः स्पर्द्धया फलम्।
वीक्षामहे महेशपदाम्भोजमुज्ज्वलम्।।८।।

तापहरं यदि किंचिदस्ति, तर्हि तत् शिवचरणकमलं बुध्यामहे जानीमः।।२।। यदि शिवचरणं विन्दामहे प्राप्नुमः तर्हि चित्तस्य लोभलेशः अपि लुप्येत।।३।। नतमस्तकं यथा स्यात् तथा यमोऽपि मौनं यायाद् यदि वयं शिवचरणम् अर्चामः।।४।। आततं विस्तृतम्।।५।। एतत् अर्थयामहे याचामः यत् हे महेश! ते पदाम्भोजं पश्याम (प्रार्थनायां लोट्)।।६।। नरं (नरात्, अविवक्षायां द्वितीया) न याचामहे, अपि तु पदाम्भोजम् पदकमलात् अभीष्टं याचामः।।७।।

(३२)

हे गणेयगुणावधे करुणानिधे ह्यवधीयताम्।
दृष्टिरुज्ज्वलभारते तव भारते विनिधीयताम्।।१।।
एष भूवलये विशेषविधोऽस्ति देशवरश्चिरात्।
सर्वसभ्यसमाज एष विमाति यद्रमणीयताम्।।२।।
किं नु कोऽपि निदर्शयेद् बत देशमीदृशमुन्नतम्।
यस्य वाङ्मयमावहेन्निगमागमैस्तुलनीयताम्।।३।।
यत्र कुङ्कुमकेसराः कलयन्ति कामपि सुच्छविम्।
देश ईदृश ईक्ष्यते किमिहापरोऽपि विचीयताम्।।४।।
रत्नराशिरलुण्ठि लुण्ठनतत्परैर्बहुधा परैः।
किंतु साम्प्रतमप्यसौ वहते परं महनीयताम्।।५।।

कूटनीतिनियन्त्रणैः परतन्त्रता नाभूद् यदा।
देश एष दधौ तदा तव देव! दुर्दमनीयताम्।।६।।
अस्य खड्गतले बलेन परैः शिरो नमितं पुरा।
काममद्य कठोरनीतिपरैः परैर्बत जीयताम्।।७।।
किंतु सभ्यवराः! समेत्य भवद्भिरेव विचार्यताम्।
एकतामवलम्ब्य कार्यपथे यथावदुदीयताम्।।८।।
वक्तृतां परिहाय सम्प्रति कर्तृतां कलयेम चेत्।
उन्नतिः स्वयमावृणीत मनागिदं परिचीयताम्।।९।।
निर्मले यमुनातटे निकटे कदम्बमहीरुहाम्।
अत्र वै विहरन् हरिर्विदधे महाकमनीयताम्।।१०।।
किंतु सैव विहारभूरपहारभूर्जनिताधुना।
हेलयापि दयानिधान! दयादृगत्र विधीयताम्।।११।।
तावकीं करुणामुपेत्य न वेत्त्यसौ हृदि वेदनाम्।
धार्मिकेषु दयावता भवता द्रुतं समुदीयताम्।।१२।।
गीयते निगमागमैर्गुणगौरवं तव सर्वदा।
नाथ! सम्प्रति मञ्जुनाथगिरा कियद् बत गीयताम्।।१३।।

गणनीयानां गुणानाम् अवधि (पराकाष्ठा) सदृश! 'गणनीयं तु गणेयम्' इत्यमरः। उज्ज्वलायां भायां कान्तौ रते, सत्कार्यकरणेन कीर्तिसम्पादके इत्याशयः। तव भारते भवदीये भारते दृष्टिः स्थाप्यताम्।।१।। विशेषविधः, नानाविधविशेषतानां कारणात् सर्वेभ्यो विशिष्टः। विभाति जानाति।।२।। कुङ्कुमस्य कश्मीरजस्य केसराः किञ्जल्काः। सुच्छविं शोभाम्।।४।। परैः अन्यदेशीयैः, अलुण्ठि लुण्ठिता। धनिकतया सत्करणीयताम्।।५।। हे देव! तदा एष तव देशः दुर्दमनीयताम् अजेयतां दधौ।।६।। अद्य परैर्जीयताम्, अद्य वैदेशिका विजयशालिनो भवेयुः।।७।। ××× वक्तृतां वचनव्यापारं प्रति कर्तृतां विहाय, कार्यं प्रति कर्तृभावं चेत् कलयामस्तर्हि उन्नतिः स्वयं वरणं कुर्यादित्याशयः।।९।। अपहारस्य विलुण्ठनस्य भूमिः।।११।। असौ देशः तावकीं दयामुपेत्य हृदये वेदनां न वेत्ति अनुभवति।।१२।।

(३३)

अये स्वामिन्! समायातो व्यथातो द्वारि दीनोऽयम्।
कृपापीयूषलेशार्थं पदाब्जे ते निलीनोऽयम्।।१।। अये स्वामिन्.
शतं शाखा विलोक्यन्ते त्वमेवाख्याहि मार्गं ते।
भवे भूयः परिभ्रान्तोऽधुना श्रान्तोऽध्वनीनोऽयम्।।२।। अये.

दया दीनेषु ते ख्याता परिज्ञाता ममापीयम्।
दयालो! हन्त भालो मे तवेदानीमधीनोऽयम्।।३।। अये.
नितान्तं चिन्तया खिन्नो रतिं नो जीवने प्रापम्।
व्यथाभोगेऽपि नोत्तापी प्रभो पापी नवीनोऽयम्।।४।। अये.
तवालोकेन लोकेऽस्मिन् विलोके सुस्थितं सर्वम्।
कियज्जीवेज्जलाधीनो विना तोयेन मीनोऽयम्।।५।। अये.
भवेदिन्द्रोऽनुयाता मे विधाताप्यर्घ्यदाता स्यात्।
क्षणं चेन्मन्यसे चित्तेऽतिदीनो मामकीनोऽयम्।।६।। अये.
लघीयान् कोऽपि पापी ते न चापीक्षापथं गच्छेत्।
कथं न प्रेक्षणं यायात् पुरस्तात् पापपीनोऽयम्।।७।। अये.
प्रतीतिं कोऽपि किं यायाद् दयायाः सागरे देवे।
दयालेशाय चेत् ताम्ये तपस्वी तावकीनोऽयम्।।८।। अये.
प्रभो काचिन्न चिन्ता स्यात् समन्तात् सम्पदं मन्ये।
कृपापाङ्गोऽद्य ते स्वामिन् भवेच्चेत् सम्मुखीनोऽयम्।।९।। अये.
कृपालोकेन ते स्वामिन् सनाथे मञ्जुनाथेऽस्मिन्।
न किं कौतूहलात् कामं कृपां कुर्यात् कुलीनोऽयम्।।१०।। अये.।।

व्यथातः व्यथायाः पीडायाः कारणात्।।१।। इयं दया ममापि परिज्ञाता। मम भालः भाग्यम्।।३।। जीवने रतिं सुखम् न प्रापम्। व्यथानुभवेऽपि नोत्तापी न उद्विग्नः, अत एवायं पापी नवीनः।।४।। अर्घ्यदाता आदरकर्ता इत्यर्थः 'अयं मामकीनः।' इत्येव यदि क्षणकालार्थं निजचेतसि मह्यं स्थानं ददासि।।६।। लघुः पापी कदाचिद् दृष्टिपथं न गच्छेत्, किंतु पापेन पीनः, सोऽपि पुरस्तात् अग्रे एव तिष्ठन् ते प्रेक्षणपथं न गच्छेत्? अपितु गच्छेदेव।।७।। त्वदीयो जनो दयाया लेशार्थमपि चेत् खिद्येत तर्हि ते दयासागरत्वं कथं प्रतीयेत इत्यर्थः।।८।। त्वत्कृपाकटाक्षेण सनाथे कुलीनजनः अवश्यं कृपां कुर्यादित्यर्थः।।१०।।

(३४)

गोविन्दमार्तबन्धुमिमं विन्दसे न किम्।
पादारविन्दमस्य सखे! वन्दसे न किम्।।१।। गोविन्द.
प्राप्यापि दीनदुःखहरं राधिकावरम्।
संतप्यसे मुधैव रसे सेवसे न किम्।।२।। गोविन्द.

दुर्दान्तदीर्घदु:खदवासौ भवाटवी।
भूरि भ्रमन्निहापि सखे दूयसे न किम्।।३।। गोविन्द.
खेलत्कलिन्दनन्दिनीतीरे त्रितापहम्।
एतं तमालशालमिहालम्बसे न किम्।।४।। गोविन्द.
संसारमतीसारमिमं प्राप्य पीड्यसे।
एतस्य भङ्गभेषजं निषेवसे न किम्।।५।। गोविन्द.
ताम्यामि ते विलोकनाय नाथ निर्भरम्।
अन्त:स्थितोऽपि भावमिमं बुध्यसे न किम्।।६।। गोविन्द.
हा हन्त तवोपेक्षयैव मे सुदुर्दशा।
प्राणात्ययेऽपि नाथ मम प्रीयसे न किम्।।७।। गोविन्द.
दूरात् प्रपन्नमार्तमिमं मां जहासि चेत्।
नाथ! त्वमेव पश्य प्रणं लङ्घसे न किम्।।८।। गोविन्द.
संसारतापतापितो लोठामि भूतले।
संतापमुषा नाथ दृशा वीक्षसे न किम्।।९।। गोविन्द.
भीतिं भजामि भूरिभयाढ्ये भवाम्बुधौ।
हे नाथ मञ्जुनाथमिमं त्रायसे न किम्।।१०।। गोविन्दमार्त.।।

आर्तानां दु:खितानां बन्धुं सहायकम्। किं न विन्दसे प्राप्नोषि शरणं गच्छसि।।१।। राधिकावरं श्रीकृष्णं प्राप्यापि मुधैव संतप्यसे, रसे भक्तिरसे (मग्न: सन्) किं न सेवसे।।२।। दीर्घं दु:खमेव दवो वनाग्निर्यस्यां सा।।३।। तमालशालं (वृक्षम्) श्रीकृष्णं किं न आलम्बसे शरणं गच्छसि।।४।। संसाररूपम् अतीसारं तन्नामकं रोगम्। भङ्गस्य नाशस्य भेषजम् औषधम् श्रीकृष्णरूपम्। अतीसारस्य भेषजं 'भङ्ग:' भङ्गा, (मातुलानी) प्रसिद्धैवेत्यप्यर्थ:।।५।। ताम्यामि दु:खितो भवामि।।६।। तव प्रणो 'य: कोऽप्यार्त्तो मामुपगच्छेत् तमहं रक्षेयम् [सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम।।] इति।।१०।।

(३५)

अयि नाथ कथं रुद्धा दीनेषु दया सेयम्।
अपि किं सुधामयूखाल्लुप्येत सुधा सेयम्?।।१।।
संसारघोरतापात् तीव्रं वितापितोऽहम्।
अयि देव दयासिन्धो मम पश्य दशा सेयम्।।२।।

दुःखं भयं शुचं वा किं किं तवालपेयम्?।
अयि नाथ नोपशाम्येद् दुःखस्य कथा सेयम्?।।३।।
हे नाथ नेत्रकोणो दासेऽपि दीयते चेत्।
चित्तस्य चिराद् रूढा मुच्येत पिपासेयम्।।४।।
निस्साधनावलम्बं परिमुच्य ते पदाब्जम्।
दीनोऽद्य दीनबन्धो वद कुत्र यियासेयम्?।।५।।
इयती कृपा विधेया दासेऽत्र मञ्जुनाथे।
चरितामृतातिरिक्तं किंचिन्न पिपासेयम्।।६।।

सुधामयूखात् चन्द्रात्।।१।। पिपासा इयम्।।४।। यियासेयं यातुमिच्छेयम् सन्नन्ताल्लिङ्।।५।। पिपासेयं पातुमिच्छेयम्, लिङ्।।६।।

(३६)

कृपालो! कालकौटिल्याद् दया दीनेषु लुप्ता किम्।
अजस्रं जाग्रती सेयं मदर्थायैव सुप्ता किम्।।१।।
त्रिलोकीमण्डले भूमन्! दया ते विश्वविख्याता।
महन्मे पातकं दृष्ट्वा घृणातो हन्त गुप्ता किम्।।२।।
श्रुतं किं वा व्रतं किं वा दृढामासक्तिमाधत्ते।
समन्ताद् बन्धमाधातुं मया बीजालिरुप्ता किम्।।३।।
असंख्याः पापिनः पूर्वं त्वयैवोत्तारिताः श्रीमन्।
युगेऽस्मिन् दीनसंतारे दया ते हन्त तृप्ता किम्।।४।।
भवेऽस्मिन् भ्राम्यता भूरि प्रतीतं किं सखे सौख्यम्।
मतिर्नाद्यापि निर्विण्णा ततस्तापोपतप्ता किम्।।५।।
शतांशस्यापि तुल्यो मे पुरा किं पातकी दृष्टः।
तदा साधारणोद्धाराद् दया ते देव! दृप्ता किम्।।६।।
युगेऽस्मिन् भारतीया गौः समन्तात् पूरिता दुःखैः।
दयालोस्ते दयादृष्टिं न कर्षेत् तापतप्ता किम्।।७।।
युगेऽमुष्मिन् कदर्याणां समीपे कास्ति लाभाशा।
अये मे चित्त! वृत्तिस्ते मुधा लोभोपलिप्ता किम्।।८।।

प्रशस्तं मार्गमुल्लङ्घ्य प्रयस्यन्त्युत्पथं गन्तुम्।
अमीषां नव्यनेतॄणां मतिर्दैवेन शप्ता किम्।।९।।
पुराणा एव दुर्दान्ता न शेकुश्चेत् सुखं लब्धुम्।
तदा सम्पूर्णवृद्धेषु प्रगल्भेताद्य नप्ता किम्।।१०।।
न मग्ना श्रीपतिध्याने न लग्ना तद्गुणोद्गाने।
मतिस्ते मञ्जुनाथेयं मुधा मत्तावलिप्ता किम्।।११।।

कालस्य कलियुगस्य कौटिल्याद् दौरात्म्यात्। सेयम् दया मत्प्रयोजनसाधनायैव किं सुप्ता?।।१।। शास्त्रज्ञानं किं स्यात्, व्रतनियमादिकं वा किं स्यात् मम सांसारिकविषयेषु आसक्तिं स्थापयति। ततः किं बन्धनं कर्तुं मया बीजपङ्क्तेः वापः कृतः?।।३।। अस्मिन् युगे दीनानामुद्धारात् किं तृप्ता जाता?।।४।। किं सौख्यं प्रतीतम्, अनुभूतम्? अपि तु नानुभूतमित्यर्थः। अद्यापि ततः संसारात् तापोपतप्ता सती मतिर्न निर्वेदं प्राप्ता?।।५।। साधारणानां सामान्यपातकिनाम् उद्धारादेव दृप्ता गर्विता जाता?।।६।। गौः भारतीया भूमिः। 'गौरिला कुम्भिनी क्षमा' इत्यमरः। गोपदेन दयायोग्यत्वातिशयः।।७।। लोभेन लिप्सया उपलिप्ता व्याप्ता।।८।। शासनस्वीकारेऽपि सनातनधर्मिजनतां 'हिन्दूकोडबिल', 'अस्पृश्यानां मन्दिरप्रवेशादि' कार्यैः खेदयन्तीति- ऐक्यं दूरीकर्तुं दैवस्यैव सोऽयमभिशाप इत्यर्थः। प्रशस्तं मार्गं त्यक्त्वा उन्मार्गं गन्तुं प्रयासं कुर्वन्ति।।९।। प्राचीना उच्छृङ्खला वेनादयः यथामनीषितं स्वेच्छां साधयितुं चेत् न प्राभवन् तर्हि (तदा) वृद्धानां पितामहादीनाम् अग्रे नप्ता पौत्रः समर्थो भवेत्? पितामहादिषु असफलेषु सत्सु पौत्रः कथं सफलः स्यात्? अपि तु न इत्याशयः।।१०।। तस्य श्रीपतेः गुणानां गाने अवलिप्ता गर्विता।।११।।

## श्लोकाः

(४८)

दर्पान्धीकृतचेतसोऽखिलजगज्जङ्गालदुस्साहसाः
संरुन्धन्ति वसुन्धरामिह महादैत्याः प्रकृत्या खलाः।
तेऽपि त्वद्भ्रुकुटीविलासविहताः क्षुभ्यन्ति पादानताः
संसाराभयदानदक्षिण विभो गोविन्द तुभ्यं नमः।।१।।

अखिलजगति जङ्गालम् उत्कृष्टजङ्घायुक्तम् दृढमित्यर्थः (लच्) दुस्साहसं येषां तेऽपि महादैत्याः भ्रूविलासविहताः अतएव चरणयोरानताः सन्तः क्षोभं गच्छन्ति।।१।।

संदृप्यद्दितिसुतदर्पधर्षिणी सद्-
भक्तानाममृतरसप्रवर्षिणीयम्।
गोविन्द! भ्रुकुटिलता प्रहर्षिणी ते
सम्मोहं दिशतु दयाभिमर्षिणी नः।।२।।

नः अस्मदर्थे दयाभिमर्षिणी दयासंसर्गिणी ते भ्रूलता।।२।।

**प्रोल्लासाय दिवौकसां दितिसुतत्रासाय लीलाकथा-**

**विन्यासाय समस्तभावुकमनस्संविद्विकासाय च।**

**दिव्याभिस्तनुभिः सदावतरतः सम्बिभ्रतः काश्यपीं**

**त्रैलोक्याधिपते! चिरं विजयते गोविन्द ते वैभवम्।।३।।**

मनसः संवित् चेतना, तस्या उज्जृम्भणाय। तनुभिः मूर्तिभिः (एतद्द्वारा एताभिः सह वा)। काश्यपीं पृथ्वीम्।।३।।

**विश्वं चैतदशेषमेव किमपि भ्रूवल्लरीवेल्लना-**

**न्नानाधापि विचेष्टते विधिमुखैर्देवैः कृतप्रश्रयः।**

**भक्तानामभयाय योऽवतरति प्रायो धरित्रीतले**

**गोविन्दाय सदा समस्तजगदानन्दाय तुभ्यं नमः।।४।।**

यस्य किंचिद् भ्रूलतासंचलनात् अशेषमेव एतद् विश्वं नानाप्रकारैः चेष्टां करोति। यः ब्रह्मादिभिर्देवैः कृताश्रयः।।४।।

**यत्कोपाक्तदृगञ्चलेन सुमहादृप्ताः सुरेशादय-**

**श्चर्यां वैनयिकीं पुरा रुचिरया रीत्या समध्यापिताः।**

**तस्याग्रे तव वैभवस्तवभरप्रस्तावनासाहसं**

**संत्यज्य क्षणमानमामि चरणे कर्णे गुणान् वर्तये।।५।।**

यस्य तव कोपाक्तेन दृक्प्रान्तेन कर्त्रा महागर्विष्ठा इन्द्रादयः सुन्दररीत्या (न तु क्रोधप्रकाशनेन) विनयसम्बन्धिनीं चर्याम् विनीतचर्यामिति यावत् शिक्षिताः। तस्य तव अग्रे ते वैभवस्तुतिप्रपञ्चप्रस्तावनारूपं साहसं त्यक्त्वा तव चरणे आनतो भवामि तव गुणांश्च कर्णे आवर्तयामि।।५।।

**येनेदं जगदिच्छया विरचितं येनेदमापूरितं**

**येनेदं रघुरामचन्द्रसदृशैर्भूपैः सनाथीकृतम्।**

**लोकानां स्थितये सतां विधृतये योऽवातरत् स स्वयं**

**सत्सेवोचितपादपद्मविभवो देवो जगद् रक्षतात्।।६।।**

येन देवेन भगवता रघुरामसदृशैर्भूपालैर्जगत् इदं सनाथीकृतं नाथवद् विहितम्। सतां विधृतये धारणाय यः स्वयमवातरत् सः।।६।।

**दृप्यद्धिरण्यकशिपोरुपकण्ठसीम्नि**

**संदर्शितोग्रनखरप्रखरक्रमस्य।**

**गोविन्द ते धृतवतो नरसिंहमूर्तिं**

**तेजोमयं किमपि वैभवमाविरस्तु।।७।।**

उपकण्ठसीम्नि कण्ठसमीपदेशे (उरसि) संदर्शितः प्रकाशितः उग्रनखानां प्रखरः क्रमः येन तस्य। नरसिंहरूपं धृतवतस्ते तेजोमयं वैभवं प्रकाशताम्।।७।।

**नितान्तं गूढानां निगमवचनानामनुगमं**

**न मन्दोऽहं जाने बहुविधविधानेषु धृतधीः।**

**चतुर्दिक् चिन्ताभिर्व्यपगतसुखं यत्नविमुखं**

**मनो मे गोविन्दे सकलसुखकन्देऽभिरमताम्।।८।।**

अनुगमं लक्ष्येषु समन्वयम्। बहुविधविधानेषु नानाविधेषु विधिशास्त्रेषु धृतधीः दत्तमतिः।।८।।

**त्वदाधारादाप्ता किमपि कविता तत्परिचया-**

**दवाचां च प्राचां वचनरचना चाप्यनुकृता।**

**अये मे वाग्ब्रह्मन्निदमनुनये त्वन्तसमये**

**दयालुर्गोविन्दो धृतदृगरविन्दो मयि भवेत्।।९।।**

अवाचां नवीनानाम्। अनुनये प्रार्थये। धृतदृगरविन्दः अर्थात् गोविन्दो मयि दयां कृत्वा दृष्टिलेशं दद्यादिति भावः।।९।।

(४९)

## उपसंहारः

### संस्कृतभाषा

**ययैवादौ सृष्टा नरजगति सभ्यत्वसरणि-**

**र्यदीयं साम्राज्यं क्वचन समये प्राज्यमभवत्।**

**यतोऽमूः सम्भूता जगदुदरसूता नरगिरो**

**गिरासौ गैर्वाणी जयति वरवाणीपरिवृढा।।१।।**

सभ्यत्वसरणिः सृष्टा, सभ्यतामार्ग आविष्कृतः। जगदुदरसूताः जगन्मध्ये उत्पन्ना अमूः नरगिरो मानवानां भाषा यतो यस्याः सकाशादुत्पन्नाः।।१।।

**प्रशस्यायां यस्यां स किल समभूद् दर्शनचयो**

**न कस्यांचिद् वाचि प्रभवति तुला यस्य जगति।**

**सवित्री शास्त्राणामहह महयित्री मतिमतां**

**सतामाविष्कर्त्री मनसि रमतां सा सुरगवी।।२।।**

मतिमतां कौटिल्यार्थशास्त्रादिप्रणेतृणां लोके सम्मानयित्री। नीत्याद्युपदेशेन सतां सज्जनानाम् उत्पादयित्री।।२।।

**पुरा ब्रह्मा यस्यां सविधि वरिवस्यामरचयत्**

**ततो दिव्यज्ञानैर्मुनिभिरभिधानैरपि नुता।**

**पुराणोद्यद्व्यासोदितमतिविलासोत्सवभृता**

**सुराणां सा भाषा मतिमदभिलाषान् सफलयेत्।।३।।**

वरिवस्यां सामादिवेदैरुपासनामरचयत्। मुनिभिः कर्तृभिः अभिधानैः नानानामभि स्तुता। पुराणेषु उद्यन्तो ये व्यासोदिता मतिविलासाः तज्जन्यैरुत्सवैः पूर्णा।।३।।

**यया लोके वेदाः परिकलितभेदाः प्रकटताः**

**स्मृतीनां धात्री या प्रसवनकरी योपनिषदाम्।**

**समस्तत्रैलोक्ये ह्युपदिशति याऽऽध्यात्मिकपथं**

**स्फुरद्दिव्यज्योतिर्जगति जयतान्निर्जरगिरा।।४।।**

परिकलितभेदाः ऋग्यजुरादिभेदसहिताः। या उपनिषदाम्।।४।।

**विराजद्वाणीनामनवधिकवीनां रचनया**

**ययाकस्माद्विस्मापितमिदमहो शिक्षितजगत्।**

**चमत्काराढ्यानां सरसवचसामादिजननी**

**विनीयान्नः कामानधिकृतगवी संस्कृतगवी।।५।।**

विराजन्ती शोभमाना वाणी येषां तेषाम्। शिक्षितजगत् सर्वेऽपि शिक्षिता लोका इत्यर्थः। अधिकृता सर्वभाषासु श्रेष्ठाधिकारधारिणी गैः भाषा।।५।।

**शुभार्थे शस्या या विबुधवरिवस्यासमुचिता**

**प्रशस्याया यस्याः पदमपि सुखं सौति जगताम्।**

**निधात्री धर्माणां सकलसुविधात्री दिविषदा-**

**मियं शर्वाणीव स्फुरतु सुरवाणी मनसि मे।।६।।**

मङ्गलारम्भे 'सर्वमङ्गलमाङ्गल्येति' शर्वाणी शस्या। परलोकादिषु शुभप्राप्त्यर्थं सुरवाण्यपि शस्या।।६।।

मौलिर्वेदोऽस्ति यस्या मुखमुपनिषदः कन्धरा धर्मशास्त्रं

वक्षो वेदान्तविद्या कलय कटितटं दर्शनानीतराणि।

जङ्घान्ये शास्त्रसंघाश्चरणमथ नयो मण्डनं काव्यमेतत्

प्रत्यक्षं वीक्षसे चेत् कथमहह मृता सा हि गीर्वाणवाणी।।७।।

इतराणि दर्शनानि कटितटं कलय। नयो नीतिशास्त्रं चरणम्। प्रत्यक्षं मूर्तिदर्शनेऽपि वैदेशिकाः कथमिमां मृतभाषेति व्यपदिशन्तीत्याशयः।।७।।

स्फुरन्निगमवाङ्मयैः स्फुटकिरीटशोभावती

पुराणरशनावती स्मृतिमनोज्ञमालावती।

इयं मुनिमनीषिणां हृदि सुखासने भास्वती

समस्तसुषमावती सुरसरस्वती सेव्यताम्।।८।।

निगमवाङ्मयैः वैदिकसाहित्येन। अष्टादशपुराणैः रशनावती। भास्वती देदीप्यमाना।।८।।

स्फुरन्निगमभास्वती वरविवेकिविद्वत्कला-

विलाससुषमावती सुमनसां सुखं तन्वती।

सनातनसुनीतिभृद्धृदयमन्दिरे जाग्रती

जयत्यमरभारती जगति सर्वधामोज्ज्वला।।९।।

विद्वत्कलाविलासेन सुषमावती। सुनीतिभृतां विदुषां हृदयमन्दिरे। सुमनसां देवानां पण्डितानां च। अमरभारती सरस्वती संस्कृतवाणी च।।९।।

चिरममरतां मर्त्यानां या तनोति निषेविता

सकलजगतामीशेनापि स्फुटं मुकुटे धृता।

जयति जगतीकल्याणार्थे दृढं दधती व्रतं

नवरसवती दिव्या स्रोतस्वती सुरभारती।।१०।।

दिव्या स्रोतस्वती गङ्गा। मर्त्यानाममरतासम्पादनादि उभयत्र समानम्। गङ्गा एकरसवती, सुरभारती तु शृङ्गारादिनवरसवतीति विशेषः।।१०।।

पदपरिगुम्फो वर्णमैत्रीमनुयाति यत्र

भाति जगज्जैत्री भावकल्पनकला तुरी

दासा इव वाचमनुगच्छन्त्यनुप्रासा यत्र

प्रमदविकासाद् याति मानसीयमातुरी।

गैर्वाणीगुणैरेवात्र सूयते यशःपटोऽपि

शुष्कतार्किकाणां तिरोगच्छति वेमा तुरी

मानसमुपेतया यया चामृतमाचामन्ति

वाचामुपगुम्फनाय सा चातुरी चातुरी।।११।।

भावानां या कल्पनकला सैव तुरी तूलिका लेखनीति यावत्। प्रमोदस्य विकासात् इयं मानसी आतुरी मनसः आतुरता याति। गुणैः तन्तुभिः पटः सूयते उत्पाद्यते, इह तु जगत्प्रसिद्धैः संस्कृतभाषाया गुणैः यशःपटः सूयते। अतएव तार्किकाणां मते पटनिर्माणस्य साधनभूतास्तुरीवेमाद्या इह तिरोहिता भवन्ति। मानसमुपेतया यया चातुर्या अमृतमास्वादयन्ति।।११।।

तिमिरमपास्य ययैवादौ ज्ञानमाविष्कृतं

शासनमुपाहितं ययैव विबुधोत्सवाय

यस्याः सेवनेन कविलोका यान्त्यमरपदं

यामिह वदन्ति प्रभवित्रीमात्मशोधनाय।

वासौ सर्वमङ्गला न केवलमिहैव लोके

सेयं दिव्यलोकेष्वपि भूरिभव्यवैभवाय

लोकद्वयकल्याणी शुभावहाथ शर्वाणीव

सेयं सुरवाणी जनिं लेभे जगतः शिवाय।।१२।।

शर्वाणी पार्वती इव सुरवाणी, ततश्च सर्वमुभयसमन्वयि। विबुधानां देवानां पंडितानां च उत्सवाय शासनं दुष्टान् दमयित्वा लोकनियमनं यया भगवत्या कृतम्, शासनं शास्त्रं यया देववाण्या स्थापितम्। आत्मशोधनाय अन्तःकरणपावनाय। सर्वमङ्गला तन्नाम्नी भवगती, सर्वाणि मङ्गलानि यस्याः सकाशात्सा वाणी। स्पष्टमन्यत्।।१२।।

पण्डितप्रशस्यपरिणद्धपदगुम्फवती

चित्तचमत्कारिलसदर्थतो यशस्वती

नृत्यद्वरवाणीमणिनूपुरनिनादनिभा

श्रवणमुपागतैव मह्यते महस्वती।

मञ्जुनाथ! मायामृगतृष्णामोहमूढानपि

प्राणिनः पुनाति या हि पावनपयस्वती

**भासते सभासु समुल्लासितविलासरसा**

**गोविन्दानुरागरसात् सरसा सरस्वती।।१३।।**

नृत्यद. सरस्वतीनूपुरनादवत् मनोहरा या श्रुतमात्रैव अभिनन्द्यते। महस्वती तेजस्वती। मायारूपा या मृगतृष्णा तस्या मोहेन मूढानपि। वाणी गोविन्दप्रेमरसादेव सरसा सती सभासु प्रशस्या भवतीत्यर्थः।।१३।।

**गीयतां गृहे गृहेऽद्य गुण्या गुणगीतिर्हरे-**

**र्नित्यं नगरेषु प्राच्यसभ्यता ह्युदीयताम्**

**दीयतां जनेन पुण्यसेवायामजस्त्रं मनो**

**धार्मिकजनोऽद्य विद्यावैभवे प्रचीयताम्।**

**चीयतां चतुर्दिग् धनधान्यधामलक्ष्मीरियं**

**भूरि भारतीयं यशः सर्वतो निधीयताम्**

**धीयतां मनस्सु देववाणी तत्त्वविज्ञैर्नरैः**

**काममनभिज्ञैरियं जातु प्रविगीयताम्।।१४।।**

भारतस्य नगरेषु साम्प्रतं प्राच्यसभ्यता भारतीयसभ्यता उदीयताम्, संसर्गजा पाश्चात्यसभ्यता मा। प्राचीयतां वर्द्धताम्। भारतीयं भारतवर्षसम्बन्धि। निधीयतां स्थाप्यतां जनैः। कामं यथेच्छम्। विगीयतां निन्द्यताम्।।१४।।

**इह सकलभाषाजन्मदा का? भास्वती सुरभारती**

**वद, वेदजननी का? जगत्योजस्वती सुरभारती।**

**अनुपमसरससाहित्यधनिका का? सती सुरभारती**

**वद, भारतानुगता भवेत् का भारती? सुरभारती।।१५।।**

यावन्मात्रभाषाणां जन्मदात्री का? (प्रश्नः)। सुरभारती (उत्तरम्)। एवमग्रेऽपि। साहित्येन धनिका का? भारतस्य अनुरूपा भाषा का? उत्तरम्- सुरभारती। यत इदं भारतम्, सा भारती।।१५।।

**नित्यं निजसेवकानाममरपदं ददाति**

**मानसं पुनाति या वै महितमहस्वती**

**लोकसमुद्धारायैव यद्धाराप्रवाहो भाति**

**पापपरिहारार्थे या प्रथितयशस्वती।**

आदिजननीति जनाद् गौरवमुपेता या च
विष्णुपदस्पर्शोचितपावनपयस्वती
देशपरिपावनाय बाढमियमोजस्वती
निर्जरसरस्वतीव निर्जरसरस्वती ।।१६ ।।

निर्जरनदी गङ्गा इव निर्जरसरस्वती संस्कृतभाषा। महितमहस्वती पूजनीयतेज:शालिनी। गङ्गाया धाराया: प्रवाह:, अमरवाण्या अविच्छिन्न: प्रसार: (सुव्यवस्थितत्वेन निस्संदेहतया मध्येऽवरोधाभावात्) दिव्यप्रभावतया आदिजननी (गङ्गा), भाषाणामुत्पादिका (संस्कृतभाषा)। गङ्गा विष्णुपदोद्भूतैव, संस्कृतभाषा अध्यात्मज्ञानप्रदतया भगवच्चरणप्रापिका। अन्यदुभयत्रापि स्पष्टम्।।१६।।

## वेदाः

सर्गादौ निसर्गात्स्वयमेव प्रादुरासन् पुरा
शब्दब्रह्मरूपा येऽभिरूपा[1] विनिगद्यन्ताम्
मानवसमाजे यैः प्रबोधज्योतिराविष्कृतं
सभ्यताप्रणालीं येन[2] जग्मुर्निरवद्यं ताम्।
माहात्म्येन येषामार्यजातेर्मौलिरुन्नतोऽस्ति
तन्मे विनयोऽस्ति बुधैरेते[3] प्रतिपद्यन्ताम्
दूरीकृतदारुणदुरन्तप रखेदा इमे
वन्दनीयवेदा भवभेदायोपपद्यन्ताम्[4] ।।१७।।

१. सुन्दराः। २. ज्ञानज्योतिषा तां सभ्यतापद्धतिं निरवद्यं निर्दोषं यथा स्यात् तथा जग्मुः (मानवाः)। ३. वेदाः प्रतिपद्यन्तां शरणीक्रियन्ताम्। ४. भवस्य संसरणस्य भङ्गाय।।१७।।

कल्पादौ स्फुरतां य एष जगतां जीवातवे[1] जज्ञिवान्
भूतानां भविकाय[2] यः प्रथितवांस्तांस्तान् विधिप्रस्तवान्।
विज्ञानोच्चयवानशेषशुभवान् विद्याभिरुद्द्योतवान्
संवित्सौभगवान्[3] स वेदभगवान् भूयः समुज्जृम्भताम्।।१८।।
चञ्चन्तोऽतिचिरं[4] चतुर्मुखमुखाच्चित्रं चतुर्दिक्षु ये
चातुर्वर्ण्यमिदं चतुर्युगचये[5] संचारयन्तेऽन्वहम्।

चित्ते चिन्तयतां चतुर्भुजभुजावद्[६] ये चतुर्वर्गदा

वेदांस्तांश्चतुरो विचारचतुरो नार्चेत कश्चेतसा?।।१९।।

यैरादौ भुवनेषु पावनतमं तज्ज्योतिराविष्कृतं

यस्याग्रे[७] स्वयमेव सर्वजगतां मूर्द्धा नतो जायते।

सर्वस्यौषधयः प्रबोधनिधयः पीयूषपाथोधय[८]-

स्ते वेदाः सकलाभिनन्द्यविधयः[९] प्रोद्यन्तु नः सिद्धयः[१०]।।२०।।

मखे येषां मन्त्रैर्विधिविहित तन्त्रैर्नियमिताः[११]

सुरेशाद्याः सर्वे त्वरितमुपतिष्ठन्त्यभिमुखम्।

पुनन्तो विश्वानि प्रतिपदमवन्तो जगदिदं

क्षमन्तां ते वेदा दुरितभयभेदाय[१२] भवताम्।।२१।।

छन्दः पादौ तु यस्याः, नयनमकलुषं ज्योतिषां, घ्राणमस्याः

शिक्षा, कल्पस्तु हस्तौ, मुखमिदमुदितं विस्तृतं शब्दशास्त्रम्।

यस्याः श्रोत्रं निरुक्तम्, त्रिभुवनमभवद् भासितं यद्विभासा

श्रीविष्णोर्वेदनाम्नी जयति विजयजस्त्रग्धरा[१३] मूर्तिरेषा।।२२।।

१. जीवनौषधाय जातवान्। २. प्राणिनां कल्याणाय यो विधिशास्त्राणां प्रस्तवान् प्रकरणानि प्रथितवान् प्रख्यापितवान्। ३. विज्ञानसौभाग्यशाली। ४. ब्रह्मणो मुखान्निस्सृत्य चञ्चन्तः प्रकाशमानाः। ५. कृतयुगद्वापरादिषु ये चातुर्वर्ण्यं ब्राह्मणक्षत्रियादिजातिसमुदायम् संचारयन्ति प्रचारयन्ति। ६. चतुर्भुजस्य विष्णोः चतस्त्रः भुजाः यथा चिन्तयतां (स्मरणकर्तृणाम्) धर्मार्थादिपुरुषार्थचतुष्टयदास्तथा इमेऽपीत्यर्थः। ७. वैदिकविज्ञानज्योतिषः। ८. सागराः। ९. सकलैरभिनन्दनीयानि विधिशास्त्राणि येषां ते। १०. अस्माकं सिद्धिरूपाः प्रोद्यन्तु प्रकृष्टमुदयं लभन्ताम्।। ११. विधिविहितानि तन्त्राणि उपाया येषु तैः (मन्त्रैः)। १२. पापभयदूरीकरणाय क्षमन्तां समर्था भवन्तु।। १३. विजयजां (विजयलब्धाम्) स्त्रजं धारयति विज्ञानविषये त्रिभुवने सर्वेषां विजेत्री।।१९-२२।।

## दर्शनानि

मानवसमाजे सत्यमार्गमुपादिक्षन् यानि

ज्योतिर्जननानि जनजीवने विमृश्यन्ताम्

मानुषातिशायिनो विचारान् विमृशन्तो यत्र

चित्रमुपयन्तो बुधा वैदेशिकाः स्पृश्यन्ताम्।

आर्यसभ्यतायाः स्फुरद्विजयपताकासमा-

न्यतुलितराकाभाणि परमं प्रकृष्यन्ताम्

तत्त्वानां विमर्शनानि गूढतलस्पर्शनानि

पुण्यपरामर्शनानि दर्शनानि दृश्यन्ताम्।।२३।।

जनजीवने जनानां जीवनचर्यायां प्रकाशजनकानि। यत्र येषां दर्शनानां विषये मनुष्यबुद्धेरतिशायिनः अलौकिकान् विचारान् विमृशन्तः विचारयन्तः चित्रमाश्चर्यमुपगच्छन्तः वैदेशिकाः मैक्समूलरादयो बुधाः पंडिताः स्पृश्यन्तां परिचीयन्ताम्। अतुलिता राकायाः पूर्णिमायाः भा इव भा येषां तानि। पुण्यः परामर्शो येषां तानि।।२३।।

प्रसङ्गतः 'काशी'

एकतः सभासु यत्र भाति सुरभारतीय-

मन्यतस्तु सेयं सुरतटिनी विराजते

एकतोऽन्नपूर्णाविश्वनाथवैभवं विभाति

परतोऽथ यत्र विद्यावैभवं प्रकाशते।

चित्रं चिरकालादैतिहासिकमहत्त्वभृता

विद्वद्गणसंवृता जगत्सु निकषायते

नूनमियमेकत्रैव राशीकृतपुण्यत्रया

विप्रैः सुप्रकाशीकृता काशी भूरि भासते।।२४।।

निकषायते पाण्डित्यस्वर्णपरीक्षणाय निकष इवाचरति।।२४।।

प्रार्थना

न्यस्यते न वल्गद्वर्णमैत्रीमृते किंचित् पदं

ज्योत्स्नाजालजैत्री यत्र कान्तिः कमनीयासौ

प्रोल्लसद्विलासाः स्वयं सज्जन्त्यनुप्रासा यत्र

चित्तसमुल्लासानुगा शैली मननीयासौ।

श्रीगोविन्दचारुचरणारविन्दचर्चा वशा-

दर्चामधिगम्य माननीयैर्महनीयासौ

प्रस्फुरत्प्रसादा सहकारमञ्जुमञ्जरीव

पुण्या पद्यपञ्जरी रसज्ञै रसनीयासौ।।२५।।

यत्र पद्यपञ्जर्याम् वर्णमैत्रीं विना किमपि पदं न न्यस्यते। ज्योत्स्नासमूहतोऽप्यधिका यत्र कान्तिः (प्रकाशः, प्रयुज्यमानपदेषु लोकोत्तरशोभारूपमौज्ज्वल्यं च)। गोविन्दचरणचर्चावशाद् अस्यां पूज्यभावं प्राप्य महापुरुषैः इयं पञ्जरी आदरणीया। प्रस्फुरन् प्रसादः लोकोल्लासनम् तन्नामकः काव्यगुणश्च यस्यामेवंविधा पद्यपञ्जरी (समूहः), आम्रमञ्जरीव रसनीया। रसज्ञैरित्यनेन आम्रमञ्जर्या यथा भ्रमरादयः केचिदेव रसवेदनाधिकारिणस्तथा अस्या अपि केचिद्विरला एव मार्मिका इति सूच्यते।।२५।।

* * *

# मुक्तककाव्यानि

## प्रकृतिपर्यवेक्षणम्

## ( सुजन-दुर्जनसङ्कीर्तनम् )

वहते न कलङ्कलङ्घनं सहते न प्रतिपक्षसंक्षयम्।
सुजनो विधुनोति तां श्रियं शशिनोऽप्येष नितान्तकान्तिमान्।।१।।
परितः पिहितोऽपि दुर्जनैः सुजनस्तान् स्वगुणैरनर्घयेत्।
अपि निम्बकदम्बनिह्नुतः सकलांश्चन्दनयेद्धि चन्दनः।।२।।
न विमुञ्चति दुर्जनो निजामिह निर्हेतुकवैरकारिताम्।
सुजनोऽपि च नो विमुञ्चते निजनिर्मायपरोपकारिताम्।।३।।
सुजनो हि परीक्षणे विपत्प्रतिपन्नोऽपि तनोति पुण्यताम्।
निकषे कषितं च निर्दयं कनकं काञ्चन भासमर्पयेत्।।४।।
अधिकाधिकमुज्ज्वलं वहन् ननु रूपं भवति प्रियः सताम्।
मुकुरः किल भूतिमर्दितः सुजनो दुर्जनदुर्वचोऽर्दितः।।५।।
कटुकूटवचोनिपीडितः सुजनो दुर्नहनैः सुदुर्जनैः।
न भिनत्ति निसर्गसौरभं घनघृष्टो हरिचन्दनो यथा।।६।।
प्रियमावहते हि विच्छलं सुजनो हन्त न लक्षितोऽपि सन्।
मधुरं रसमुद्गिरत्यसौ तिमिरेऽप्यारसिता हि शर्करा।।७।।
परितः परितापितोऽपि सन् सुजनो नोज्झति शीलमात्मनः।
रुचिमावहते समुज्ज्वलां कमनीयः कनकाञ्चलो यथा।।८।।

---

श्लो. १. कलङ्कात् अपवादात् लङ्घनं तिरस्कारम्। प्रतिपक्षात् शत्रोः संक्षयं हानिम्।
चन्द्रपक्षे- प्रतिपक्षं प्रत्येकपक्षे संक्षयं कलाहानिम्।

२. अनर्घयेत् निर्दोषान् कुर्यात्।

४. काञ्चन भासम्-अनिर्वचनीयां कान्तिम्। सुवर्णपक्षे-सुवर्णकान्तिम्।

५. दुर्नहनैः-दुर्दमैः।

६. रुचिम्-उत्तमामिच्छाम्। कनकपक्षे-कान्तिम्। कनकाञ्चलः-कनकखण्डः।

अपि दुर्जनजालकीलितः सुजनोऽनक्ति महत्त्वमात्मनः।
अशुचौ भवनेऽपि शारदः शशभृद् व्यञ्जयते निजां रुचम्।।९।।
परिताम्यति नो, न गर्हते, वहते नाऽपि रुषं, न बाधते।
अपि दुर्जनदुर्विचेष्टितैः सुजनः स्वे हृदये हृणीयते।।१०।।

('वर्णिका' रूपेण व्रजभाषाप्रसिद्धेन 'कुण्डलिया' छन्दसा)

सज्जनमैत्री सन्ततं स्नेहभरं पुष्णाति।
क्रमशो वृद्धिमुपागता दोषानपि मुष्णाति।।
दोषानपि मुष्णाति निर्गुणे गुणमाधत्ते।
निर्वेदं निर्वास्य मनसि सम्मोदं दत्ते।
सत्कार्येषूत्साहवर्द्धिनी जडताजैत्री।
स्नेहसार-विश्रम्भसन्तता सज्जनमैत्री।।११।।
दुर्जनमैत्री पूर्वतः प्रीतिं प्रकटयतीव।
स्वार्थविभङ्गे कुत्रचित् स्नेहं विघटयतीव।।
स्नेहं विघटयतीव बहिः सद्भावं भजते।
मुखमात्रे मधुरत्वमेति हृदि कल्मषमयते।।
असमक्षे मित्रस्य गुह्यमपवादानेत्री।
स्वार्थमात्रसाराऽस्ति सखेऽसौ दुर्जनमैत्री।।१२।।

---

१. अनक्ति-प्रकटयति।

२. हृणीयते-लज्जते।

* * *

# समस्यापूर्तयः

यत् प्रशस्तिरपहस्तिताशुभा वस्तुतस्तुदति विघ्नविस्तरम्।
तत्समस्तशुभकर्मसु स्तुतं वस्तु हस्तिमुखमस्तु नः श्रियै।।१।।

न नरता भविता मुखवैकृतान्न हरितापि च पुच्छविनाकृता।
उभयतो विपरीतविचेष्टितो नरहरिर्न हरिर्न नरः स्मृतः।।२।।

विक्राम्यन्नपि वीरेषु कूटादुद्विजते[1] बली।
दन्तिनामन्त्रहृद् यन्त्रमृगात्[2] सिंहः पलायते।।३।।

देशे गोवंशनाशस्य प्रचलेच्चेदयं क्रमः।
कालेन कियतापि स्यात् तक्रं शक्रस्य दुर्लभम्।।४।।

हिमपातेन वातेन शीते नीते प्रचण्डताम्।
तिष्ठतां हर्म्यपृष्ठेऽस्मिन् चित्रं चन्द्रायते रविः।।५।।

विद्युद्दीपकृतोद्द्योतं पोतं वीक्ष्य पयोनिधौ।
विशोकैर्विविदे लोकैः समुद्रादग्निरुत्थितः।।६।।

प्रावृषि प्रेक्ष्यते प्रायो न चन्द्र इति मन्महे।
द्वादशस्वपि मासेषु तिथयो दश पूर्णिमाः।।७।।

मासद्वयवियोगे ते शशाङ्कमुखि! वीक्षिताः।
द्वादशस्वपि मासेषु तिथयो दश पूर्णिमाः।।८।।

ग्रीष्मावकाशमुल्लङ्घ्य[3] यान्ति चन्द्राननां विना।
द्वादशस्वपि मासेषु तिथयो दश पूर्णिमाः।।९।।

---

१. कूटम् = Gunpowder

२. यन्त्रमृगात् = Rifle रूपान्मृगात्।

३. ग्रीष्मावकाशः=। अध्यापनकार्यात् प्रवसतः, केवलं ग्रीष्मावकाशे स्वगृहात् प्रत्यागच्छतः कस्यचिदुक्तिरियम्।

देशे पूर्वा पत्नी, वृता युरोपेऽपरा, ततः किं स्यात्।
पाल्यं पाणिनिवचनं, विप्रतिषेधे परं कार्यम्।।१०।।

चिरस्य वैरी मम चन्द्रिरोऽसौ सम्यग् जितो भूमिकया तवैव।
इति प्रसन्ना तरुणि! त्वदास्यचन्द्रोदये नृत्यति चक्रवाकी।।११।।

निशम्य नूनं भवतोऽभियानं भूमीन्द्रधौरेय! विपक्षलक्ष्मीः।
कथं न वित्रस्यतु? किं वराकी चन्द्रोदये नृत्यति चक्रवाकी।।१२।।

मान्यः समाजे[1] न कथं महौजाः स्वामी दयानन्दमहोदयोऽयम्।
येनार्पितः प्रोज्झितपत्रलेखे सिन्दूरबिन्दुर्विधवाललाटे।।१४।।

करसरोरुहशायि-विपाण्डुरच्छविमुखेन्दुरलं बत निःश्वसन्।
नयति धर्मदिनं विरही स दृक्कुवलयं कलयन् जलयन्त्रवत्।।१५।।

आचञ्चत्सुमनोऽञ्चितस्य[2] विलसत्सुग्रीवमुन्मीलतो
लोकानुत्सवकारिणो विभवतोलङ्कायसङ्काशिनः।
नित्यं पुण्यजनानुषङ्गसुखिनो वोढुः सुनीलश्रियां
श्रीरामस्य, दशाननस्य, कबरीभारस्य चैकः क्रमः।।१६।।

गङ्गातीरे प्रहेष्यन्नपरिचितपुरस्थानकं कञ्चिदारात्
कश्चिद् बी. ए.- पदाढ्यः क्रमसममलिखन्मार्गगस्थानचित्रम्।
तद् दत्त्वा तस्य हस्ते क्रममिममभवद् बोधयन् मार्गमेनं
सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः।।१७।।

अपि पिशुन! यथेच्छं चापलं दर्शयेस्त्वं
न किल तव कुचक्रे मादृशां धर्षणा स्यात्।

---

१. 'आर्यसमाजे' विधवानां विवाहो विहितः।

२. श्रीरामस्य, दशाननस्य, कबरीभारस्य च पक्षे विशेषणानि श्लेषविधयाऽन्वयन्ते। श्रीरामः-चञ्चद्भिर्देवैरञ्चितः, सुग्रीवसखः, लोकानन्दकः, लङ्काया अभिषेणकः, सज्जनसेवितः, नल-नीलादिवानरैः शोभमानः। दशाननः-कम्पमानैर्देवैर्भियाऽञ्चितः, अनेकाभिर्ग्रीवाभिर्विलसन् लोकानां खेदकरः, लङ्कापुरीसमीपस्थः, पुण्यजनैः (रक्षोभिः) अनुगतः, सुनीलादिपरिजनैः सेव्यः। कबरीभारः-सुन्दरैः कुसुमैः शृङ्गारितः ग्रीवायां विलसन्, उत्सवकरः विभवेन कायस्यालङ्कारकः सौभाग्यशालिभिः सेव्यः, कृष्णवर्णशोभाधरः।

समयगतिमहिम्ना दुर्बलत्वेऽपि किं वा
मशकदशनमध्ये दन्तिनः सञ्चरन्ति।।१८।।

नृपतिभवनघूकैरेतकैर्जञ्जपूकै-
र्नवनयनिगृहीतान् देशनेतॄन्[1] निरीक्ष्य।
सुचिरमुचितवक्ता वक्तुमीशीत नूनं
मशकदशनमध्ये दन्तिनः सञ्चरन्ति।।१९।।*

गुरुभिरभिहतोऽपि प्रेमतो नाऽपठस्त्वं
पठनसमयमेनं क्रीडयाऽयापयस्त्वम्।
पठितशिशुपरीक्षाऽऽसन्दिकाऽऽसादिनस्ते
किमिह मुखविकारैरद्य दैन्यावतारैः।।२०।।

घोरश्यामाङ्गभासामथ दुरितकृतश्यामताऽऽधिक्यधाम्नां
दैत्यानां देहवर्णप्रतिफलनमिलत्कज्जलश्यामलत्वैः।
शत्रूणां पापकृष्णाक्षतजकवलनान्नीतनैल्याद् दुरन्तै-
र्दन्तैर्जम्बूफलाभैः परिहरतु भयं पातु मां भद्रकाली।।२१।।

पिता पञ्चास्यो यं स्ववसुतनुभिः सार्द्धमय चा-
ऽऽष्ट धात्र्योऽथ भ्राता रसमितमुखो यं हि ददृशुः।
यमेनं गङ्गा भैरवयुगलमैक्षन्त, तदयं
गणेशो नः पायान्नवतिनयनैः पीवरतनुः।।२२।।

बाढं मार्दववानपि प्रणयवान् लोके समाजग्मिवान्
न च्छायां क्षणमाप्तवानिह दिवा दीव्यन् कलावानिव।

---

१. भारतस्वातन्त्र्यसमरसमये वैदेशिकानां पिशुनैः कृतानामपचाराणां कारणान्निगडितान् गान्धिप्रमुखान् देशनेतॄनुद्दिश्य।

* यदा अहं बाल आसं, तदा मदीये जन्मस्थले तिरुवारूर्-नाम्नि जगन्नाथ इति युवा आन्ध्रदेशादागतो वश्यवाक् कविः प्रायोऽस्मद्गृह एव वसन्नासीत्। 'अष्टावधाने' कुशलः स कदाचिदष्टावधानप्रदर्शने समस्यामेतामेव दत्तः, एतमेव चाशयमादाय पूरितवान् श्लोकम्- "सकलसुकरवाक्या देशसंरक्षणार्थे करधृतवरदीक्षा गान्धिमुख्या महान्तः। कुटिलहृदयहूणाधीशराज्याभिधाने मशकदशनमध्ये दन्तिनः सञ्चरन्ति।।" इति।। डॉ. वेङ्कट-राघवन् महाभागैः टिप्पणी प्रकाशिता "संस्कृतप्रतिभा" या स्तस्मिन्नङ्के तत्सम्पादकत्वेन यस्मिन् 'समस्यासन्दोह' शीर्षकेण पद्यानीमानि प्रकाशमभजन्।

रात्रौ निद्रितवान् कथञ्चन सुखस्वप्नान् हि यान् दृष्टवान्
प्रातर्लोपितवानिमान् कुहकवान् भास्वान्नभस्वानिव।।२३।।

नव्ये युगेऽत्र परितः प्रसृते प्रजानां
तन्त्रे विलोपितपुरातनराजतन्त्रे।
हा हन्त! भारतनभोऽङ्गणमध्यदेशे
नक्षत्रराजिरिव राजति राजपङ्क्तिः।।२४।।

चित्रं चमत्कारकचारुचर्यश्चोलेन्द्रचूडासु चरेच्चिराय।
चिराच्चिरत्नैरपि चिन्त्यमानश्चकास्ति चेच्चेतसि चन्द्रचूडः।।२५।।

सभ्यैः सञ्चितसौहृदः सुकृतिनां सम्यक् पदं सम्पदः
सर्वेषामपि सांयुगीनसुधियां सद्यः समुत्साहदः।
सान्द्रस्निग्धसमासदः सुमनसां सिध्यत्स्वयंसंमदः
सोऽयं संप्रति सेव्यतां सहृदयैः सङ्घः सतां सौख्यदः।।२६।।

सम्मूर्च्छत्सहकारसौरभसुखः सोल्लाससौगन्धिकः
शृङ्गारोत्सुकसुन्दरीसमुदये सज्जत्सिताम्भोरुहः।
स्फूर्जत्सुन्दरसिन्दुवारसरलः सत्सल्लकीसर्जकः
सेव्योऽसौ सुरभौ स्रवत्सुमनसां सङ्घः सतां सौख्यदः।।२७।।

नोपैषि कविभूपालान्वाचालान्बहु मन्यसे।
न किं परीक्षसे राजन्! रत्नं रत्नं तृणं तृणम्।।२८।।

यथोपकुरुतेऽनर्घ्यं तथैवावसरेऽधमम्।
तस्मात्सञ्चिनुयात्सर्वं रत्नं रत्नं तृणं तृणम्।।२९।।

वक्तुर्मञ्चोपरि परिगतान् दीर्घदीर्घैर्निबन्धैः
कालक्षेमॄन् सदसि जनता मादृशान् क्रोशतीयम्।
ये तु स्निह्यत्सरसवचसो मानसं मोदयन्ते
तेषां सूक्तीर्वदतु न पिपासन्ति सन्तः कियन्तः।।३०।।

गुणलवमुपयन्तस्तीव्रगर्वं वहन्तः
स्वमनसि कवयन्तः सन्ति नो मादृशाः के।

निरवधि गुणवन्तः प्रश्रयं दर्शयन्तः
कविसदसि लसन्तः सन्ति सन्तः कियन्तः ।।३१ ।।

मलयमारुतकम्पितमाधवीमधुसमाहृतमन्मथविभ्रमा।
अतितमामिह मूर्च्छति मानिनीष्वनुपमा सुषमा कुसुमाकरे।।३२ ।।

पुष्यत्पद्माकरे भ्राम्यद्भ्रमरौघसुखाकरे।
नन्दत्सुधाकरे साधु सुषमा कुसुमाकरे।।३३ ।।

व्रजकुलयुवतीनां मज्जतीनां व्रतान्ते
तटगतपटभारं कृष्ण किं नीतवांस्त्वम्।
निशमय शिशिरेऽपि प्रेक्ष्य पुंसो ह्रियेयं
प्रविशति जलमध्ये शीतभीता मृगाक्षी।।३४।।

अन्त्याक्षरीं समारभ्य दध्मः सूक्तिझरीं मिथः।
एतदेव हि बालानामस्माकं[१] युद्धमुद्धतम्।।३५ ।।

अन्यथा तु कथामात्रे वृथाकलहकारिणाम्।
गुरुवाक्येष्वरालानां[२] बालानां युद्धमुद्धतम्।।३६ ।।

नवे वयसि विस्तरादुदरदेवपूजापराः
स्तुवन्ति परमादरादिह विदेशिभाषां नराः।
अहो परिणते वयस्यपि शुभोचिते हन्त तै-
र्न किं भुवनभास्वती सुरसरस्वती सेव्यताम्।।३७।।

स्फुरन्निगमवाङ्मयैः स्फुट-किरीटशोभावती
पुराणरशनावती स्मृतिमनोज्ञमालावती।
इयं मुनिमनीषिणां हृदि सुखासने भास्वती
समस्तसुषमावती सुरसरस्वती सेव्यताम्।।३८।।

पणान् परिगणय्य ये तदनु सेवनं कुर्वते
इयं भृतकपद्धतिर्भवतु भूपभाजाऽन्तिके।

---

१. अध्ययनशीलानां बालानां युद्धमपि काव्यस्पर्धादिपूर्णं भवति।

२. गुरुजनानां वाक्येषु अरालानां कौटिल्यं प्रदर्शयताम्।

अये द्विजपुरन्दराः, न किल वेतनाऽऽशावशा-
दियं तु जननीव नः सुरसरस्वती सेव्यताम्।।३९।।

दिव्या वाक् संस्कृताऽसौ गुणगणमहिता सभ्यतामूलभूता
सेव्याऽसौ भारतीयैरिति बत शतधा संलपामः सभायाम्।
क्षन्तव्यं किन्तु हन्त! स्वगृहशिशुजने पत्रलेखे कथाऽऽदौ
तामेतां संलपन्तः सदसि वदत नः सन्ति सन्तः कियन्तः।।४०।।

जने जने तुष्यतु भारतीयं गृहे गृहे पुष्यतु भारतीयम्।
विज्ञानमुन्मीलतु भारतीयं यशः पुनर्भ्राजतु भारतीयम्।।४१।।

रसैस्तर्पयित्वा मनो मोदयन्ती मिलन्मञ्जुमाधुर्यमेदस्वतीव।
अलङ्कारशोभावती रम्यरीतिर्जगज्जाग्रती भास्वती भारतीयम्।।४२।।

निसर्गनिस्त्रिंशमकाण्डकोपिनं खलं श्रुतैर्यो विनिनीषते जनः।
असंशयं तेन विधातुमिष्यते हुताशनश्चन्दनपङ्कशीतलः।।४३।।

सततविततदोरैर्व्याततता व्योम्नि पौरैरहह पतगिकाऽसौ[1] वीक्ष्यतां वेश्मपृष्ठे।
सकुतुकमलमेतत्प्रेक्षकैरेवमूचे भ्रमति गगनमध्ये कच्छपी पक्षहीना।।४४।।

नेत्रे खञ्जनगञ्जनां मुखमिदं राकेन्दुसंह्लेषणां
कण्ठः कम्बुविडम्बनां मृदुपदे पकेरुहोत्तर्जनाम्।
अङ्गान्युन्मदमालतीमलिननं गात्रत्विषो यौवनं
कुर्वाते कुरुते करोति कुरुतः कुर्वन्त्यलं कुर्वते।।४५।।

शूलं मूलाद्विहिंस्तात्सुखमुपनयताद् विव्यताद्विद्विषो मे
भद्रक्षेमप्रभावानिह दधतुतमां किल्विषं मे गृणीतात्।
ऐश्वर्यं संविधत्ताद् भयमपदहतादित्थमीडे भजेऽहं
शूली शम्भुः पिनाकी शिवभवपशुपाः शर्व ईशश्च भर्गः।।४६।।

श्रीकण्ठः कृत्तिवासाः प्रमथपतिरुमावल्लभो व्योमकेशो
भूतेशो वामदेवः शिशुशशिमुकुटः शङ्करः शूलपाणिः।

---

१. पत्रनिर्मित-''पतङ्ग''ख्य (Kite) - लेखनकं दोरकबद्धं वायुवेगादुड्डाय्य भारतीयाः क्रीडन्ति। तामिमां पतगिकां निरीक्ष्योक्तिरियम्।

सर्वज्ञो नीलकण्ठस्त्रिपुररिपुरहिर्बुध्न्य उग्रोऽष्टमूर्तिः
शूली शम्भुः पिनाकी शिवभवपशुपाः शर्व ईशश्च भर्गः।।४७।।
यैर्विज्ञैर्गुणगुम्फिता मधुमयी वाणी प्रमाणीकृता
यैर्वा देशहिताय सम्प्रकटिता लोकेऽद्भुता वीरता।
तानेतानितिहास एव किमयं ब्रूतेऽन्तरात्माऽपि नो
येऽन्ये विस्मृतिसागरे निपतिताः ते के? न जानीमहे।।४८।।
त्वत्सेवितां भारति! भारतेऽस्मिन्नितोऽधिका दीनदशापि का स्यात्।
दुष्टानुपास्यापि यदेव लब्धं शाकाय वा स्याल्लवणाय वा स्यात्।।४९।।
वैद्येन्द्र! षण्मासमहान्तरेऽस्मिन् न जातु जिह्वालवणेन लीढा।
तदेव पथ्यं[1] मम कथ्यतां यत् शाकाय वा स्याल्लवणाय वा स्यात्।।५०।।
आस्यात्प्रवृत्ताखिलशास्त्रलास्या विदोऽपि काश्या न किमद्य हास्याः।
येषामुपास्यापि[2] शठस्य दास्यात् शाकाय वा स्याल्लवणाय वा स्यात्।।५१।।
जपानकचमूपतिर्लघुनिषङ्गिसिङ्गापुरे[3]
प्रचण्डबलविक्रमं ब्रिटिशसिंहमाहन्ति चेत्।
तदेवमवपूरिताऽनवधृता समस्याऽप्यसौ
करीरकुहरे करी परिलुनाति पञ्चाननम्।।५२।।
नवीनकालेऽप्यनवीतमानसो न हीनवृत्तिं प्रलयेऽपि शीलयेत्।
मनस्विनोऽसून् ददते बताञ्जसा मलीमसामाददते न पद्धतिम्।।५३।।
निरन्तरं सन्तमसान्धमानसा न साधुमालोकवहं सहन्त्यहो।
दिवोऽङ्गणद्योतकृते कलावते मलीमसाऽमा[1] ददते न पद्धतिम्।।५४।।
माकन्देषु मिलन्मधुव्रतचयैर्दत्तं मरन्दे मनो
मूर्च्छन्तो मलयानिलाः प्रतिदिशं सन्तोषमातन्वते।

---

१. षड्भिर्मासै रुग्णस्य शाकलवणादि भोक्तुं प्रतिषिद्धस्य रोगिणो याञ्चेयम्।

२. विदुषामुपास्या संस्कृतभारती वैदेशिकदास्यकारणान्नाधुनाऽर्थकरी, संस्कृतविद्वांसोऽल्पवेतनभोगिन इति शोचमानस्य कवेरुद्गारः।

३. द्वितीयविश्वयुद्ध (Second World War) समये सिंगापुररणाङ्गणे जापानीयसैन्यैः पराभूतानि ब्रिटिश्-सैन्यानि श्रुत्वा निबद्धं पद्यमिदम्।

मोदन्ते नलिनीषु मत्तमधुपाः गुञ्जां श्रयन्ते पिकाः
शोभन्तेऽद्य लसल्लवङ्गलतिका वासन्तिका वासराः।।५५।।

निरुन्धन्नाम्नायं सुजनसमुदायं परिहरन्
पदस्थानां पुंसां वचननिचयो वल्गति बुधान्।
परं स्पष्टं दृष्टं भवति यदयं पञ्जरजुषां
समक्षे सिंहानां शिव शिव शिवानां कलकलः।।५६।।

यदुच्छिष्टं मुक्त्वा मनसि महदिष्टं सुखमगु-
र्यदीयच्छायायामनिशमिह या मोदमगमत्।
मृगाधीशेष्वेषु प्रचलितुमनीशेषु जरसा
समक्षे सिंहानां शिव शिव शिवानां कलकलः।।५७।।

त्वां व्योमेव जना विदन्ति विततं त्वय्यापतन्त्यापगा-
स्त्वं रत्नाकरतां दधासि वसुधा त्वय्येव संलीयते।
किन्तु श्रान्त-पिपासु-पान्थसविधे सर्वेयमुक्तिर्मुधा
पाथोधिर्जलधिः पयोधिरुदधिर्वारान्निधिर्वारिधिः।।५८।।

समस्तभूमण्डलमण्डनायिताः श्रुतिस्मृतिग्रन्थगणा यतोऽभवन्।
गिरां तु तादृङ् महिमा पुनर्भवे पुनर्भवेद् भारत! पूर्ववत् स नः।।५९।।

ननन्द या ह्यार्यवसुन्धरा पुरा मुकुन्दमेध्याङ्घ्रिसरोजसम्पदा।
प्रबन्धबन्दीकृतविक्रमामिमां स नन्दयेत्सम्प्रति नन्दनन्दनः।।६०।।

वासन्तिकी विकसिता हसिताम्बुजालिर्मल्ली मनस्विदलिता ललिता रसालाः।
कूजन्त्यमी परभृताः, सुखिताऽद्य भूमिर्भूयाद्वसन्ततिलका जगतः शिवाय।।६१।।

किं वा केवलभारतेऽत्र! भुवनेऽप्युज्जृम्भते देववाक्
क्रीडन्तीं कविकौशलेषु पुरतः प्रत्यक्षमीक्षस्व ताम्।
इत्थं सङ्गदितोऽपि शङ्खवदहो जल्पन् मृतां भारतीं
योद्धुं धावति यो, विरोद्धुमथ चेत् कस्तं निरोद्धुं क्षमः।।६२।।

---

१. मलिना अमा अमावास्या कलावते चन्द्राय मार्गं न ददाति।

मोदन्तेऽम्बुजिनीषु मत्तमधुपाः स्वैरं रमन्ते पिकाः
आलिङ्गन्ति लतास्तरून् प्रमुदिता माद्यन्त्यमी मारुताः।
इत्युद्याति मदे सुधारक! सखे! रोद्धुं क्षमस्त्वं नरान्
बोद्धुं यस्तु मदो हृदैव सुशकः कस्तं निरोद्धुं क्षमः।।६३।।

कालेऽत्र कालेजसमाप्तशिक्षैः प्रतीक्ष्यते केवलपारणैव।
हंहो, सदा स्वोदरपूरणार्था कीर्त्या कथं कल्पलतेव विद्या।।६४।।

कामान्प्रसूतेऽथ हिते नियुङ्क्ते सतां मते वर्तयते च नित्यम्।
सुखं विधत्ते तनुते सुकीर्तिं मतेह सत्कल्पलतेव विद्या।।६५।।

अस्ति, स्तः, सन्त्युपमितिकृते भूतले सूपमानाः
कन्दर्पोऽसौ, त्रिदशभिषजौ तौ च तेऽन्ये च देवाः।
किन्तु क्षोणीतलमुपगते भूपते! त्वय्युदीते
सोऽयं तौ ते त्वदुपमितये नास्ति न स्तो न सन्ति।।६६।।

युरोपयुद्धे रणदुर्मदस्य का वा कथा जर्मनभूमिपस्य।
विमानमारुह्य सुसज्जशस्त्रं स खे च[१] केऽहन् युगपन्नृशंसः।।६७।।

१. जर्मनसेनापतयो द्वितीये विश्वयुद्धे खे (व्योम्नि), के (जले) च युगपद् गतिशीलानां जलचारि-व्योमयानानां प्रयोगमकार्षुः, तद्गतशस्त्रैश्चा- घ्नन्।

* * *

साहित्याम्बुधिसंविहारनिपुणः शब्दागमज्ञाग्रणीः
छात्राध्यापनलग्नधीः शुचिमनाः काव्यप्रबन्धोद्धुरः।
छन्दःस्वेकघनाक्षरप्रियतमो देवर्षिवंशोज्ज्वलः
चित्रेऽयं प्रतिभाति भट्टमथुरानाथाभिधः कोविदः।।

भट्टश्रीमथुरानाथशास्त्री "मञ्जुनाथः"
(१८८९-१९६४)




राष्ट्रियसंस्कृतसंस्थानम्
मानितविश्वविद्यालयः
नवदेहली